कविवर श्रीरामेश्वरदयालुविरचितम्

# शान्तामङ्गलम्



संस्कृत-हिन्दी-व्याख्याकारः

शिवशङ्कर मिश्रः

शान्तामङ्गलम् नाटकस्यास्य कथावस्तु बाल्मीकि-रामायणात् स्वीकृतं विद्यते। नाट्यकारेणात्र दशरथ-सुमित्रातनयायाः श्रीरामचन्द्रस्य चानुजायाः शान्तायाः मांगल्यं वर्णितमतः शीर्षकं शान्तामंगलमिति स्वीकृतम्। नाटकेऽस्मिन् विलक्षणप्राकृतिकसौन्दर्यमलंकार-रस-समासादयः प्रचुरमात्रायामुपलभ्यन्ते। अतः नाटकमिदं नाटककारस्य अद्भुतप्रतिमां नितरां प्रकटयति। वस्तुतः अर्वाचीनेषु नाटकेषु नाटकोऽयमद्वितीयं वर्तते।

व्याख्याकार्यनिर्वाहाय व्याख्येयविषयस्य सम्यक्-ज्ञानमपेक्षितं भवतीति सिद्धान्तं मनसि निधाय मया शान्तामङ्गलम् इति नाटकस्य बारम्बारं मंथन कृतम्। आदिमध्यावसानेषु सूक्ष्मेक्षिकया पौर्वापर्यं पर्यालोच्य चाहमिदं निरणैषं यत् नाटकरचनायै या-या सामग्री अपेक्षिता भवति सा-सा, इह साकल्येन वरीवर्ति। अस्य नाटकस्योपरि साहित्यप्रोक्तानि सर्वाणि लक्षणानि अक्षरशो घटन्ते। पात्राणां परस्परं कथनोपकथनम् अभिनयानुकूलशब्दचयनम् स्वाभाविकघटनादिगुम्फनं च नाटकस्य कमनीयकलेवरं पुष्णाति।

अस्मिन् शान्तामङ्गलम् नाटके सप्तांकाः सन्ति। नान्दीपाठ, सन्धि, प्रस्तावना, सूत्रधार, विष्कम्भक, विदूषकांकावतार, नेपथ्य, भरतवाक्यादीनां यथायोग्य-स्थानेषु सन्निवेशःकृतः। अत्र नाटके राजा रोमपादो नायकः स च चन्द्रवंशीयः, धीरोदात्तः, प्रतिज्ञा-पालकश्च मनसा वाचा कर्मणा च किं वा प्राणव्ययेनापि प्रजारक्षां कर्तुं नाणुमात्रं सङ्कुचति। किं बहुना जाज्वल्यमानायां चितायामपि स्वकलेवरं होतुं स्तोकमपि न बिभेति। देशहिताय प्रणान् तृणाय मन्यमाना वेश्या अपि गहनगुहागिरिलताप्रतानवितानेषु श्वापदाकीर्णेषु निर्जनारण्येषु अविरामं भ्रामं-भ्रामं कर्त्तव्यनिष्ठामुपदिश्यन्ति। अत्र नाटके ईदृशा उपदेशा दीव्यन्ति ये न केवलं नाटकस्य महत्त्वपताका-मुद्धूनयन्ति, अपितु जनेषु देशभक्तिं जागरयित्वा पथभ्रष्टं समाजं प्रशस्तपथमपि प्रदर्शयन्ति।

फलतः सर्वेषां पात्राणां पवित्रं चरित्रं तथा भावपक्षकलापक्षमुपदेशपक्षाणां त्रिवेणीं चावलोक्य अदो निश्चप्रचं बोभवीति यद् इदं नाटकं सर्वथा पठनीयं अनुकरणीयं अभिनेयं चास्ति।

**ISBN : 978-81-7854-176-1    Rs. 650.00**

कविवर श्री रामेश्वरदयालुविरचितम्

# शान्तामङ्गलम्

(नाटकम्)

संस्कृतटीका-हिन्दीभाषानुवाद-
व्याख्यात्मकटिप्पणी-समीक्षात्मकभूमिकाकारः

डॉ० शिवशङ्कर मिश्रः




ईस्टर्न बुक लिंकर्स

दिल्ली : : (भारत)

# शिवसंकल्प

दृश्य श्रव्य के भेद से काव्य का द्वैविध्य शास्त्रप्रसिद्ध है, श्रव्य की अपेक्षा दृश्य अधिक प्रभावकारी है क्योंकि श्रवण के सापेक्ष दर्शन साक्षात् विषय होता है। नाटक दृश्य की ही विधा है। दृष्टा को भावातिविभोर कर देना ही दृश्य की विशेषता एवं पूर्णता है। यह विशेषता शान्तामङ्गलम् नाटक में अद्भुत है, इसलिए यह एक श्रेष्ठ एवं सफल नाटक है। इस नाटक का मूल उपजीव्य महर्षि वाल्मीकि विरचित आदिकाव्य वाल्मीकि रामायण है अतः इस नाटक का शास्त्रीय एवं आर्ष प्रामाण्य स्वतः सिद्ध है। नाटक के रचनाकार श्रीमान् कविवरेण्य मनीषीमूर्धन्य आचार्य श्री रामेश्वर दयालु शर्मा जी महान् परिश्रम करके समाज को साहित्य की एक अनुपम निधि प्रदान की है। मेरी शुभकामना है कि श्री दयालु जी इसी प्रकार साहित्य सृजन के माध्यम से समाज की सेवा में सतत् समर्पित रहें क्योंकि बुद्धिमान की बुद्धि का सर्वश्रेष्ठ सदुपयोग यही है।

दयालु जी ने शान्तामङ्गलम् नाटक को देववाणी संस्कृत की प्रसाद शैली में लिखा है जो अत्यन्त आकर्षक है फिर भी संस्कृत भाषा का ज्ञान न रखने वाले द्रष्टाओं को भी पर्याप्त आनन्द मिले एतदर्थ मेरे प्रिय शिष्य विद्वान् भविष्णु आचार्य डॉ. शिवशंकर मिश्र ने इसकी संस्कृत के सहित हिन्दी में भी सुललित व्याख्या की है, जो मूल नाटक के सर्वाङ्गीण अभिप्राय बोध में अतिशय उपादेय है। दर्शकगण संस्कृत भाषा के सम्यक् बोध के अभाव में भी इसका लाभ उठा सकेंगे, इसकी पूर्ण सम्भावना है। व्याख्याकार ने कार्याधिक्य की व्यस्तता होने पर भी व्याख्या में पर्याप्त ध्यान दिया है अतः डॉ. मिश्र को मेरा हार्दिक साधुवाद है। व्याख्याद्वय के साथ मूलनाटक का सर्वविध विस्तार हो जिससे दर्शकगण दर्शन एवं अध्ययन का समुचित लाभ उठाते हुए लेखक के बौद्धिक परिश्रम का समादर करें।

मेरा हार्दिक भाव है कि वाल्मीकि रामायण के प्रसंग में अद्भुत चमत्कार तथा नवाकर्षण कारक यह सारस्वत उपहार विद्वान् मनीषियों के मन को आनन्दित करते हुए अनुपम प्रतिष्ठा को प्राप्त हो, इस हृद्भावना तथा शुभाशीर्वाद के साथ-

संत श्री सच्चाबाबा महाराज
श्री सच्चा धाम
लक्ष्मणझूला, तपोवन, टि॰ग॰ (उत्तराखण्ड)

प्रो. वाचस्पति उपाध्याय
कुलपति
Prof. Vachaspati Upadhyaya
Vice-Chancellor



श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ
(मानित विश्वविद्यालय)
कुतुब इन्स्टीट्यूशनल एरिया, नई दिल्ली-110 016
Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeetha
(Deemed University)
Qutub Institutional Area, New Delhi-110016

# पुरोवाक्

साहित्याचार्य-व्याकरणाचार्य-साहित्यरत्न-एम.ए. उपाधिधारिणा ऋषिकेशस्य कालीकमली-संस्कृतमहाविद्यालये साहित्यविभागाध्यक्षपदमलङ्कुर्वाणेन श्रीमता रामेश्वरदयालुशर्माचार्येण प्रणीतं ''शान्तामङ्गलम्'' नाम नाटकं मया सावहितेन मनसा समधीत्य विज्ञातं यदिदं नाटकं वर्तमाने काले प्राकाश्यमुपेत्य महतीं प्रतिष्ठामवाप्स्यति महत्यां संस्कृतजगत्याम्।

एतस्मिन् प्राचीनार्वाचीननाट्यपरम्परयोः समन्वयः पदे-पदे दृक्पथमवतरति। यां शान्तां केवलमेकेन पदेन विद्वांसः कर्णपुटेन पीतवन्तः, यस्याः विपुलं वर्णनं न प्रमुखेषु ग्रन्थेषु लभ्यते सैव शान्ता खलु विदुषा नाटकप्रणेत्रा निजाप्रतिमप्रतिभाबलेन विस्तरं नीतातितरां ख्यातिं प्रतिष्ठां रसज्ञानामनुभवनीयतां चोपगतेति मन्ये।

अस्मिन्नपि काले विद्वांसः सन्ति ये सम्प्रति चमत्कारकारिणीमेतादृशीं निर्मितिं विधाय संस्कृतं संजीवयन्ति, परिवर्धयन्ति परिरक्षन्ति च। अस्मिन् शान्तामङ्गलम् नाटके यादृशी भाषा तादृशोभावः, यादृशो भावस्तादृशी भाषा इति भाषाभावयोर्मणिकाञ्चनसंयोगो न केवलमालोचकलोचननिचयं चोरयति अपितु भव्यभव्यभुरिभावभरितभंगिमापि सहृदयहृदयं जरीहर्ति। अस्मिन्नाटकें कविना पात्रोक्तानि लघुलघुवाक्यानि सरलसरल पद्यपदानि च रचितानि, येनेदं नाटकं मंचोपरि शतप्रतिशतं अभिनयोग्यतामर्हति। अस्य नाटकस्य गुणगणमालिनी शोभाशालिनी ललिताकलितारससम्बलिता शैली ऊषरहृदयानपि उर्वरी करोति।

अस्मदन्तेवासिना आयुष्मता डॉ॰ शिवशंकरमिश्रविरचिता संस्कृत-हिन्दी व्याख्या अतीव सरला, मूलमर्मप्रकाशिका च विद्योतते। अहं नाटकरचयितुर्रामेश्वर-दयालुशर्मणः, व्याख्याकर्तुः डॉ॰ शिवशंकरमिश्रस्य च नितराम् मांगल्यमभ्युदयञ्च कामये इति।

वाचस्पति उपाध्यायः

(वाचस्पति उपाध्यायः)

# ॥ नान्दीवाक् ॥

स्वातन्त्र्योत्तरसंस्कृतवाङ्मयं काव्यनाट्यकथासमीक्षात्मकं साम्प्रतिकेऽनेहसि कमपि विलक्षणमेव महिमानं बिभर्ति। आकाश्मीरात्केरलं यावदा च पञ्चनदात् अरुणाचलं यावच्छतमिताः कवयो नाट्यकाराः कथाकाराश्च नितरां व्यापृता दृश्यन्ते सुरगवीभाण्डागारशेवधिसंवर्धनाय। स्वोपज्ञे विंशशताब्दीसंस्कृतग्रंथसूचीपत्रो मया प्रायेणाऽधिविंशशताब्दं प्रणीतानां चतुस्सहस्रनव्यग्रन्थानां परिचयो दत्तः। अस्मन्मित्रवर्यैः प्रो. राधावल्लभत्रिपाठीभिरपि नव्यसंस्कृतवाङ्मयं सङ्कलितं स्वोपज्ञे ग्रन्थे। एतेन संस्कृताख्या मृता भाषेति भाषमाणानां निसर्गवैधेयानां सुरभारतीविद्वेषिणां दुर्मुखभञ्जनं जायत एव।

पुराणी सत्यपि चिरयुवतिः सुरगवीति सिद्धम्। अर्वाचीने वाङ्मयेऽस्या यद्यपि पञ्चाङ्कानि, सप्ताङ्कानि वा नाटकानि नैयून्यं भजन्ते। किञ्च एकाङ्कीन्येव प्राचुर्येणोपलभ्यन्ते। मयैव नाम प्रायेण पञ्चषष्टिमितानि लघुरूपकाणि प्रणीतानि यानि नाट्यपञ्चगव्य-नाट्यपञ्चामृत-चतुष्पथीय-रूपरुद्रीय-नाट्यसप्तपद-नाट्य नवग्रह-नाट्यनवरत्न-रूपविंशतिकाख्यैः ग्रंन्थाकारैः प्राकाश्यमुपगतानि।

बृहदाकृतीनि नाटकानि सम्प्रति कृच्छ्रेण निर्मीयन्ते। तत्राऽद्यं कारणं नाटकप्रणयनोचितप्रतिभाऽभावः। द्वितीयमपि कारणं, सचेतसां बृहन्नाटकानि प्रत्याकर्षणाभावः। प्राचीनकाले वार्तामात्रव्यवहृता आसन् राज्यभाषाः प्राकृताऽपरपदवाच्याः। परन्तु साहित्यसंरचनाया भाषा निखिलेऽपि भारते केवलं संस्कृतमेवाऽसीत्। अतएव प्रत्यग्रसाहित्यरसिका नवनवग्रन्थान्वेषणपरायणाः पर्यलक्ष्यन्त। नाट्यरसिका नूतन-नाट्यानि, महाकाव्यादिरसिका महाकाव्यादीनि मार्गयन्तिस्म।

परन्त्विदानीं विपर्यस्तं विपर्यस्तं सर्वम्। सम्प्रति प्रतिराज्यं तत्रत्यैव भाषा साहित्यभाषाऽपि वर्तते। मिथिलाञ्चलजाता मैथिलीसमाचारपत्रं पठन्ति, मैथिलीसाहित्यं पठन्ति। पञ्चनदीया गुर्जराश्चोला आन्ध्राः कलिङ्गाङ्गबङ्गाः सर्वेऽपि इदम्प्रथमतया स्वीयामेव भाषां वरयन्ति।

संस्कृतभाषिणः संस्कृताऽनुरागिणः संस्कृतप्रयोक्तारस्त्वल्पा एव। को नु संस्कृतसमाचारपत्रं पठेत्? को नु संस्कृतग्रंथान् परिशीलयेत् म्रष्टिमितान् संस्कृतज्ञान् विहाय।

एवं सत्यपि सुरवाग्वाङ्मयमहर्निशं प्रवर्धत एव। पूर्णाङ्कानि नाटकान्यपि प्रणीयन्ते। श्रीमदम्बिकादत्तव्यासानन्तरं मथुरानाथदीक्षितमूलशङ्करमाणिक्य-लालयाज्ञिकहरिदाससिद्धान्तवागीशानां प्रणेतृमयी समज्ञायाः परां कोटिं भेजे बृहन्नाटक-प्रणयनक्षेत्रे। ततश्चाधुनाऽपि डॉ. बी. आर. शास्त्री, प्रो. वी. राघवन, डॉ. रामाशीष, प्रो. राधावल्लभत्रिपाठी, डॉ. इच्छारामद्विवेदः, पाण्डेयः गोस्वामिबलभद्रप्रसादशास्त्री, प्रो. रेवाप्रसादद्विवेदी, डॉ. रमाकान्तशुक्लः, डॉ. त्रिपाठीभास्कराचार्यश्चेति कतिपये नाटककाराः प्रथन्ते।

मयाऽप्यभिराजराजेन्द्रेण प्रशान्तराघवं नाम सप्ताङ्कं लीलाभोजराजाख्यं पञ्चाङ्कञ्च नाटकं यथावसरं प्रणीतं यदिदानीं प्राकाश्यमुपनीयते।

भवतु, अनेनैव लघूपोद्घातेन शान्तामङ्गलं नामाभिनवं नाटकं तद्रचयितारं श्रीमद्रामेश्वरदयालुशर्माणञ्च पुरस्कर्तुं समीहे।

शान्तामङ्गलाभिधमिदं नाटकं प्रख्यातकोटिकमित्यत्र न क्वापि संशीतिः। यतो हि कथासूत्रमस्य वाल्मीकिरामायणतो गृहीतम्। ऋष्यशृङ्गोपाख्यानमेवाऽस्य नाटकस्य निस्यन्दभूतम्। साकेताऽधिपो दशरथः स्वकन्यां स्वसुहृदे निरपत्याय रोमपादाय प्रददे। अवृष्टिसन्तप्तेऽङ्गराज्ये रोमपादपालिते विभाण्डकपुत्र ऋष्यशृङ्गो लावण्यप्रतिभाभिर्वेशाङ्गनाभिरुपच्छन्दितो यथाकथञ्चिदानीयते येनाऽङ्गराज्ये महती जलवृष्टिर्जायते। ततश्चाङ्गाधिपती रोमपादस्स्वकन्यां शान्तामृष्यशृङ्गाय प्रयच्छति सहधर्मचरणायेति नाटकस्यास्य कथासंक्षेपः।

नाटकमिदं डॉ. शिवशङ्करमिश्रप्रणीतसंस्कृतहिन्दी व्याख्याभ्यां श्रीमण्डितं सदतीवोपयोगि पाण्डित्यविलसितं च जातमित्यतिरिच्य वक्तुमुत्सहे। युवा विद्वान् डॉ. शिवशङ्करो नव्यन्यायपरम्परायां विलक्षणां वैशारदीं दधानो निखिलेऽपि राष्ट्रे सवात्सल्यं प्रत्यभिज्ञायते। तदुपज्ञेयं संस्कृतटीका मूलश्लोकमर्मप्रकाशिनी क्वचिच्च रचनाकृद्धियमप्यतिशयाना परिलक्ष्यते। तदर्थं कृतभूरिविद्यापरिश्रमं टीकाकारमपि स्वाशिषा शुभाशंसया च सभाजयेऽहम्। हिन्दीटीकया पुनर्नाटकमिदं सर्वबोध्यं जातम्।

मदुपज्ञप्रशान्तराघवाऽनन्तरं द्वितीयमिदं रामकथाश्रितं सप्ताङ्कनाटकं प्रकाश्यत इति महते प्रमोदाय। नाटकमिदं न केवलं नाट्यशास्त्रीयविधि-परिपालनदृष्ट्यैव निरवद्यमाद्यन्तरमणीयञ्च तिष्ठत्यपितु कविकर्मदृष्ट्याऽपि रसगर्भनिर्भरं गुणालङ्कारप्रयोगग्राह्यं कल्पनाचारुत्वबिम्बविधानादिमण्डितं सहृदयाऽवधान हरिणनिबन्धनक्षमवागुराजाल जालकल्पं प्रतिभाति। सर्वत्राऽपि नाटके प्रासादिकी पदशय्या प्रभवति। यथा—

अविरलहरिभक्तिर्मानसे जायतां ते,
भुवि दिशि-दिशि कीर्तिश्चन्द्रिकावच्चकास्तु।
हरिरखिलपृथिव्यामाशुवृष्टिं तनोतु,
तिरयतु तव विघ्नान्-विघ्नराजो गणेशः।।

किञ्च, ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावतीति भवभूति-वचनमनुहरन् श्लोकोऽयं चित्तं प्रसह्य सम्मोहयते—

वाचो वदन्ति मनुजाः सततं यथेच्छं,
काश्चित् फलन्ति, न फलन्ति च तासु काश्चित्।
पूतात्मनां यमवताञ्च तपोधनानां,
वाचः फलन्ति शशिसूर्यविपर्ययेऽपि।।

एवं गुणविशिष्टमिदमभिनवं सारस्वतमुपायनं निश्चप्रचम् अर्वाचीन-संस्कृतकविताया गुणवत्तां संवर्धयिष्यतीति मम द्रढीयान् विश्वासः। संस्कृत-रचनाधर्मितापक्षधराः सहृदया अवश्यमेव शान्तामङ्गलाख्यमिदं रुचिरं नाटकमभिनन्दिष्यन्ति। यशस्विनाटककारं प्रति किमपरं कथयानि?

ऋष्यशृङ्गमुपेतायाः शान्ताया मङ्गलं यथा।
प्रज्ञावतः कवीन्द्रस्य तथा जायेत मङ्गलम्।।

सहृदयवशंवदः
**मिश्रोऽभिराजराजेन्द्रः**
कुलपतिचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयः

# ॥ विषयानुक्रम ॥



# भूमिका

## ॥रूपक मननम्॥

दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधामतमितिदर्पणकारनियमेन रसात्मकवाक्यस्य काव्यस्य द्वौ भेदौ भवतः। दृश्यं श्रव्यञ्च, अत्र जिज्ञासा जागर्ति यत् एतादृशं किं विभेदकं तत्वं यस्य प्रभावेण एकस्यापि काव्यस्य द्वैधीभावो निष्पद्यते ? यदि सूक्ष्मेक्षिकया वीक्ष्यते तदा उभयोः काव्यलक्षणयोर्भूयसी समानता प्रतीतिपथमवतरति।

1

विख्यातवृत्तस्य प्रतिपाद्यविषयस्य यादृशं वर्णनं श्रव्यकाव्ये क्रियते, तादृशमेव दृश्यकाव्येऽपि। यथा श्रव्यकाव्यं रामायणं मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य विख्यातं वृत्तं प्रतिपादयति, तथैव भवभूतिरचितमुत्तररामचरितनाटकमपि तस्यैव तद्वृत्तं प्रतिपादयतीत्यस्त्युभयोर्विख्यातवृत्तात्मकोऽभेदः।

2

लक्षणलक्षितान् मुखादीन् पञ्चसन्धीन् कवयो यथा श्रव्ये प्रयुञ्जन्ति तथैव दृश्येऽपि, अतोऽस्त्युभयोः सन्धिविषयकोऽभेदः।

3

ऋद्धिविलासादिगुणानपि कवीन्द्राः यथा श्रव्ये गुम्फन्ति तथैव दृश्येऽपि तान् गुम्फन्तो दरीदृश्यन्ते। अतो दृश्यश्रव्ययोर्विलासादिवर्णनविषयेऽप्येकरूपवत्ता सिध्यति।

4

श्रव्यकाव्यकर्त्तारो यथा नानाविभूतीनां निरूपणं कुर्वन्ति तथैव दृश्यकाव्यकर्त्तारोऽपि। अतएव नानाविभूतियुक्तत्वविशेषणमपि द्वयोः समानतामेव साधयति।

5

सुखदुःखानां समुद्भवो यथा रामायणे पदे-पदे वरीवर्ति तथैवाभिज्ञानशाकुन्तलेऽपि, अतः सुखदुःखविषयिणी रिरचयिषाप्युभयोः समतामेव प्रकटयति।

6

नानारसैः परिपूरितं यथा रामायणादिकं विद्यते तथैव शाकुन्तलादिकमपि, अतस्तयोर्नास्ति कश्चिद् भेदः।

7

प्रख्यातवंशस्य विशेषणविशिष्टस्य नायकस्य यादृशीं रूपरेखां कवीश्वराः श्रव्यकाव्ये निबध्नन्ति तादृशीमेव दृश्यकाव्येऽपि। दृश्यते यत् भानुवंशावतन्सं भगवन्तं श्रीरामचन्द्रमादिकवि रामायणे, जयग्रन्थे, भवभूतिरपि चोत्तरे तमेवाग्रन्थनात्। लोकाभिरामो रामश्च सूर्यवंशीयो धीरोदात्तः प्रतापशाली दिव्याऽदिव्यलक्षणलक्षितो गुणवान् नायकोऽस्ति। तस्योभयत्र प्रतिपादनमुभयोः काव्ययोरपृथक्भावं निश्चाययति।

अपरं चानयोरेव काव्ययोरुभौ कवी जगज्जननीं जनकनन्दिनीं सती शिरोमणि-माद्यशक्तिमयोनिजां रामवल्लभां श्रीसीतामेव नायिकात्वेनाऽवर्णयताम्।

8

रसनिबन्धनव्यवस्थापि दृश्यश्रव्ययोः समानतयैव लोचनगोचरीभवति। यथा रामायणे करुणरसः प्रधानपदवीमासीनस्तिष्ठति, अन्ये रसाश्च तदङ्गभावेन तिष्ठन्ति, तथैवोत्तरेऽपि तथात्वम्। अतस्तयोस्तत्समानमेव।

9

पात्राणां चयनम्, ऋतुप्रकृतीनां प्रणयनम्, सायं प्रातर्नदीसमुद्रनिर्झरवनगिरिमृगया कलहविरहव्यवहारादीनां सर्जनं च दृश्यश्रव्ययोः समानरूपेण कुर्वाणाः कवयो विलोक्यन्ते। अतो विनिगमनाऽभावादुभयोरैक्यं निश्चीयते।

10

यथा गद्यपद्यमिश्रितशैली माध्यमेन दृश्यकाव्यं कवयन्ति कवयः, तथैव श्रव्यकाव्यं चम्प्वादिकमपि मिश्रशैल्या रचयन्ति रचयितारः। नहीदं गद्यपद्यमिश्रणं चम्पूमात्र एव सीमितम्, अपितु वेदपुराणशास्त्रलघुकथादिष्वपि अस्यच्छटानरीनृत्यमाना वरीवृत्यते। विद्यते हि यजुर्वेदे गद्यपद्ययोः साङ्कर्यम् अनेन साङ्कर्येण शास्त्राण्यपि शून्यानि न सन्ति। पुराणवत् पञ्चतन्त्रादिकथास्वपि गद्यपद्यमिश्रणं चक्षूंषि प्रीणाति। आयुर्वेदादिग्रन्थेष्वप्यस्य मिश्रणस्य निवासो वर्तते, अतस्तयोः साम्यमेव।

11

ग्रन्थराट् महाभारतं यद्यपि पद्यप्रधानतामुद्योतयति, तथापि तत्र यत्र-तत्र गद्यबन्धोऽपि

स्वचमत्कारेण आलोचकलोचननिचयं चकितीकुर्वाणो विदग्धेष्वमन्दमानन्दं विदधानश्च प्रतीतिपथे पथिकायते। महाभारतं हि एकतो राजनीतिमितिहासं, भूगोलं, समाजशास्त्रं च वर्णयदुपलभ्यते, अपरस्तु हृदयहारिणीं चमत्कारिणीं काव्योपयोगिनीं रसचर्वणा-मनुभावयत् स्वं श्रव्यकाव्यात्मकत्वमपि दर्शयति। अतस्तस्य अपूर्वग्रन्थस्य गद्यपद्यमिश्रित-शैली स्वोत्तरभाविनः कवीनमुमादर्शपाठं पाठयति यत् इतिहासभूगोलादीनामपि विषयाः मिश्रशैल्या ग्रथितुं—शक्यन्ते। फलतः नेयं राजाज्ञा यदयं विषयः पद्येन प्रतिपादनीयः, अयं च गद्येनैव अयं च मिश्रणैव। सम्राट् कविः परमः स्वतन्त्रो बोभवीति, न स पद्यस्य क्रीतदासो भवति न गद्यस्य न वा मिश्रणस्य च। यया शैल्या यं विषयं प्रतिपिपादयिषति तयैव तं प्रतिपादयति। प्रतिभाशालिनः सिद्धरसाः कविपुङ्गवास्तु नियमश्रृङ्खलामपि भङ्क्त्वा दोषलेशरहितां कृतिं वितन्वन्ति। नहि कविशूरं रचना रचयति अपितु तेनैव सा रच्यते। एतेनादः फलितं यत् न हीदृशः कश्चिद् भूगोलगणितादेरपि विषयो यो मिश्रशैल्या कवयितुमशक्यः स्यात्। अतो गद्यपद्ययोः मिश्रशैल्यपि दृश्यश्रव्ययोरन्तरं व्यवच्छेत्तुं न क्षमते।

**12**

वेदानारभ्य लघुकथान्तानां श्रव्यग्रन्थानां, समेषां स्वप्नवासवदत्तादीनां दृश्यग्रन्थानां च मन्थनं रोमन्थनं च कृत्वा सारभूतोऽयं निष्कर्षः सम्पद्यते यत् दृश्यश्रव्ययोरुभयोः काव्ययोर्बाह्यवर्णने आन्तरवर्णने च वंहीयसी समानता समुल्लसति। शब्दार्थालङ्काराणामपि वर्णना उभयत्र तुल्यतामवगाहते। वर्ण्यवस्तुदृष्टिकोणेन आकारप्रकारचमत्कारदृष्ट्यापि नोभयोः कश्चिद्भेदः।

एवं पुनः स एव प्रश्नपिशाचो जागर्ति, यदुभयोः किं विभेदकं तत्त्वम्?

**(1)**

वस्तुतस्तु आरोप एवेदृशं तत्त्वबीजं यद्वशेन दृश्यश्रव्ययोः काव्ययोर्नितान्तं पार्थक्यं सिध्यति। अयम्भावः यथा मुखादौ पद्मादेरारोपः क्रियते तदारोपेण मुखादौ सौन्दर्याधिक्यं प्रतीतं भवति तथैव नाटके नटोऽपि स्वस्योपरि मुख्यनायकस्य, व्यवहारमारोपयति, अतस्तद्दृश्यकाव्यं रूपकमित्युच्यते। तदुक्तं दर्पणकारेण तद्रूपारोपात्तु रूपकमिति।

मन्दारमरन्देऽपीदमेवोक्तम्:-

यथा मुखादौ पद्मादेरारोपो रूपकं मतम्।
तथैव नायकारोपो नटे रूपकमुच्यते॥६१॥

एवं च रामादे रूपेण अन्यान् नटादीननुकरोतीति, रूपकमिति व्युत्पत्तिः। तथैव नाटयति रञ्जयति नर्तयित्वा सभ्यानां हृदयमिति नाटकपदस्य व्युत्पत्तिर्भवति। मुख्यनायकगताश्चतुर्धा व्यवहारा अभिनययोग्याः भवन्ति-अङ्गाभिनयः, शब्दाभिनयः वेशाभिनयः भावाभिनयश्च। अर्थात् अभिनयकर्त्ता नटः स्वं मुख्यनायकं मन्यमानः मुख्यनायकस्य सर्वं व्यवहारं सकलं क्रियाकलापं चानुकृत्यानुकृत्य मञ्चोपर्यभिनयति।

(2)

वेदादिषु मुख्यनायकस्य व्यवहारो न कुत्रापि नटादौ प्रतीतो भवति, तत्र तु केवलं मुख्यनायकस्यैव व्यवहृतयः शब्दद्वारेण प्रतिपाद्यन्ते। शब्दानां च चाक्षुषप्रत्यक्षीकरणं तु वायौ रूपमिव दुर्लभम्। वेदेषु स्वराणामत्यन्तं महत्त्वं वर्तते, स्वरस्खलनान्महाननर्थो भवति। वैदिकमन्त्रा राजान इव समर्थाः भवन्ति, येषामाज्ञा पौर्वापर्यप्रयोजनपर्यालोचनेन विनैव मनसा वाचा कर्मणा च माननीया सम्माननीया च बोभवीति। न तदाज्ञां कोऽपि मनसा अपि लङ्घयितुं शक्नोति। तदपलापस्तु वज्रपातं चर्कर्ति। तत्रापि पदघन क्रमजटादीनां जटिला नियमा अपि अक्षरशः पाल्यन्ते, अतो वेदेषु शब्दानामत्यन्तं प्राधान्यं भवति। सर्वे वर्णा वेदाञ्छ्रोतुमपि न अधिकृताः सन्ति किं नाम अध्येतुम्। वेदानां पारायणं निश्चितसमये निश्चितस्थान एव भवितुमर्हति। तज्ज्ञानाय व्याकरणकोशादीनां ज्ञानं नितान्तमावश्यकम्। वेदानां साफल्यं कर्मकाण्डेषु (अनुष्ठानेषु) एव सन्तिष्ठते। तैश्च सद्यः परिनिर्वृत्तिः फलप्राप्तिश्च असम्भवा। तत्राप्यपचारादीनां कर्तव्यताप्रपञ्चो नानेकेभ्यो जनेभ्यो रोचते, नापि च सर्वजनसाध्यो भवति। अतो दृश्यकाव्यस्य अतुलनीयतुलनां कर्त्तुं वेदा अपि न पारयन्ति।

(3)

शास्त्रेषु मतमतान्तरेण वेदानां तत्त्वविवेचनं विलसति तत्र यद्यप्यर्थस्य महती प्रधानता अधिविद्यते किन्तु सा शब्दाश्रितैव वर्तते। शब्दमन्तरेण तदधिगम आकाश कुसुमवत् दुर्लभः। अतस्तत्रापि श्रुतावेव प्राधान्यमधितिष्ठति। शब्दाधिष्ठितत्वाच्छ्र-व्यकाव्यवत् नहि रूपकसमतां ढौकते।

(4)

वेदान्तेषु संसारस्य मिथ्यात्वकथनपूर्वकं ब्रह्मणः सत्यत्वसाधनमेव प्रतिपाद्यविषयो विभ्राजते। उपनिषत्सु यान्युपाख्यानानि रोचक-रोचक प्रसङ्गाश्च मोदक-मोदक प्रश्नोत्तराणि च लसन्ति, तानि श्रोत्राण्येव तर्पयन्ति। क्रमबद्धताया अभावात् प्रसङ्गेषूत्पद्यमानाः विसङ्गतयः पाठकानां मनांस्युद्वेजयन्ति, ज्ञानप्रधानत्वादुपनिषद्भिर्मनोरञ्जनमत्यन्तं कठिनम्। तस्माच्छ्रव्यकाव्यवत् ता अपि नहि रूपकस्य तुल्यतां व्रजन्ति।

(5)

सांख्यन्यायदर्शने तत्तत्-गूढ़विषयाणामणोरणीयो महतो महीयो विश्लेषणं वरीवर्ति। अध्यात्मलक्ष्ये सूक्ष्मातिसूक्ष्मं रहस्यं तीक्ष्णातितीक्ष्णवीक्षया भूरिशोऽवर्णयत्, किन्तु एतेषां सांख्यादिदर्शनानां भाषा अतीव जटिला पारिभाषिकी च शब्दावली सूत्रात्मिका च प्रतिपादनशैली अस्ति। सा च अपश्चिमविपश्चितामपि चित्ते सहसा न प्रविशति, का चर्चा अन्येषाम् ? सैषा कर्कशा विषयवर्णनशैली जराजीर्णा नायिकेव सर्वेष्वेवाऽऽरूच्यं जनयति।

यद्यपि योगशास्त्रमस्ति अतीव लोकोपकारकं समाजहितसाधकं च किन्तु तस्य क्रियात्मकप्रयोगस्याऽधुनाप्यभावात्तज्ज्ञानं पुस्तकेष्वेव शयानं वर्तते। केवलमध्ययनादेव तस्य चमत्कारः श्रवणौ प्रसादयति। यदि स चमत्कारः सक्रियो भूत्वा चक्षूंष्यपि रञ्जयेत्, तदावश्यमेवायं नरो नारायणो भूत्वा इमं मृत्युलोकमपि स्वर्गलोकं रचयेत्। अतस्तदभावे श्रव्यकाव्यवत् योगशास्त्रमपि नहि रूपकस्य महिमानं स्प्रष्टुं शक्नोति।

(6)

पुराणेषु नानावताराणामुत्पत्तिस्थितिप्रलयानां भूगोलखगोलानां चतुर्दशभुवनादीनां घटाटोपेन वर्णनं विद्यते, तत्र तात्पर्यार्थप्रवाहोऽवाधगत्या समुज्जृम्भमाणो विराजते। आश्चर्यकारिणीनां तत्तल्लीलानां विस्तरेण उल्लेखः समुल्लसति। किन्तु हन्त भो ! नहि शब्दातिरिक्ता पुराणानामन्या काचिद्गतिः। कथावाचकानां श्रीमुखैरेव साधारणाः जनाः तत्स्थं यत्किञ्चिदानन्दमाकर्णयितुं क्षमन्ते। शब्दप्रधानतया श्रुतिश्रोतव्यैव तल्लीला न तु दृष्टिदृष्टव्या। तत्रापि दीर्घकालं यावत्प्रतिदिनं श्रावं-श्रावं चित्तमौदासीन्यमेति। पञ्चतन्त्रादिवत् चेतनाचेतनानां परस्परं कथनोपकथनानि प्रश्नोत्तराणि च पुराणेष्वपि विद्यमानानि सन्ति। अयोग्यत्वात्तानि असत्यानीव प्रतिभासमानानि उपहासपात्रतां प्रकटयन्ति, श्रव्यभव्यतामपि क्षपयन्ति। मध्ये-मध्ये उवाचादिपदानि क्रमबद्धतायां विजातीयतामप्युत्पादयन्ति। अत एव आरोपाभावाच्छ्रव्यकाव्यवत् पुराणराशिरपि रूपक-चमत्कारस्य तुलनामारोढुं नैवार्हति।

(7)

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथोपेतमितिहासं प्रचक्षते।।

इति लक्षणलक्षितं पूर्ववृत्तेन सह पुरुषार्थचतुष्टयप्रतिपादकं सन्दर्भमितिहास-मामनन्तीतिहासकाराः। स चेतिहासो घटितघटनानां नग्नवर्णनं यथार्थनिरूपणं

समुपस्थापयति। इतिहासः साहित्यिकसामग्रीभिर्न स्वात्मानं कणमात्रमपि सज्जयति सदाचारेण दुराचारेण वा शोभनमशोभनं फलं मिलतीत्यपि नोपदिशति, तथोपदेशस्तूहापोहद्वारा पाठकैः स्वयमेवावगमेलिमः। व्यतीतवृत्तस्य तावन्तमेवार्थं वर्णयित्वा इतिहासः स्वकीयां कृतकृत्यतां परिपूर्णतां च मत्वा विश्राम्यति। तस्यार्थस्य प्रमुखता शब्देनैव प्रकटते। तस्माद्धेतोरितिहासग्रन्था अपि नहि रूपकस्य कोटिमवगाहन्ते।

(8)

भूगोलखगोलयोरप्यर्थज्ञानं शब्दद्वारेणैवोत्पद्यते नहि नदीनदसिन्धुशैलदेशसौरादीनां विषयाणां शब्दमन्तरेण संवित्तिः कर्त्तुं शक्यते। उभयोर्ज्ञानं मानचित्राधिष्ठितमेवास्ति। तस्मात् वेदपुराणवत्तेषामपि विषयाः शब्दातिथयो भूत्वैव कर्णाकर्णनीयाः भवन्ति। चाक्षुषः स्पर्शस्तु तेषामलभ्यः। अतो रूपकस्यच्छायां तेऽपि न छुपन्ति।

(9)

महाकाव्यस्य श्रव्यत्वमत्यन्तमेव प्रसिद्धं वर्तते। किं बहुना श्रव्यकथनेन महाकाव्यानां रघुवंशादीनामेव ग्रहणं कुर्वन्ति जनाः। अत्र गद्यपद्ययोः प्रयोगं समानरूपेणाचरन्ति कवयः। लक्ष्यैकचक्षुष्काः कवयो गद्यपद्यमयं पुरातनं वाङ्मयं दर्शं-दर्शं नियमान् नियच्छन्ति। तथा-तथा व्यवहारांश्च व्यवहरन्ति। तत्र केषुचित् रघुवंशादिकाव्येषु पद्यान्येव प्रयुञ्जन्ति। कादम्बर्यादिषु च गद्यान्येव गुम्फन्ति। नलचम्पूप्रभृतिषु क्वचित् गद्यम् अर्थादुभयमिश्रणमेव ग्रथ्नन्ति। एषां काव्यानां पृथक्-पृथक् लक्षणानि सन्ति। तत्रापि नायकनायिकादीनां रूपरेखा अपि भिन्नाः-भिन्नाः विभाज्यन्ते। यद्यपि काव्यकलेवर-निर्माणाय प्रतिसर्गं पद्यादीनां मात्रा निर्धारिता अस्ति, तथापि काव्यस्यात्मा ध्वनिरिति सिद्धान्तस्य समेषां शिरोधार्यत्वात् "गतोऽस्तमर्कः, इत्यादावेकवाक्येऽपि काव्यत्वमक्षतमेवेष्यते। तत्र विषयवपुः परिष्कर्त्तुं कविरनिच्छन्नपि सशक्तशब्दानां चयने दत्तावधानो जायते। तेन हि अर्थगवेषणायां मन्दायमानत्वाच्छब्दपक्षस्य लब्धवलत्वाच्च तच्छ्रव्यत्वं सुतरामेव सम्पद्यते। तस्मात् वेदपुराणवत् काव्यान्यपि रूपककीर्तिमाप्तुं नहि शक्नुवन्ति।

(10)

अन्येऽपि ये लघुकथादयो ग्रन्थास्तेऽपि श्रव्यप्रधानत्वात् रूपकरविसन्मुखे दीपका इव निःशेषं मलिनाः भवन्ति।

(11)

रूपकं दृश्यप्रधानं भवति। दृशिर् धातो "ऋदुपधाच्चाक्लृपि चृतेः" इति सूत्रेण

क्यप् प्रत्ययेन दृश्यमिति सिद्ध्यति। द्रष्टुं योग्यं दृश्यमिति व्युत्पत्तिः। एवं च आरोप-पूर्वकं दृश्यत्वमेव रूपकस्यात्मेति सारांशः। रूपके श्रव्यतापि भवति किन्तु सा नेपथ्यादि मुखेनैव सम्भवति, तत्रापि यदा कदा। दर्शकाः दुष्प्रभावप्रभाविताः माभूवन्निति धिया निषिद्धदृश्यांशाः जवनिकाऽभ्यन्तरादेव शब्देन सूच्यन्ते। क्वचित्पात्र-प्रवेशमनावश्यकं मत्वा चूलिकान्तरादेव तद्वृत्तमुच्चस्वरेणोच्चार्यते। ईदृशं वृत्तं श्रोतुं मञ्चोपरि कश्चिन्न कश्चिदभिनेतावश्यमेव विद्यमानो भवति। दर्शकाश्च तं शब्दं शृण्वन्ति। किन्तु ईदृशानि कथनोपकथनानि स्तोकमात्राणि किं वा नगण्यानीव सन्ति। मञ्चोपरि विद्यमाना अभिनेतारो हावभावपूर्वकं यत् कथनोपकथनं कुर्वन्ति, तत्र तु सज्जितानि पात्राणि दर्शं-दर्शं तच्छब्दं शृण्वन्ति, किम्वा यदा कश्चिदभिनेता मञ्चोपरि प्रविशति तदा तच्छब्दश्रवणात्प्रागेव तद्दर्शनं कुर्वन्ति दर्शकाः। एवं यदा-यदा यो योऽभिनेता प्रविशति तिष्ठति निर्गच्छति वा तदा-तदा तस्य तस्योपरि दर्शकानां दृष्टिः प्रथमं पनीपत्यते। यदाभिनेता वदति तदा तस्य वदनं पश्यन्ति दर्शकाः, यदा पाणिं चालयति, तदा तस्य पाणिं पश्यन्ति, यदा पर्यटति तदा तस्य चरणौ, क्रोधकाले च तन्नयने, हास्यकाले तद्दन्तान् पश्यन्ति। एवं सर्वत्र दृष्टेरेव अग्रेसरत्वात् रूपकं दृश्यकाव्यं फलति।

(12)

रूपकमध्ये दृश्यधर्मः श्रव्यधर्मश्चेत्युभौ धर्मौ भवतः। तत्र सर्वावस्थास्वग्रेसरत्वात् रूपके दृश्यधर्मस्य नवनवतिप्रतिशतं स्थानं प्राधान्यं च निश्चप्रचं बोभवीति। सर्वविधेष्वभिनयेषु दृश्यत्वमेव महत्त्वं भजति। चूलिकाधाश्रितत्वात् दृश्यधर्माऽधिष्ठितत्वाच्च एकप्रतिशतस्तरेण श्रव्यधर्मोऽपि रूपके यथा तथा जीवमानस्तिष्ठति।

भावप्रधाननाटकेषु तु एकप्रतिशतमपि श्रव्यता न भवति, आकाशवाण्या श्रावितं प्रसारितं नाटकं तु पञ्चतन्त्रादिवच्छ्रव्यतामेवार्हति। नहि तत्र दृश्यधर्मस्य गन्धोऽपि लभ्यते। अतस्मिन् तत्त्वाऽऽरोपणमारोपः। आरोपस्तु परप्रदर्शनायैव भवति, नहि स्वस्मिन् विषये किमपि फलं जायते। किन्तु तद्भावभावितत्वादारोपकर्त्ता नटोऽपि दर्शक इव रसं स्वदते। यथा कश्चिदैन्द्रजालिकः इन्द्रजालस्य चमत्कारेण दर्शकान् विस्माययन् तत्प्रभावेण स्वयमपि विस्मयानन्दमनुभवति। यथा वा रुदन्तं बालकं प्रसादयितुं कश्चित्पिता तत्सन्मुखे विविधान् क्रीडाभिनयान् दर्शयति, तैरभिनयैर्न केवलं बालक एव प्रसीदति अपितु तत्पितापि परं प्रमोदमधिगच्छति, तादृशी तत्र शक्तिः। अनेन प्रकारेण आरोपितैः स्वक्रियाकलापैः दर्शकानानन्दयन्नपि नटः स्वयमप्यानन्दमनुभवति। तादृशी तत्र शक्तिः अन्यथा तत्कार्ये तत्प्रवृत्तयो न जायेरन्।

13

एवमभिनेता नटो दर्शकानानन्दयतीति कारणं भवति स्वयमप्यानन्दतीति कार्यमपि भवति। यथा कश्चित् योगी आत्मना आत्मानं पश्यतीत्यत्र दर्शनक्रियां प्रति सर्वथा स्वतन्त्रत्वादात्मैव कर्त्ता, तदीप्सिततमत्वादात्मैव कर्म च भवति, इतिवत् कार्यता कारणता च नट एव पर्यवस्यति। तेन च नटेऽभिनेतृत्वं द्रष्टृत्वमपि सन्तिष्ठत इति तात्पर्यम्। तस्माद् विलक्षणमेव काव्यतत्त्वं रूपकम्। फलत आरोपपूर्वको दृश्यधर्म एव रूपकस्य प्राणतत्त्वम्। अस्याद्भुतधर्मजनितचमत्कारस्य वेदपुराणादिषु गन्धोऽपि नास्ति। तत्र तु केवलं श्रवणेन्द्रियश्रवणीयं श्रव्यत्वमेव चमत्कुरुते। शब्दश्रवणमन्तरा तत्र अन्यच्छरणं किमपि नास्ति।

14

श्रव्यकाव्ये पञ्चसन्धीनां योजना आवश्यकी न वर्तते, नहि तदुपन्यासाय कवि-र्नियमेन निगदितोऽस्ति। सन्धीनां योजनया विनापि श्रव्यकाव्ये निर्वाहः कर्तुं शक्यते। रूपके तु सन्धीनां योजना अनिवार्या एव भवति। तैर्विना तु तत्र पूर्वापरघटनानां सन्धिसम्बन्धिनी जायमाना चारुतैव विलीयेत। तथैव यथास्थानं सन्ध्यङ्गानां योजनापि परमावश्यकी वरीवर्ति। अतएव आकरग्रन्थेषु सन्धीनामुपादेयता महत्ता च भूरि-भूरि प्रादर्शि।

15

रूपके नानारसनिबन्धनमव्यवधानेनावश्यं कर्त्तव्यं भवति। रसवतीनां घटनानां मध्येऽस्वाभाविकप्रसङ्गमुट्टङ्कयितुम् ईषदपि गुञ्जांशो (गुञ्जाइश) नास्ति। तत्र द्वयोः सरसघटनयोरपृथग् भावेन कृतं समुट्टङ्कनं चारूचमत्कृतिमावहति। यथा द्वयोः कल्लोलयोः परस्परं सङ्घट्टनेन जलमत्यन्तमुच्छलति तथैव रसवत्यो द्वयोर्घटनयोरनेकसरसघटनानां वा परस्परं सम्मेलनेनाद्भुत्चमत्कारोत्पद्यते। स एव सरसास्वादोऽद्भुत्चमत्कारो रूपके प्राणान् सञ्चार्य रोचकतां वर्धयति। एक सरस घटनाऽनन्तरं त्वरितमेव द्वितीयसरसघटनाप्रदर्शनेन रूपके उत्तिष्ठमानया प्रभावोत्पादकतयाऽवश्यमेव दर्शकहृदयेषु प्रवर्तना निवर्तना वा, जागर्ति। प्रसुप्तभावनोत्थापनमेव रूपकस्य परमं चरमं च प्रयोजनम्। यथा शान्तामङ्गलनाटकस्य सप्तमेऽङ्के यदा रोमपादो दग्धुं चितायां प्रविविक्षति तदा त्वरितमेव नायकेन ऋष्यश्रृङ्गस्य आगमनमसूचि। एतेन घटनाद्वयनिवेशेन दुःखकारकमपि समग्रं नाटकं सुखसन्दोहेन ओत-प्रोतं च भवति। अथवा शाकुन्तले नाटके सप्तमेऽङ्के यदा दुष्यन्तो देवलोकान्मृत्युलोकं प्रत्यागच्छति तदा हेमकूटपर्वते

तस्मै सहसा शकुन्तलाप्राप्तिर्भवति। उभयत्र सरसघटनयो-रव्यवधानेन (नैरन्तर्येण) विहितं समायोजनं रूपकभूमौ मनोबुद्धिवाणीद्वाराप्यगम्यां किन्तु सहृदयहृदयवेद्यां कामपूर्वां विच्छित्तिं वितनोति। अनेन विधानेन रूपके यत्र-यत्र अधिकाधिकमात्राभिः सरसघटना-नामव्यवहितं सञ्चयनं समुल्लसति तत्र-तत्र किल समुच्छलन्ती पीयूषवर्षिणी हृदयहर्षिणी जनाकर्षिणी लोकोत्तरा चर्वणा अधिविद्यत एव।

16

श्रव्यकाव्ये तु यत्र तत्र व्यवहितवर्णनाय कविर्विवशो भवति। तादृशवर्णनमन्तरा काव्यनियमनिर्वाहः काव्यकलेवरपूर्तिश्च नहि कर्त्तुं सम्भाव्यते। अतएव सफला अपि कवयोऽसफलप्रयत्नाः दृश्यन्तेऽव्यवहितवर्णने। यथा रघुवंशस्य द्वितीयसर्गे गोचारणे सिंहदिलीपयोर्घटनयोर्मध्ये सिंहदिलीपयोर्वार्ता। तत्र यावत्कालपर्यन्तं दिलीपसिंहयो-र्वार्तालापश्चलति, तावत्कालपर्यन्तं नन्दिनी आक्रान्तैव तिष्ठतीत्यस्वाभाविकमेव वर्णनम्।

तस्मात् दृश्यकाव्यश्रव्यकाव्ययोराकाशपातालवत् विशालमन्तरमस्ति।

17

रूपके सर्गाध्यायादिस्थाने अङ्क इति नामकरणं क्रियते, अङ्कशब्दस्तु पारिभाषिकः शब्दो वर्तते। तद्यथा-

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नविन्दुकः।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः॥
नानेकदिननिर्वर्त्य कथया संप्रयोजिता।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा॥
दूराह्वानं वधो युद्धं राजदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यूरतं तथा॥
दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत्।
शयनाधरपानादि नगराद्यवरोधनम्॥

स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः।
अन्तनिष्क्रान्तनिखिल पात्रोऽङ्क इति कीर्तितः॥

सा.द. 6/19

इति लक्षणलक्षितो रूपककथांशपरिच्छेदको भागः अङ्कपदेन व्यवह्रियते। अङ्के पात्राणां प्रवेशनिर्गमौ वारम्बारं भवतः। अङ्कसमाप्तौ तु रङ्गपीठात् सर्वाणि पात्राणि निर्गच्छन्ति।

18

श्रव्यकाव्ये तु कथांशपरिच्छेदको भागः सर्गशब्देन व्यह्रियते। सर्गनिबन्धनेनैव काव्यकलेवरं निष्पन्नं भवतीत्याशयः। सर्गशब्दश्चात्र पारिभाषिकशब्दो वर्तते पञ्चविंशति-पद्याऽन्यूनः शतत्रयपद्याऽनधिकोऽन्तिमपद्यपरिवर्तनशीलो ग्रन्थशरीरविभागः सर्गः। रूपकस्याङ्कमध्ये पद्यानामियत्ता तदन्तपरिवर्तनं च न नियम्यते। श्रव्यकाव्ये पात्राणां प्रवेशनिर्गमयोः सर्गान्ते सर्वपात्रनिर्गमनस्य वा नियामकता नास्ति। नापि चात्र रङ्गपीठ-रचनाया आवश्यकता।

19

रूपके पञ्चाऽन्यूनाः दशानधिका अङ्का नियम्यन्ते। महाकाव्ये तु अष्टाऽन्यूनाः सर्गाः नियम्यन्ते।

20

रूपके सूत्रधारः प्रविशति न तु काव्ये।

21

रूपके सूत्रधारेण सह नटादिभिः कृतोऽद्भुतवार्तालापो रूपकस्य प्रस्तावनां (आधारशिलां) स्थापयति। येन हि रूपकरथस्य स्वयमेव गतिप्रवाहः (सञ्चलनं) प्रारब्धो भवति, न तु श्रव्यकाव्ये, श्रव्ये तु कविरेव ग्रन्थमारभते।

22

रूपके नेपथ्यम्, विष्कम्भः, प्रवेशकः, अङ्कावतारः, गर्भाङ्कः, स्वगतम्, प्रकाशम्, पताका, मुद्रा, भरतवाक्यमित्यादीनां साहित्यिकतत्त्वानां स्थाने-स्थाने प्रयोगाः भवन्ति, श्रव्ये तु न।

23

रूपके नान्दीपाठ एव मुद्रालङ्काररीत्या कतिपयपात्राणां नामानि निर्दिश्यन्ते। श्रव्ये तु नेदृशी व्यवस्था।

24

रूपके आरम्भकाले नान्दीपाठः अवसाने तु भरतवाक्यमुल्लिख्यते। श्रव्येषु ग्रन्थारम्भे कविरेव मङ्गलाचरणं लिखति।

25

रूपकस्येतिवृत्तं लीलापदेन उच्यते। श्रव्यस्येतिवृत्तं तु कथापदेन।

26

रूपके तु निर्वाचिताः सरसाः सरसा एव घटना अभिनीयन्ते। श्रव्ये तु पूर्वापरकथाशृङ्खला योजनाय नीरसा अपि प्रसङ्गा उपन्यस्यन्ते।

27

रूपके अतीवसरला, अभिनयानुकूला, सर्वजनवेद्या, किम्वा गत्वरा शैली प्रयुज्यते। श्रव्ये तु परिष्कृता गूढ़ार्थपूर्णा वुधबुद्धिबोध्या शैली प्रयुज्यते।

28

रूपके स्त्रीपुरुषविदूषकविटचेटादीनां भाषा, भूषा, उच्चारणं च पृथक्-पृथक् भवति। श्रव्ये तु समानम्।

29

रूपके लघुलघूनि पदानि असमस्तवाक्यानि च प्रयोजकानि भवन्ति। श्रव्ये तु यदृच्छा।

30

रूपके रौद्रादावपि न कठोरपदावली न गौडीरीतिश्चेष्यते। श्रव्ये तु तादृग्स्थाने तादृग्प्रयोगे तु महान् दोषः।

31

रूपके यमकादीनां कठोरालङ्काराणां तथाऽलङ्काराधिक्यस्य वा निबन्धनं नितान्तं वर्जितम्। श्रव्ये तु तत्सत्त्वेऽपि न क्षतिः।

32

रूपके पारिभाषिक शब्दाननिबध्यन्ते श्रव्ये तु कदाचिन्निबध्यन्तेऽपि।

33

रूपके कविः स्वमुखेन कुत्रापि किमपि न वदति। सर्वत्र पात्राण्येव वदन्ति। श्रव्ये तु कविर्वदति कविकल्पितानि पात्राण्यपि वदन्ति।

34

रूपके चेतनाऽचेतनौ प्रत्यक्षं (अनारोपितौ) न वदतः। श्रव्ये तु तौ वदतः। यथा रघुवंशे नन्दिनीसिंहौ दिलीपं प्रति वदतः, कुमारसम्भवे हिमालयोऽपि ब्रूते। प्रथमं हि हिमालयस्य निर्जीवरूपेण स्थावरत्वं (अचेतनत्वं) प्रतिपाद्य पश्चात्तस्य मानवत्वप्रतिपादनं काव्यस्याऽसत्यतामस्वाभाविकतां च प्रकटयति। यद्यप्यचेतनेषु चैतन्यमयोग्येषु तद्योग्यत्वं मन्यमानाः कवयः तादृश्व्यवहारवर्णनप्रवणाश्च विलोक्यन्ते तथावर्णनेन काव्ये विच्छित्ति-वैशिष्ट्यमप्युत्पद्यते, तथापि रूपके तादृक्दृश्यानां प्रत्यक्षोपन्यासात् स्वरसभङ्गात्मको दोष एव। आरोप्याभिनये तु नहि कश्चिद् दोषः।

35

रूपके चतुर्विधानामभिनयानां माध्यमेन दृश्यं (हावभावादिकं) प्रदर्शयन्ति। मनोगतभावान् सङ्केतेन व्यञ्जयन्ति। श्रव्ये तु पुराणादिवत् शब्दमाध्यमेनैव कथयन्ति।

36

रूपके दर्शकाः दृग्भिः दृश्यं पश्यन्तोऽपि श्रवणैरपि तद् विश्लेषणं शृण्वन्ति, वार्तामाकर्णयन्तो वार्ताकारानपि पश्यन्ति, गीतवाद्यामृतं श्रोत्राञ्जलिभिः पिवन्तोऽपि चक्षुर्भिर्गायकान् वादकान् अपि विलोकयन्ति। मध्ये-मध्ये नृत्यच्छटां, नर्तकानां वेशभूषां च दर्शं-दर्शं भावुकाः वेद्यान्तरस्पर्शशून्यं ब्रह्मानन्दसहोदरममन्दमानन्दं विन्दन्ति। श्रव्ये तु केवलं कथानन्दं शृण्वन्त्येव।

37

रूपके गीतं वाद्यं नृत्यं चेति त्रयाणां चमत्काराणां त्रिवेणी न केवलं सरस-हृदयानेव अपितूषरहृदयानपि क्लेदयति। पात्राणां भाषाभूषाभावभङ्गिमादिसामग्री अपूर्वां छटाघटां तनोत्येव। तत्रापि सङ्गीतस्य मधुमधुरो ध्वनिः कर्णकुहरे प्रविश्य आत्मान-मुन्मादयन् निर्भरमाप्याययति। नहीदृशी रसतुन्दिला आनन्दलहरी श्रव्ये लब्धुं शक्यते।

38

रूपके प्रतिपाद्यमानलीलायाः निरायासेन दर्शनं, श्रव्ये तु पाण्डित्यशक्त्या शब्दकवचभेदनानन्तरमेव तस्याः मानसी प्रतीतिर्जायते नतु तद्दर्शनम्।

39

रूपकेऽतीतानागताः घटनाः पुरोवर्तमाना इव नयनपथेऽवतरन्ति, अतएव तच्चर्वणाया रसस्फीतिः यौवनमारोहन्ती नवोढा नायिकेव क्षणे-क्षणे नवं नवमास्वाद-मनुभावयति। श्रव्ये तु तदभावात्तन्न्यूनत्वं भवत्येव।

40

रूपके तु प्रतिपाद्यविषयको रसो मृद्वीकारस इव श्रमवर्जमास्वादयोग्यतामर्हति, श्रव्ये तु नारिकेलफलवत् श्रमसाध्यतामृच्छति।

41

रूपके दृश्यश्रव्यांशौ मुख्यगौणौ भूत्वा तिष्ठतः। तत्र दृश्यांशमहिम्ना वधिरा अपि जनाश्चक्षुर्भिर्दृश्यं दर्शं-दर्शं परं प्रहर्षं प्राप्नुवन्ति, श्रव्यांशमहिम्नातु अन्धा अपि जनाः श्रवणैः कथनोपकथनं श्रावं-श्रावमविरामं विश्रामं लभन्ते। उभयेन्द्रियसम्पन्नानामानन्दसीमा तु मनसो वचसो धियोऽप्यगम्या भवति। श्रव्यकाव्यानन्दस्य प्राप्तिस्तु वधिराणां कृते सिकतातैलवद् दुर्लभा।

42

रूपके लीलामृतं न केवलं नयनाञ्जलिपुटपेयमस्ति अपितु श्रवणाञ्जलिपुट-पेयमप्यस्ति। अतस्तत्राधिकाधिकं रमते मनः।

43

शरीरमध्ये सर्वेष्विन्द्रियेषु श्रवणनयनयोर्महत्त्वपूर्णं स्थानं वर्तते। यतोहि नामरूपात्मकोऽयं संसारः तत्रत्यः कश्चिदपि पदार्थः श्रवणनयनाभ्यामेव श्रोतुं द्रष्टुं च शक्यते। तत्रापि यदि कश्चिद् प्रथमं कस्यापि विलक्षणपदार्थस्य श्रवणेन्द्रियद्वारा नामगुणादिकं शृणोति तच्छ्रवणमात्रेणैव तज्जिज्ञासा नैव शाम्यति, अपितु तदानीमेव तस्य दिदृक्षारूपिणी आकाङ्क्षा हृदयागारे उदेति, यदा नयनाभ्यां तं पश्यति, तदा तदाकाङ्क्षा पूर्यते। अतः श्रवणापेक्षया नयनयोरधिकं महत्त्वं प्रतिपद्यते। अर्थात् केवलं श्रुत्वा न हि विश्वसिति नापि च तुष्यति, दृष्ट्वा तूभयं जायते। अतः श्रव्यकाव्यापेक्षया दृश्यकाव्यस्य वरिमा गरिमा च स्वत एव अधिकायते। तेन तदुपयोगोऽपि समाजे सततं समेधते।

44

रूपके श्रव्यदृश्ययोरुभयोश्चमत्कारयोरद्भुतो मणिकाञ्चनसंयोगः कामपूर्वां विच्छित्तिं विकिरत्येव, तत्रापि सङ्गीतपुटः, तत्रापि नेपथ्यसज्जा, तत्रापि हावभावादिप्रदर्शनं, तत्रापि वहलप्रकाशस्य चाकचिक्यं, तत्रापि मञ्चस्य विचित्रं सौन्दर्यम्, तत्रापि विदूषाकादीनां व्यङ्ग्यवचनं, चमत्कृतवेषभूषणं चेत्युत्तरोत्तरं द्योतमाना दिव्यद्युतिरशब्दवेद्यमनवद्यं हृद्यं किं वा अनुभवैकगम्यं पराह्लादं प्रस्तौति। तस्माच्छ्र्व्यकाव्यश्रवणादुद्विग्नमानसाः सन्मानुषाः ससङ्गीतं रूपकरसं पायं-पायं कथं नानन्दोत्फुल्लाः भवन्तु।

45

श्रव्यरसानुभूतये शब्दार्थयोः परिपक्वज्ञानस्य भूयसी आवश्यकता बोभवीति तयो-रेकस्याप्यभावे रसानुभूतिः शशविषाणवत् दुर्लभा, अतः श्रव्यं नाम अपण्डितानामलभ्यं तत्त्वमस्ति।

रूपके तु अभिनयमाहात्म्येन स्वयमेवशब्दार्थयोरुपस्थितिराविर्भवति।

अतएव रूपकस्य तुलना (सजीवेन) चित्रेण सह क्रियते। उक्तं च काव्यालङ्कारसूत्रे वामनेन-सन्दर्भेषु दशरूपकं श्रेयः तद्धि चित्रं चित्रपटवत् विशेष साकल्यात् इति। यथा विविधैर्वर्णैः विरचितं चित्रमालोचकानां चित्तं स्वच्छविपुञ्जेन सद्य एव आनन्दचकितं चर्कर्ति, तथैव वेषभूषासङ्गीतादिविधानैर्रूपकमपि दर्शकानां हृत्कलिकां रसवर्षणैरविलम्बमभ्युक्षति। रूपकेऽभिनयप्रभावेण तौर्यत्रिकनिनादेन च रसात्मकविषयस्य अखिलं वातावरणं स्वयमेवानुरागजनकं जाजायते। न तु कल्पना शक्त्या उपस्थाप्यते। अतएव साक्षरे निरक्षरे च समाजे श्रव्यकाव्यापेक्षया दृश्यकाव्यस्य प्रचुरः प्रचारः प्रमुखः प्रसारश्च चकास्ति। रूपकस्य चतुर्मुखी समेधमाना उपादेयता एव रूपकं शीर्षस्थाने प्रतिष्ठापयति।

46

वेदानामुपयोगिता द्विजेष्वेव पञ्जीकृता तत्पैतृकसम्पत्तिर्वर्वर्ति, नेतरवर्णानां तत्राधिकारः। रूपकाणामुपयोगस्तु सर्वैरेव वर्णैः कर्त्तुं शक्यते। अत एव नाट्यशास्त्रे प्राह भगवान् भरतः नाटकं सार्ववर्णिकवेद इति। काव्यमीमांसायां राजशेखरोऽप्याह-वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो नाट्यवेद इति, सार्वजनिक मनोरञ्जनात्मकमुपदेशसाधनमिति यावत्।

47

रूपकस्य प्रतिपाद्यविषयो न ससीमो भवति, अत्र मञ्चपीठोपरि त्रयाणां लोकानां

चतुर्दशभुवनानां सप्तद्वीपानां नवखण्डानामखण्डब्रह्माण्डमण्डलानां भूतभव्यानां समेषां भावानां च लोचनगोचरता सुसुखं कर्त्तुं पार्यते। सर्वं च अभिनेतुं शक्यते।

48

इदं हि रूपकं स्वकीयेन अचलप्रभावेण अशक्तेषु शक्तिम्, अलसेषु स्फूर्तिम्, अशूरेषूत्साहम्, अज्ञेषु ज्ञानम्, अवुधेषु वैदुष्यम्, विषयासक्तेषु वैराग्यम्, अकर्मण्येषु कर्त्तव्यम्, नीरसेषु स्वारस्यम्, अचेतनेषु चैतन्यम् च सञ्चारयति। जड़चेतनानां सुखदुःखावस्थासु कीदृश्यः प्रवृत्तयश्चेष्टाश्च कीदृश्यः समुद्भवन्ति, तेषां तदवस्थासु संस्काराः विचाराश्च केन-केन प्रकारेण परिवर्तन्ते भयक्रोधरागादीनामवसरेषु प्राणिनामन्तःकरणे कीदृशाः विकारा उत्पद्यन्ते जन्ममरणकाले जायमानानां म्रियमाणानां विचेष्टमानानां जीवानां तद्दर्शकानां चानुभूतयः आकूतयश्च हृदयागारे कया-कया गत्याऽऽविर्भवन्ति कया च तिरोभवन्ति। एतेषां सर्वेषां तत्त्वानां स्वरूपं रूपकरीत्या प्रत्यक्षीकर्त्तुं शक्यते।

49

एतस्मिन् विश्वस्मिन् नहीदृशी काचित्कला, नहीदृशः कश्चिद् विषयः, नहीदृशं किमपि कर्त्तव्यं यत् रूपकमध्येऽभिनयनयेन नयनैः साक्षाद् द्रष्टुं न शक्यते। तदुक्तं भरतेन–

न तच्छिल्पं न तच्छास्त्रं, न सा विद्या न सा कला।
न तत्कर्म न योगोऽसौ, नाटके यन्न दृश्यते।।

अर्थादिदं रूपकं विश्वस्य समग्रं रूपं दर्शकानामग्रे चित्रयति। रूपककलाप्रभावो निराकारमपि पदार्थं साकारं कृत्वा दर्शयति।

50

रूपकं हि कान्ताकृतहावभाववत् पूर्णं मनोरञ्जनं कारं-कारं दर्शकानां जीवनचरित्रं सरलरीत्या परमप्रीत्या च परिवर्तयति, पवित्रयति च। इदं निराशातिमिरमपास्य आशाकिरणं प्रकाशयति। इदं मानसीमुद्विग्नतां किंकर्त्तव्यविमूढ़तां च निरास्य कर्त्तव्यपथं समुद्भासयति। एतत्तु अज्ञातकलानामपि प्रयोगविधिं शिक्षयित्वा अदृष्टानामश्रुतानामपि देशनरनगरतरुसागरशैलजीवजन्तूनां च हस्तामलकवन्मूर्तं दर्शनं कारयति। इदं निरक्षराणामपि जाड्यं जरीहर्ति। एतद्धि विविधकुसुमकुसुमितमुपवनमिव स्वकान्तिकदम्बेन चक्षूंषि रञ्जयित्वा सौरभ्येनात्मानमप्याघ्रापयति। इदमेव कारणं यच्छ्रव्यापेक्षया दृश्येष्वधिकमहमहमिकया जना प्रवर्तमानाः दृश्यन्ते। राजानमारभ्य रङ्कपर्यन्तम्,

आपण्डितात् आपामरम्, आबालादावृद्धम् च सर्वेभ्यो जनेभ्य इयं रूपकलीला आनखशिखम् शतप्रतिशतं च रोचते।

51

रूपकलीलायामीदृशं वैशिष्ट्यमस्ति यत् सा लीला अश्रुतं श्रावयति, अदृष्टं दर्शयति, अज्ञातं ज्ञापयति, अननुभूतमनुभावयति, वियुक्तं संयोजयति, विस्मृतं स्मारयति, शयानं जागरयति, जाग्रतं चेतयति, चेतयन्तं शिक्षयति च। दृश्यलीलाप्रभावेण मनोविज्ञानरीत्या बहवो रोगाः स्वत एव प्रणश्यन्ति। रूपकलीलाया अक्षुण्णप्रभावो दर्शकानां हृदयस्थलेषु अचलं प्रहरति, येन तेषां मनोवृत्तयः परिवर्त्य तान् रोगान्मोचयन्ति।

52

अद्यतने वैज्ञानिकयुगे तु रूपकाणां (नाटकानां) महती आवश्यकता भूयसी उपादेयता च वरीवर्ति। विविधानामस्त्रशस्त्रनिर्माणविधानम्, तेषां सञ्चालनम्, भव्यभवनानां विरचनम्, दुर्गमघाटीषु, दुस्तरनदीषु च तत्क्षणं सेतूनां तटानां वा बन्धनम्, तेषां विध्वंसनं च वायुयानेन उड्डीय अरिनगरेषु, सैन्यशिविरेषु विस्फोटपातनम्, उग्रवादिदलेषु दस्युवारेषु च हस्तगोलकप्रक्षेपणम्, शत्रुक्षेत्रेषु अग्निचूर्णवर्षणम्, वाष्पास्त्रक्षेपेण आतङ्कवारणम्, शतघ्नीप्रहारैररिदुर्गविदारणम्, गगनभेदकैः प्रक्षेपास्त्रैर्विमानभञ्जनम्, भुशुण्डीनामाघातैर्जलपोतविखण्डनम्, टङ्काघातैरुच्चावचभूमीनामुत्तुङ्गशृङ्गाणां हिमशैलस्थलीनां च समीकरणम्, धातुतैलादीनां खनिजपदार्थानामनुसन्धानाय भूपर्वतखननम्, रत्नानामन्वेषणाय, मत्स्यानां मारणाय, जलगर्भविज्ञानाय च सागरावगाहनम्, पर्वतेष्वारोहणम्, कृषिक्षेत्रेषु हलप्रवहणम्, पटलेन गरिष्ठलोष्ठमर्दनम्, ऊषराणामुर्वरीकरणम्, कर्कशक्षेत्राणां कोमलकरणम्, विविधबीजशोधनम्, बीजवपनम्, घासवूसादीनां निरायणम्, सस्यसेचनम्, कृषियन्त्ररक्षणम्, कीटकिट्टादिनाशाय औषधाऽभ्युक्षणम्, सस्यानां कर्त्तनम्, सस्यानां मर्दनम्, कुट्टनम्, पेषणम्, कोष्ठागारेषु अन्नभण्डारणम्, घुणादिभिस्तद्रक्षणम्, वनस्पतिरोपणम्, वनस्पतीनां संकरीकरणम्, पशूनां पालनम्, गोमयेन संयन्त्रचालनम्, इक्षुरसैर्गुड़पाचनम्, आसवारिष्टवटीचूर्णा-वलेहाञ्जनमञ्जनतैलादीनामौषधीनां निर्माणम् तच्छोधनम्, तदुपयोजनम्, सूचीभेदनम्, शवच्छेदनम्, शल्यचिकित्सनम्, इतराङ्गप्रत्यारोपणम्, रोगाणां रोगिणां च ज्ञानम्, तत्परीक्षणम् तन्निदानं च, वनस्पतीनां पत्रपुष्पफलमूलशाखादीनां गुणदोषज्ञानम्, तेषामाकारप्रकारादिपरिचयनम्, गर्भधारणम्, गर्भपालनम्, गर्भपातनम्, शिशुरक्षणम्, पर्यावरणस्य निर्मलीकरणम्, तत्तद्विषयाणामध्ययनमध्यापनम्, भोजनपाचनम्, चक्रेण

तर्कुद्वारा वा कार्पासस्य सूत्रीकरणम्, वस्त्रवयनम्, चक्रचीवरदण्डादिसहयोगेन कुम्भादिपात्राणां सर्जनम्, वृक्षारोपणम्, परिवारनियोजनम्, एतानि सर्वाणि कार्याणि रूपकाभिनयेन सरलोपायेन ज्ञातुं ज्ञापयितुं च शक्यन्ते।

53

भूचराणां, खेचराणां, वारिचराणां, निशाचराणां, दिवाचराणां, वनेचराणां च आकृति-प्रकृतिपरिज्ञानाय, परराष्ट्रं निपात्य स्वराष्ट्रस्योत्थानाय, निर्वाचनावसरेषु भ्रामं-भ्रामं स्वपक्षस्य प्रबलप्रचाराय, प्रचण्डप्रसाराय, विपक्षप्रचारस्य खण्डनाय, स्वसिद्धान्तमण्डनाय, पुञ्जपतिपुञ्जैर्निर्धननिर्बलवर्गस्य शोषणाय, शासकैः क्रियमाण-राजनीतिक्रीड़ादर्शनाय, सभातो वहिर्गमनशिक्षणाय, कर्मचराणां कर्मस्थगनबोधाय, शिक्षकाणामान्दोलनदर्शनाय, गगनभेदकनिन्दाघोषणोपदेशाय, कम्पकारकप्रदर्शनप्रदर्शनाय, विरोधज्ञापकानिष्टध्वजोत्तोलनाय च रूपकाणामत्यन्तमावश्यकताद्यश्वीनमस्ति।

54

मारणम्, त्रोटनम्, विस्फोटनम्, लुण्ठनम्, ताडनम् वहिष्करणम् युद्धप्रयाणम् निग्रहणम्, अवर्षणम्, जलप्लावनम्, दुर्भिक्षपतनम्, सिंहानां गर्जनम्, गजानां चीत्करणम्, भुजङ्गानां फूत्करणम्, भल्लूकानां शूल्यकरणम्, शूकराणां घुर्घुरीकरणम्, विहङ्गानां कलकलीकरणम्, मर्कटानां कूर्दनम्, शशकानां समुच्छलनम्, शृगालानां रोदनम्, मयूराणां नर्तनम्, कुरङ्गाणां विहरणम्, व्याधानामाखेटनम्, शैलशिखरकन्दरकान्तार-कुटीरादिषु तपोनिष्ठतापसदर्शनम्, रात्रिदिवसानाम्, पक्षमासानाम्, ऋतुवर्षाणाम्, युगकल्पानां च परिवर्तनम्, तीर्थकुम्भमेलकम्, सुर्यचन्द्रादीनां ग्रहणम्, तेषामुदयास्तम्, धूमकेत्वादीनामाविर्भवनम्, उल्कापतनम्, तडित्पतनम्, भूमिकम्पनम्, गुरुत्वलघुत्वा-कर्षणक्षेपणम्, आसनव्यायामादिभिः शरीरस्याकुञ्चनप्रसारणम्, उल्लङ्घनं, तरणं च रूपकाभिनयेन स्पष्टं द्रष्टुं शक्यते।

55

वाणिज्यरीत्या कृत्रिमप्रीत्या च ग्राहकवञ्चनम्, धार्मिकरीत्या परोपकरणम्, यौगिकरीत्या चमत्कारप्रदर्शनम्, राजनीत्या प्रजापालनम्, पाण्डित्यपद्धत्या पूजायज्ञा-नुष्ठानम्, यन्त्रमन्त्रतन्त्रादिप्रयोगेण भूतप्रेतपिशाचयोगिनीपूतनावातोन्मादादीनां कुसाध्यरोगाणामपहरणम्, पुण्यपापजनितस्वर्गनरकरचितविविधयोनिजातसुखदुःखप्रपञ्चम्, अर्थात् यावद् वस्तुजालम् तावत्सर्वमेव रङ्गमञ्चोपरि साकाररूपेण प्रत्यक्षीकर्त्तुं शक्नोति दर्शकः। किं बहुना नाटकं दर्शं-दर्शं द्रष्टारः स्वयमपि नाटकमभिनेतुं शक्नुवन्ति।

56

नाटकदर्शनकाले दर्शकेभ्य औदासीन्यं न बाधते, न च उद्विग्नता ग्लायति, नाऽऽलस्यं म्लायति, न च निद्रा लगति, न च क्षुधा क्षोभयति, न च पिपासा शोणयति, न हि पुत्रकलत्रचिन्ता जरयति, न च मित्रवियोगो व्यथयति, नापि कुटुम्बस्मृतिः क्लिश्नाति, नापि च स्वस्य परस्य ध्यानं व्याकुलयति। तत्र रङ्गशालायां विराजमानाः दर्शकास्तु केवलम् अगाधे आनन्दसागरे निमज्ज्य (ब्रूडित्वा) अबुद्धिवेद्यं वाङ्मनसातीतं द्वन्द्वशून्यं विगलितविश्ववेद्यान्तरं निरतिशयं कमप्यनिर्वचनीयमास्वाद-मनुभवन्ति। अत एव गुणगणमण्डिताः प्रकाण्डाः पण्डिताः मुक्तकण्ठेन रूपकं (नाटकं) प्रशंसन्ति-काव्येषु नाटकं रम्यमिति।

अभिनयदर्शकानां चित्तमीर्ष्याकालुष्यरहितम्, आधिव्याधिविरहितम्, असद्विचार विनिर्मुक्तं भूत्वा स्वस्थं स्वच्छमुत्साहसम्पन्नं च बोभूयते। वेदपुराणकाव्येतिहासादीनां श्रव्यग्रन्थानां वास्तविकी सफलता नाटकेष्वेव परिसमाप्नोति। कवीनां प्रतिभापरीक्षणं नाटकेष्वेव जायते। कवयो नाट्यकलां प्रणीय एव स्वकवित्वसाफल्यं मन्यन्ते। अतएव आमनन्ति विपश्चितः यत् नाटकान्तं कवित्वमिति। नाटकं नाम वेदानां सारभूतं नवनीतं वदन्ति नाटककाराः। तदुवाच भगवान् भरतः-

जग्राह पाठमृगवेदात्, सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान्, रसानाथर्वणादपि।। 17।।

58

नाटकीयमितिवृत्तं वेदपुराणादिभ्यः संगृह्यते अतएव वेदपुराणादिव्यूह एव नाटकानां जन्मदाता सिद्ध्यति। किन्तु प्रखरप्रतिभापुञ्जपुटप्रतापेन तदेवेतिवृत्तं परिवर्त्य परिवर्ध्य च- कवीश्वरा अभिनयादिवैशिष्ट्येन तथा-तथा परिष्कुर्वन्ति यथा वर्ण्यवस्तुशरीरं वेदाद्यपेक्षयाप्यधिकादधिकं चमत्कृतं हृदयावर्जकं सर्वलोकप्रियं च भवतीत्यस्ति श्रव्यकाव्येभ्यः पृथक्सत्ता दृश्यकाव्यानाम्।

59

येषां पदार्थानां छायापि न दृश्यते, गन्धोऽपि न घ्रायते, नामापि न निशम्यते, रूपरेखापि न ज्ञायते, गुणोऽपि नानुमीयते, रसोऽपि नास्वाद्यते, त एव पदार्थाः नाटकनैपुण्येन पुरोवर्तमाना इव, सन्मुखे क्रीडन्त इव, परितो हसन्त इव, मञ्चोपरि गायन्त इव, पार्श्वे नृत्यन्त इव, हर्षेणोच्छलन्त इव, सामाजिकैः सहाऽऽलपन्त इव, दर्शकैः सह व्यवहरन्त इव, अमृतवृष्टिं कुर्वन्त इव, रोमरोमाणि तर्पयन्त इव,

लोचनगोचराः भवन्ति इति दृश्यकाव्यस्य वैलक्षण्यम्। अयं किल कविवेद्याः यथा यथेच्छति जागत्कभावास्तथा तथैव परिवर्तिताःभूत्वा तस्य सन्मुखे प्रस्तुताः भवन्ति। उक्तञ्चः-

अपारे काव्यसंसारे, कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं, तथेदं परिवर्तते।।

कवीच्छानुसारं परिवर्तमानानां पदार्थानां मार्गदेशकालपात्रपरिस्थितिपरिवेशादिकस्य सीमानोऽप्यवरोद्धुं न शक्नुवन्ति। कविशक्तिरतीव वलीयसी भवति तस्य कवित्वशक्तिः न केवलं मनोरञ्जनं कृत्वैव विरमति, अपितु स्वाक्षुण्णप्रभावेण तात्कालिकसमाजस्य प्रवृत्ती परिवर्त्त्य नूतनं युगनिर्माणं विदधाति, अतएव युगद्रष्टा भूत्वापि कवि-र्युगस्रष्टापि कथ्यते। कवित्वचमत्कारेण समाजे क्रान्तिकारकं परिवर्तनं वीक्ष्य अपश्चिमाः विपश्चितो निगदं निगदन्ति-कवयः क्रान्तदर्शिन इति। यत् सामाजिकं परिवर्तनं सैन्यशक्त्या खड्गधारयापि कर्तुमसम्भवम् तत् आमूलचूलं परिवर्तनं नाटककारस्य काष्ठलेखनी प्रेमपूर्वकं रक्तपातं विनैव करोति। फलतो नाटकं पुनर्जन्म ददाति।

60

इदं नाटकं दीर्घकालश्रव्यमितिवृत्तं स्वल्पकाल एव प्रदर्शयति। कुमार्गगामिनः समाजस्य हृदयं क्षणेन परिवर्त्त्य प्रशस्तपथं प्रस्तौति। पतनशीलस्योत्थानरीतिमुपदिशति, चरित्रभ्रष्टस्य गुरुवत्सच्चरित्रं निर्दिशति। चिन्ताजर्जरचित्ताय शाश्वतीं शान्तिं राति। भावाभावाय भव्यां भक्तिं भावयति, विद्याधननिर्धनाय आमोदप्रमोदमुपकल्पयति, निर्गुणाय गुणगरिमाणं प्रगुणयति, धनमदकामक्रोधान्धाय यथायोग्यं दिव्यं ज्योतिः प्रददाति। विषमविषयाग्निशमनाय वारिधारां वर्षति। चपलेन्द्रियवृत्तिं कर्त्तव्यकेन्द्रे नियमयति। अभिनयस्य त्वरितभावी प्रभावस्तीक्ष्णौषधमिव रोमरोमसु प्रसरति प्रभवति च।

61

यथा उद्दीप्तोऽग्निः स्वतेजसा मलमपसार्य चामीकरं चमत्कृतं बहुमूल्यं च करोति, तथैव नाट्याभिनयः स्वकलाकौशलेन तापत्रयमपाकृत्य मानवजीवनमूर्जस्वलं गतिशीलमात्मकर्मक्षमं च विदधाति। एतेन मानवोऽयं भौतिकविकासपूर्वकं जीवनस्य चरमलक्ष्यमध्यात्मसम्पत्तिमधिगच्छति। इयदेव दृश्यकाव्यानामन्तिममुद्देश्यम्। अत एव भगवता व्यासेन अग्निपुराणे प्रोक्तम्-त्रिवर्गसाधनं नाट्यमिति। त्रिवर्गसाधनपदस्यायमर्थः यत् धर्मार्थकामानां त्रयाणां पुरुषार्थानां प्राप्तिस्तु भवत्येव नाट्यात् किन्तु नाट्यानां दर्शनश्रवणादिभिरुत्पन्नस्य धर्मफलस्याऽननुसन्धानात् (फलपरित्यागात्) मोक्षप्राप्तिरपि स्वयं भवतीति तात्पर्यम्। उक्तं च-

न मोक्षस्य पुरे वासो, न ग्रामे भवने वने।
कामानां सर्वथा त्यागो, मोक्ष इत्यभिधीयते।।

62

दृश्यकाव्यस्य रूपकस्य नाटकप्रकरणादयो विविधाः भेदोपभेदा भवन्ति तेषां लक्षणान्यपि मतमतान्तरेण पृथक्-पृथक् निर्मितानि सन्ति। श्रव्यकाव्यस्य महाकाव्य-खण्डकाव्यचम्पूप्रभृतयो बहवो भेदोपभेदाः लक्ष्यन्ते। तेषां लक्षणान्यपि भिन्नभिन्नानि गुम्फितानि सन्ति। फलत उभयोः दृश्यश्रव्ययोरसाधारणधर्माः परस्परं न मिलन्ति। तेन च उभे दृश्यश्रव्ये मिथः कलेवरमपि न स्पृशतः। गङ्गोदकमिव उभयमेव काव्यं ज्ञानपिपासां शमयित्वाऽऽत्मानं विशोधयति। सूर्यचन्द्रवदुभेऽपि काव्ये दिव्येनालोकपुञ्जेन जीवनस्य कर्मभूमिमुदभासयतः। तत्र दृश्यं झटित्येव स्वचमत्कारं प्रसार्य चित्तं चकासयति। श्रव्यं तु श्रुतीन्द्रियद्वारा विलम्बेन आत्मानमाप्याययति उभयस्मादेव काव्यात् समानरूपेण पुरुषार्थचतुष्टयोपलब्धिर्भवति, किन्तु नाटकात्तु निरक्षराणामल्पधियामपि सद्यो निरायासेन च तल्लाभ इत्यस्त्युभयोर्मूर्खवत्दूरमन्तरम्।

63

सर्वेषां नाटकानां प्रायः सुखान्तमवसानं भवति अस्येदं रहस्यं यत् मानवोऽयं बहुलद्वन्द्व संघर्षपूर्णस्यापि जीवनस्य चरमावसानं सुखमय एव वातावरणे व्यत्येतुमाशासयेत्, दुःखान्धकारेण यावज्जीवं बाध्यमानोऽपि तामिस्रदण्डैस्ताड्यमानोऽप्यानन्दालोकाशां न मुञ्चेत। अयं प्राणी भवसागरं तीर्त्त्वा शान्तिनिकेतनमधिबिन्दतु। पतनशङ्कादात्मानमुद्धृत्य उत्थानसौधमधिरोहतु। जीवने शतशः संघर्षेऽपि विपत्तिवातूलावसरेऽपि न दैन्यं दर्शयेत्, नापि च पलायनं कुर्वीतेत्येव सुखान्तस्य प्रयोजनम्। रामायणादयः श्रव्यग्रन्थास्तु दुखान्ता अपि सन्तीति ज्ञातव्यम्।

64

नाटकमध्ये भरतवाक्यमिषेण नाटककर्त्तारः स्वान्तः सुखाय विश्वजनहिताय च नः कृतिर्भवत्विति कामयमानाः दृश्यन्ते एतेन विश्वबन्धुत्वभावना प्राणिमात्रेष्वात्मीयत्व स्थापना अनेकेष्वेकत्वमान्यता च दृढ़ीयसी भवति। नाटकेषु विलसन्ती भौतिकी आध्यात्मिकी चेयं कमनीया कामना नाटकानामुपादेयतामावश्यकतां च विवर्धयति। अतएव सत्यं शिवं सुन्दरमिति धर्मत्रयस्य मञ्जुलमूर्तिर्नाटकनिकुञ्जे नव्यं दिव्यं च दर्शनं ददाति। नाटकानां सुखान्तमिदं शिक्षयति यत् निराशापिशाचीं जित्वा आशा लक्ष्मीमासादयेत्। यतो हि निराशावादस्य तातप्यमानवातावरणे याप्यमानं महाराजस्यापि जीवनं मृतकतुल्यं भूभारभूतं दुर्वहं च भवति। आशावादस्य रमणीये वासन्तिक

वातावरणे तु महारङ्कस्यापि जीवनं बीजाङ्कुरायमाणं सत् फलाकाङ्क्षया उत्तरोत्तरं सरसं सस्पृहं च भूत्वा लोकेभ्योऽप्याशाबन्धमुपदिशति। नैराश्यझञ्झावातैः पुनः-पुनः प्रतिहन्यमानोऽपि कर्तव्यविरतो माभूत, जीवनयात्रायां पदे-पदे वृका इव संघर्षास्त्वां कवलीकर्त्तुमवसरं प्रतीक्षन्ते। कण्टकाकीर्णकुटिलकान्तारमार्गे ते धैर्यधनं लुण्ठयितुं दस्यव इव विकटाः सङ्कटा उपक्रमं रचयन्ति। भुजङ्गा इव व्यासङ्गास्त्वां दंष्टुं क्षणे-क्षणे सज्जते। अतस्त्वं प्रमादं मा गा इति नाट्योपदेशः।

**65**

घोरविपत्तावपि धैर्यं नहि मुञ्चनीयम्, प्रचण्डपरिस्थितावपि साहसं न विसर्जनीयम्, भूरिभयहेतावपि न भेतव्यम्, धनाभावेऽपि मानधनं न हातव्यम्, वैरिवृन्देष्वपि कातर्यं नहि दर्शनीयम्, प्राणाःयान्तु नतु प्रणः। धैर्यशाली-साहसी स्वाभिमानी निर्भीकः सत्यसन्धः पुरुषः एकस्मिन् न एकस्मिन् दिवसेऽवश्यमेव शुभोदर्कं पश्यति।

नहि विविधविघ्नाघातैरपि स्वसंकल्पं विकल्पयन्त्यार्यजनाः। शङ्कापङ्कलङ्कणिका मप्यकृत्वा कर्मणा च कर्त्तव्यं कुर्वन्ति। हताशो मा भूः, चिन्तां मा गाः, कार्पण्यं मा धाः, उत्तिष्ठ कर्त्तव्यनिष्ठ! कर्म चर, इयं कर्मभूस्त्वां प्रतिपालयति, दुःखानां निशो व्यतीताः, ऊषारूपिणी सफलता ते चरणौ चचुम्बिषति, श्रीस्त्वामभ्युपैति इति नाटकानां सुखान्तोपसंहारः समाजं पदे-पदे उद्बोधयति।

**66**

नाट्यकला कर्तव्यात्पराङ्मुखीं वृत्तिं निवार्य तत्र सत्प्रवृत्तिं जागरयति, नव-नवोन्मेषशालिनी प्रतिभामुत्तेजयति। इयं हि समाजमध्यात् वैरभावं परिमार्ज्य सद्भावबीजानि वपति। रूपकसागरे हि सर्वाः कलासरितः प्रविशन्ति। रूपकाकाशे सर्वाण्येव विषय-नक्षत्राणि देदीप्यमानानि भासन्ते। अत एव रूपकरीत्या वेदा अभिनेतुं शक्यन्ते न तु तै रूपकम्। रूपकमाध्यमेन शास्त्रपुराण्यभिनेतुं सम्भाव्यन्ते, न तु तै रूपकम्। रूपक-शैल्या श्रव्यकाव्यग्रन्था अभिनेतुं शक्यन्ते न तु तैस्तत्। श्रव्यग्रन्थान् दृश्येषु परिणमयितुं रूपकं सर्वथा क्षमते, रूपकं हि वेदपुराणानां पुराणतायाः कायाकल्पं कृत्वा तेभ्यो दृश्यात्मकं नवयौवनमर्पयति। रूपकौषधं संसेव्यजराजीर्णा प्राचीनतापि युवतिरिव क्षणे-क्षणे नव्यतां भव्यतां चोपैति। अहर्निशं दृष्टिगोचर अपि प्रकृतिपदार्थाः यदा रूपकरीत्या नाट्यनीत्या मञ्चपटलेऽभिनीयमानाः दृश्यन्ते तदा त एव (भुक्तोज्झिता) पदार्था अभिनवकान्तिं विकिरन्तस्तु अपूर्वदृष्टा इव प्रतिभासमानाः लोकोत्तररोचकतामियन्ति। एतत्सर्वं पौर्वापर्यं पर्यालोच्यैव ध्वन्यालोकस्य चतुर्थविरामेऽवददानन्दवर्धनाचार्यः-

दृष्टपूर्वा अपि ह्यर्थाः, काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति, मधुमासे यथा द्रुमाः।।

67

विविधदेशानां सामाजिकजनानेकतासूत्रे निबद्धुं मिथो भ्रातृभावमौरसस्नेहं शिक्षयितुं च रूपककला सरलतम उपायः। विकीर्णासु संस्कृतिषु सामञ्जस्यस्थापनाय नानाधर्मावलम्बिषु सम्प्रदायेषु विषमत्वं वारयित्वा समत्वसंस्थापनाय रूपकमाकर्षणमन्त्रवत् कार्यं चरीकरीति। नानाकलानां ज्ञानं-विज्ञानं विज्ञातुम्, तत्तद्देशप्रान्तानां क्षेत्रग्रामनगराणाम् वेशभूषां नीतिं रीतिं च परिचेत्तुं परमप्रेयसी सर्वश्रेयसी सरणिर्वर्वर्ति रूपकलीला। जनेषु व्याप्तान् गुणानवगुणांश्च ग्रहीतुं त्यक्तुं वा रूपकं नीरक्षीरन्यायेन हंसवत् विविनक्ति। श्रव्यकाव्यश्रावितानां भावानां यद् अस्पष्टज्ञानं मानसक्षेत्रे उप्यते, तद्धि रूपकामृतेन परिषिच्यमानं सत् अङ्कुरितं पल्लवितं पुष्पितं फलितं सुरभितं च भूत्वा सामाजिकानामुपयोगाय कल्पते।

68

अद्यतनसमये एकस्मिन् स्थाने जायमानां सभ्यताम् अन्येषु स्थानेषु प्रचारयितुम्, नवीननिर्मितयोजनामितस्ततः प्रसारयितुम्, समाजमध्ये व्याप्तां कुप्रथां निवारयितुं च रूपकपरिपाटी अमोघवरदानमस्ति। रूपकेऽभिनयस्य नवनवतिप्रतिशतं स्थानानि सन्ति, तस्मात् वस्तुवर्णनव्यग्रोऽपि रूपककारः कविरभिनयमेव सर्वस्वं मन्यमानः अभिनेयता धर्मं कदापि न विस्मरति। अभिनयः ईदृशो विशेषश्चमत्कारकारी धर्मो विद्यते यो दृश्यकाव्यमितरकाव्येभ्यः पृथक् करोति। प्रत्येकशब्देन सह अभिनयस्य पुटदानं नितान्तमावश्यकम्, केवलं शब्दोच्चारणस्य न किमपि मूल्यम्। शब्दे जीवनी शक्तिः (चेतना) तदानीमेवोदेति यदा तत्राऽभिनयतत्त्वं प्रविशेत्। प्रत्येकशब्दस्य अभिनयद्वारा अर्थस्य विशदीकरणं नाट्यशास्त्रेऽतीव प्रसिद्धं वर्तते।

आस्येनालम्बयेद् गीतं हस्तेनार्थं प्रदर्शयेत्।

यद्यप्यभिनयोपयोगे सर्वेषामङ्गनामावश्यकता भवति तथापि तेषु हस्तस्य महत्त्वपूर्णं स्थानमस्ति। यथा सर्वासु कर्मक्रियासु हस्त एवोपयोगाय अग्रेसरतामर्हति। यथाऽऽकाशात्पतितो जलबिन्दुः शुक्तिमुखे प्रविश्य मौक्तिकरूपं धत्ते तथैव शब्दोच्चारणेन उदीयमानोऽप्यर्थो हस्ताभिनयेन संगत्य मूर्तरूपम् आसादयति, अर्थादुच्चरितानां शब्दानां चमत्कारकमर्थं प्रकटीकर्तुं हस्तस्य मूर्धन्यं महत्त्वं विलसति। वेदे विशेषार्थप्रतिपादनाय हस्तचालनमपरिहार्यम् तद्वत्प्रकृतेऽप्यवगन्तव्यम्। हस्ताभिनयेनैव चमत्कृतोऽर्थो विच्छित्ति-पूर्वकं रसस्य परिपक्वतां प्रति प्रापयति उक्तं हि नाट्यशास्त्रे-

यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः।
यतो मनस्ततो भावो यतो भावस्ततो रसः।।

अद्यतनमीदृशान्यपि बहूनि रूपकाणि प्रचलितानि सन्ति येषां मध्ये एकस्यापि शब्दस्योच्चारणं न क्रियते पात्रैः, केवलं तत्तदङ्गानामभिनयसङ्केतेनैव स्वाभिप्रायं प्रकटयन्ति पात्राणि। सम्पूर्णलीलामशब्दपूर्वकं साभिनयं खेलन्ति। ईदृशानि भावनाटकमूकप्रदर्शनानि निगदन्त्याचार्या शब्दोच्चारणं विनापि आङ्गिकाभिनयमहिम्ना अर्थप्रदर्शनम् महाभाष्ये-पतञ्जलिपादेन मुक्तकण्टेनानुमोदितम्:-

"अन्तरेणापि खलु शब्दप्रयोगं बहवोऽर्थाः गम्यन्ते अक्षिनिकोचैः पाणिविहारैश्च" (२-१-३४)

69

केवलं गायनं रूचिकरं न भवति, तथैव केवलं वादनं नर्तनमपि न मानसं मोदयति किन्तु यदा 'त्रयाणां सम्मिश्रणं सम्पद्य रागपरिवाहिणी काचिदपूर्वा रसत्रिवेणी परिस्फुटति तदा लोकोत्तरश्चर्वणाख्यव्यापारो हृदयं रसयति। वशीकरणमन्त्रवत् रूपकस्यायमेव विलक्षणचमत्कारः यत् दैनिकजीवनेऽविरामगत्या गृहकार्याणि कुर्वन्तोऽपि जनाः यदा कुत्रचिद् भवन्तीं रूपकलीलां द्रष्टुं नाट्यशालां प्रविशन्ति तदा तेषां परिश्रमचिन्तादयो न जाने कुत्र पलायन्ते।'

70

रूपकस्य दिदृक्षात्मकोऽभिनिनीषात्मकश्च संस्कारो युगयुगान्तरात्, कल्पकल्पान्तरात्, जन्मजन्मान्तरात् सञ्चितो भूत्वा हृदयागारे तन्द्रामग्नो वसति, स च कारणकूट-मासाद्य समये-समयेऽङ्कुरवत् उद्बुध्यते स्वयमेव। फलतो रूपकविषयिणी दिदृक्षा अभिनिनीषा च सामाजिकेषु स्वत एव उत्पद्यते। तस्या उत्कटप्रेरणया अव्याहतभावनया च ते तत्र स्वात्मनैव प्रवर्तन्ते। तस्माद्धेतोरेव यत्र नागरिकाः जनाश्चलचित्रं दर्शं-दर्शं स्वमनोरञ्जनपूर्तिं कुर्वाणा दृश्यन्ते, तत्रैव अशिक्षिताः धूलिधूसरिता अपि ग्राम्यकृषका कृषिकर्तकाः रात्रौ समवेताः भूत्वा नानानुकारं-कारं गायन्तो वादयन्तो नृत्यन्तश्चाभिनयेन मनोविनोदं विदधानाः विलोक्यन्ते। न केवलं पुरुषेष्वेवेदृशी वृत्तिर्भवति अपितु ग्राम्यनार्योऽपि जन्मविवाहादिकेषु शुभावसरेषु विविधानि रूपाणि धारं-धारं, हावभावविलोकैर्दर्शकानां हृदयानि हारं-हारं, गीतवाद्यनृत्येषु आनन्दमग्नाः भूत्वा रूपकक्रीडां क्रीडन्त्यो जनानां नीरसतां ग्रामव्याप्तनीरवतां चापसारयन्त्यः समस्तामेव रजनीं व्यतियापयन्ति। पाठशालेषु पठन्तः पिपठिषः, धूलौ खेलन्तो बालकाः, राजनीतौ

रममाणा नेतारः, ब्रह्मध्यानं धारन्तो योगिनः, रङ्का रैवन्तोऽपि रूपकस्य दिदृक्षाप्रवृत्तिं चिकीर्षागतिं चावरोद्धुं न शक्नुवन्ति। नटवरवपुः लीलाविग्रहधारी भगवान् नन्दनन्दनोऽपि वृन्दावने ब्रजाङ्गनाभिः सह रासलीलामभिनीयात्मावतारं सार्थकं मेने। रूपकविषयिणी इयती बलवती प्रवृत्तिरस्ति यत् तां वारयितुं लोके किमप्यौषधं नास्ति। अतएव रूपकविषये उत्तरोत्तरं वर्धमाना लोकप्रियता दरीदृश्यते, किं बहुना समाजमध्ये रूपकाणा-मीदृशमूर्जस्वलं महत्त्वं, चतुर्मुखः प्रचारश्चास्ति यत् उत्सवविवाहादिकेषु माङ्गलिक-कार्येषु यावत् गीतवाद्यनृत्यमयं रूपकं (नाटकं) नाभिनीयते तावत् जनैस्तेषां पूर्णसफलता नैव मन्यते।

एषां रूपकाणां समाजमध्येऽनादिकालादेव प्रचुरप्रचारो बभूव। रामलीला, कृष्णलीला, कंसवधलीला, द्रौपदी चीरलीला, सुदामालीला, वामनलीला, गजेन्द्रमोक्षलीला, ध्रुवलीला, प्रह्लादलीला, शिवविवाहलीला, सीतास्वयम्बरलीला, जयद्रथवधलीला इत्याद्याः विविधलीलाः प्रतिनगरेषु, प्रतिग्रामेषु चातीतकालादेव प्रचलिता वायुवत् सर्वत्र प्रसृताश्चासन्। तदानीं नटनर्तकमागधवन्दीजनादयो विविधैरभिनयै राजद्वारेषु ग्रामनगरक्षेत्रेषु च ग्रामं-ग्रामं नाटकलीलाभिर्जनानां मनोरञ्जनं विदधाना जीविकार्जनं कुर्वन्ति स्म। इयमीदृशी नाटकमण्डली यत्र यत्र गच्छतिस्म तत्र तत्रैव नीरवता मुखरतायाम्, नीरसता सरसतायां, उदासीनता प्रसन्नतायाम् परिणमति स्म। आसु लीलासु समाजस्य ईदृशी अखण्डा रुचिर्लग्नाऽभूत् यत् कालान्तरे वैदेशिकानां शासनेऽपि तत्सभ्यतायाः बहल प्रचारेऽपि विविधविघ्नबाधासमुपस्थितेष्वपि सा लीलादर्शनरुचिस्तिलमात्रमपि क्षीणा नाऽजायत। अपि च देशद्रोहिभिः कुशासकैर्यथा-यथा लीलारुचिरवारूध्यत् तथा-तथावरूद्धनदीप्रवाहवत् उत्तरोत्तरं वर्धमाना सती समाजे व्यापकरूपं व्यातनोत्। तस्यैवायं परिपाकः यत् अद्यश्वीनं रूपकाणां प्रचलनं प्रसरणं च क्षणे-क्षणे नूतनत्वेन बरीवृधीति।

यद्यपि रूपकविषये विशेषपरिज्ञानाय ग्रन्थेषु मतमतान्तराणि खण्डनमण्डनरीतयश्च वहलविस्तरेण विलसन्ति तथापि सारं-सारं संगृह्य प्रतिपित्सूनां सरलबोधायात्ररूपक-तत्त्वावलीं निर्दिशामि यथा रूपकेः-

- स्वगतप्रयोगो भवति।
- प्रकाशप्रयोगो भवति।
- नेपथ्यप्रयोगो भवति।
- विष्कम्भप्रयोगो भवति।
- अङ्कावतारप्रयोगो भवति।

- प्रवेशकप्रयोगो भवति।
- जनान्तिकप्रयोगो भवति।
- पताकाप्रयोगो भवति।
- मुद्राप्रयोगो भवति।
- सन्धिप्रयोगो भवति।
- चूलिकाप्रयोगो भवति।
- पटाक्षेपप्रयोगो भवति।
- दृश्यधर्मस्य प्रधानता।
- श्रव्यधर्मस्याऽतिगौणता।
- आरोपस्याऽनिवार्यता।
- अभिनयस्य महत्ता।
- गीतवाद्यनृत्यप्रमुखता।
- पञ्चाऽन्यूनदशाऽनधिकाङ्कविभाजनम्।
- प्रत्यक्षनेतृचरितेत्यादिलक्षणैर्युक्ताङ्करचना।
- अङ्के पत्राणां प्रवेशनिर्गमनियमः।
- अङ्कान्ते सर्वपात्राणां निर्गमनम्।
- रूपकारम्भे सूत्रधारः प्रविशति।
- आदौ सूत्रधारो नान्दीपाठं करोति।
- नान्दीपाठे पात्राणां नामसङ्केतः।
- रूपकस्याधारशिला प्रस्तावना।
- प्रस्तावनायां कवेर्नाटकस्य च नामादिकीर्तनम्।
- नीराजनध्वजपूजनम्।
- नेपथ्यविधानम्।
- पात्रानुसारभाषाप्रयोगः।
- गद्यपद्यप्रयोगः।
- साधिधातुप्रयोगः।
- भारत्यादीनां चतुर्वृत्तीनां प्रयोगः।
- विदूषकादिकृत हास्यरससमावेशः।
- रूपके सर्वावस्थासु सरलशैली प्रयोगः।
- रूपके मुख्य-मुख्यघटनानां निवेशः।
- रूपके सप्तस्वराणां प्रयोगः।

- रूपकान्ते भरतवाक्यप्रयोगः।
- रूपकस्य सुखान्तावसानम्।
- रङ्गपीठोपरि दन्तनखच्छेदनादिकं वर्जितम्।
- पात्रं स्वपृष्ठभागं न दर्शयति।
- पात्रं सर्वदा दर्शकानां सन्मुखे तिष्ठति।
- रूपके पात्राण्येव वदन्ति न तु कविः।
- रूपके नाट्यशालानिर्माणमत्यावश्यकम्।
- रङ्गपीठस्य (स्टेज) रचनात्यावश्यकी।
- छत्रमुकुटताटङ्कभूषणास्त्रशस्त्राद्यावश्यकता।
- रूपके सर्वालीलाः मञ्चोपर्यैव भवन्ति।
- रूपकाभिनयो रात्रावत्यन्तं शोभते।
- रूपकमतिव्यापकम्।
- रूपकाभिनयं द्रष्टुं कर्त्तुं च सर्ववर्णाधिकारः।
- रूपकाभिनये वामनषण्ढकुब्जकिरातवेश्यादीनामप्यधिकारः।
- रूपकमाध्यमेनाऽतीन्द्रियविषयाणां प्रत्यक्षता।
- दर्शकानां समयस्य सदुपयोगः।
- रूपकद्वारा श्रव्यग्रन्थानामभिनयः।
- रूपकात् साक्षरनिरक्षराणां रसाऽऽस्वादः।
- रूपके स्वयं प्रवृत्तिः।
- रूपकाभिनयेन जीविकार्जनम्।
- रूपकादन्धबधिरयोरप्यानन्दः।
- रूपकात्पठनपाठनशिक्षणम्।
- रूपकात् युद्धशिक्षणम्।
- रूपकात्सैनिकशिक्षाभ्यासः।
- रूपकरीत्या योगाभ्यासः।
- रूपकमाध्यमेन संस्कृतिप्रचारः।
- रूपकद्वारा निर्वाचनप्रचारः।
- रूपकरीत्या समाजविकासः।
- रूपकाभिनये योजनानां प्रसारः।
- रूपकोपायेन ग्रामनगरसुधारः।
- रूपकप्रदर्शनेन कृषिरक्षणशिक्षा।

- रूपकदर्शनेन स्वास्थ्यलाभः।
- रूपकमार्गेण चिकित्साशिक्षा।
- रूपकशक्त्या चित्तपरिवर्तनम्।
- रूपकप्रभावेण कुकर्मत्यागः।
- रूपकदर्शनेन श्रमापहरणम्।
- रूपकपरिशीलनेन दुर्घटनानामभावः।
- रूपकप्रसारेण जनजागृतिः।
- रूपकमहिम्ना देशभक्तिप्रेरणा।
- रूपकविधिनाऽन्धविश्वासरूढ़िवादविनाशः।
- रूपकशिक्षया नारीजागरणम्।
- रूपकविधयाऽनेकतास्वेकताजननम्।
- रूपकप्रचारेण राष्ट्रोत्थानम्।
- रूपकमाध्यमेन वर्णाश्रमकर्त्तव्यव्यवस्थापनम्।
- रूपकलीलाद्वारा त्रैलोक्यदर्शनम्।
- वीथीद्वारा (नुक्कड़नाटकबलेन) अन्यायभ्रष्टाचारनिवारणम्।

## ॥ नाटकोत्पत्तिः ॥

नाटकानामुत्पत्तिः कदा बभूवेति प्रश्नपिशाचं समाधातुमनेकेषां विद्वज्जनानां अनेकानि मतानि दृष्टिपथे पथिकायन्ते। तत्र भारतीया विद्वांसो वेदेभ्य एव नाटकोत्पत्तिं मन्यन्ते। पाश्चात्याः विद्वांसो लोकात् (समाजात्) एव तदुत्पत्तिं साधयन्ति। तत्र रिजवी-हिलीब्राण्ट-स्टेन-पिशेल-ल्यूडर्स ओल्डनवर्ग-कीयादयः पाश्चात्याः विपश्चितो नाटकोत्पत्तौ भिन्नं-भिन्नं मतं प्रकटयन्ति।

रिजवी प्रतिपादयति यत् अस्मिँल्लोके बहवः पुरुषाः जीवन्तोऽपि निर्जीवाः (जीवनादुदासीनाः) निश्चेतना इव कर्त्तव्यविरताः भूत्वा शुष्कं जीवनं यापयन्ति। तेषु चेतनां जागरयितुं कर्त्तव्यं रुचिं प्रवर्धयितुमौदासीन्यं च वारयितुं चतुरैर्नरैर्नाटकानां रचनाऽकारि, नाटकलीलां दर्शं-दर्शं तच्चमत्कारिकप्रभावेण निश्चेतनानां चित्तेष्वपि प्रसुप्ता चेतना जागर्ति, आलस्यमपास्य तेऽपि कर्त्तव्यतत्पराः भवन्ति, नीरसमपि तज्जीवनं सरसं भवति, अस्ति नाटकीयचर्वणायां तादृशो महिमेति लोक एव नाटकोत्पत्तौ बीजम्।

स्टेनहिलीब्राण्टौ लोकरञ्जकेभ्यो ग्राम्यनृत्येभ्यः (स्वाँगों से) एव नाटकोत्पत्ति-मङ्गीकुरुतः। ग्राम्यजनाः अधुनापि विविधानि कृत्रिमरूपाणि रचयित्वा अभिनयमाध्यमेन परस्परं मनोरञ्जनं कुर्वन्ति। यत्र तडिच्चाकचिक्यं नास्ति चलचित्रं दूरदर्शनादीनां च सौविध्यं न वर्तते, तत्र ग्रामाटिकासु सम्प्रत्यपि पुरातननृत्यपरिपाटीद्वारेण स्वमनोविनो-दमाचरन्ति ग्राम्याः जनाः। फलतो लोकाभिनय एव परिष्कृतनाटकोत्पत्तौ कारणम्।

पिशेलमहाभागः पुत्तलिकानां नृत्यादेव नाटकानामुत्पत्तौ श्रद्धां विश्वासं च चर्कर्ति। पुराकाले काष्ठपटादिनिर्मितानां पुत्तालिकानां सूत्रसङ्केतेन नृत्यं प्रदर्शयन्तिस्म जनाः। कालान्तरे तत् पुत्तलिकानृत्यं शनैः-शनैः परिष्कारमासाद्य आधुनिकं नाटकरूपमद्यतनं भजते। अतएव तत्सम्बन्धस्मारकमिदानीमपि सूत्रधारपदं प्रयुज्यते।

ल्यूडसर्स महाशयस्तु छायानाटकेभ्य एव नाटकोद्भवं मन्यते। येषु नाटकेषु पात्राणि न प्रविशन्ति मञ्चोपरि किन्तु पुत्तलिकामाध्यमेन तेषां छायैव पट्टोपरि विविधलीलां करोति तानि छायानाटकान्युच्यन्ते।

ओल्डनवर्गमतानुयायिनः पाश्चात्याः पण्डिता इदं कथयन्ति यत् महाकाव्येभ्य एव नाटकान्युत्पद्यन्ते। महाकाव्येषु श्रव्यचरित्रं श्रावं-श्रावं समुद्विग्नाः जनाः प्रत्यक्षदिदृक्षया दृश्यकाव्यं नाटकमरीरचन्।

कीथमहोदयोऽप्योल्डनमतं समर्थयन् स्वाभिप्रायं प्रकटयति यत् रामायण महाभारतपुराणान्येव नाटकानां जनको वर्तते। एषु यत्र-यत्र नट-नाटकाद्याः शब्दाः उल्लिखिताः मिलन्ति तत्र-तत्र तेऽभिनययोग्यं नाटकमेव इङ्गन्ति। भरतभाटकुशलव कुशीलवादिशब्दानामन्योन्यं तुलनां कुर्वाणः कीथः स्वमतं पोषयति। पाणिनिरचिताया-मष्टाध्याय्यां पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः 4-3-11 तथा कर्मन्दकशाश्वादिनिः 4-3-111 इति सूत्रयोः शिलालिकृशाश्वनामकयोर्द्वयो र्नाट्यशास्त्ररचयित्रोर्नामोल्लेखः स्पष्टतया दरीदृश्यते। एतेनेदं सिद्धं भवति यत् रामायणादिकालादेव नाटकानां सत्ता सिध्यति न तु तस्मात्पूर्वमिति कीथकथनम्।

वेवरविण्डिशौ तु यूनानदेशस्य कलात् एव भारतीयनाटकानामुत्पत्तिमुररीकृतवन्तौ। तौ च स्वमतसमर्थनाय भारतीयनाटकेषु प्रयुक्तं यवनिकापदमुदाहरतः। यवनानामियं यवनिका, यवनदेशादागता वा यवनिकेतिपदं सिद्धं भवति। भारतीयनाटककारैरयं यवनिकाशब्दः यवनदेशादेव प्राप्तः, अतो यूनानदेशस्य नाट्यकलैव भारतीयनाट्यानां जननीति तयोः सिद्धान्तः। किन्तु अयं सिद्धान्तः कीथादिभिरनेकैः कर्कशतर्कैर्धराशायी कृतः। तुष्यतुदुर्जन इति न्यायेन यूनान-देशात् यवनिकापदे प्राप्तेऽपि सर्वाऽपि भारतीयनाट्यकला तत एव प्राप्तेति प्रमातुं न शक्यते। दूरस्थानामपि कवीनां

रचितकाव्येषु यदि क्वचित् काकतालीयन्यायेन शब्दसाम्यमर्थादिसाम्यं वा भवेत् नहि तन्मात्रेण सर्वं तदनुकरणं भवितुमर्हतीति वेवरवेण्डिश-सिद्धान्तो नहि मनागपि विश्वासयोग्यः। किञ्च नहि केवलं यवनिकैव पदं प्रयुज्यते, अपितु यमनिका, जवनिकेत्यपि प्रयुज्यते। जवत्यस्यामिति जु सौत्रो धातुः, तेन ल्युट्, स्वार्थे कन् प्रत्ययः अथवा यमयति वेति यम् धातोर्ल्युट्, कन् प्रत्ययः, अथवा युञ् बन्धने धातो रूपमिदम्।

लेवी-मैक्समूलर-हर्टेलप्रमुखाः बहवो विद्वांसो नाटकोत्पत्तौ वेदानेव कारणमामनन्ति। तेषामयमभिप्रायः यत् वेदेषु नाना सम्बादा उल्लिखिताः सन्ति, यथा पुरूरव-उर्वशीसम्बादः अगस्तलोपामुद्रासम्बादः, इन्द्रेन्द्राणीसम्वादः, यमयमीसम्बादः, पणिसरमासम्बादः इत्यादयो बहवः सम्बादाः वेदेषूपलभ्यन्ते। त एव परिमार्जित-नाटककलेवरं रचयितुं प्रेरकाः भवन्ति। एतस्मिन् विषये जर्मनदेशीयो विद्वान् श्री श्रोडरमहाभागो मुक्तकण्ठेन ब्रूते यदेते वैदिकसम्बादा यज्ञादिमहोत्सवेषु गायनवादनैः सह नाटकवत् अभिनीयन्ते स्म। मैक्समूलरादय इदमपि कथयन्ति यत् एषु सम्वादेषु गद्यपद्यमिश्रणं वर्तते। फलतस्तदनु-प्राणितेषु नाटकेष्वधुनापि गद्यपद्यमिश्रणप्रयोगं नोज्झितुं पारयन्ति नाटककर्त्तारः। वर्तमानसमये नाटकेषु यानि प्रश्नोत्तराणि कथनोपकथनानि विलसन्ति तानि सर्वाणि वैदिकसम्बादानां वरदानं मन्तव्यम्। भवति हि गद्यपद्यमिश्रणप्रयोगेण कथोपकथन-शैलीद्वारेण च वर्ण्यविषये विशेषविच्छित्तिः तस्मान्नाटकोत्पत्तौ वेदा एव मौलिकं कारणम्।

इतिहासकाराः भारतीया जनाः श्रीबलदेवचन्द्रशेखरप्रभृतयो वेदेभ्य एव नाटकोत्पत्तिं स्वीकुर्वाणाः मोक्षमोलरादिभिः सह एकवाक्यतां भजन्ति। ते च अमोघयुक्तियुक्तै-र्परिपुष्टप्रमाणैश्च निगदन्ति यत् भारतीया नाट्यकला वैदेशिककलया कथमपि प्रभावयितुं नहि शक्यते। भारतीया नाट्यकला तु वेदवत् स्वयम्भूः अपौरुषेया च वर्तते। सृष्टि-रचनारम्भादेव भारतीयनाट्यकलायामीदृशी स्वकीया मौलिकविशेषता वरीवर्ति येन वैदेशिकनाट्यकला व्यवच्छेत्तुं शक्यते। पुरुषलीलां पुरुषा एवाभिनयन्ति न तु स्त्रियः, स्त्रीलीलां स्त्रिय एवाभिनयन्ति न तुः पुरुषाः, पुरुषद्वारा स्त्र्यभिनयनं, स्त्रीद्वारा पुरुषाभिनयनं चात्यन्तमनुचितमिति भारतीयनाट्यकलावैशिष्ट्यम्। इदम् अनौचित्यं च पाश्चात्यनाटकेषु व्याप्तमासीत् किन्तु भारतीयनाटकविधां दर्शं पाश्चात्यैरपि निकटातीतसमयात् स्वनाटकेभ्यस्तदनौचित्यमपाकर्त्तुमारब्धम्। तत्कथं वैदेशिकनाट्येन भारतीयनाट्यं प्रभावयितुं पार्यते? इति पुष्टैः प्रमाणमानकैरविचलैरूपोद्बलकैश्च-स्वसिद्धान्तं निर्णयकोटिं प्रापयन्तो भारतीया इतिहासकारा वेदेभ्य एव नाटकोत्पत्तिं साधयन्ति। इदमेव मतं सर्वे जना एकस्वरेण निर्विवादरूपेण च सहर्षं स्वीकुर्वन्ति।

यथा सर्वासां ज्ञानविज्ञानादिकलानां जन्मस्थानं वेदा एव भारतभूरेव च बोभवीति तथैव नाट्यकलापि च वेदेभ्य एवोत्पद्य सर्वप्रथमं भारतभूमावेव सा पल्लविता पुष्पिता फलिता सुरभिता चाजायत। ईश्वरीयस्य निःश्वासभूताः वेदा यथा अपौरूषेया अनाद्याः सन्ति तथैव भारतस्य नाट्यकलापि अपुरुषकृता अनादिविधना स्वयम्भूरस्तीति न कापि विप्रतिपत्तिः।

एतस्मिन् विषये नाट्यशास्त्रस्य प्रथमाध्याय एकं कथानकमुल्लिखितं वर्तते, तद्यथा-

एकदा अनध्यायदिवसे सन्ध्यादिक्रियानिवृत्तो भूत्वा भरतो मुनिर्यदा शिष्यमण्डलीमध्ये विराजमान आसीत् तदा अत्रिप्रभृतयो नैके मुनयस्तत्समीपमागत्य सप्रणामं तम् अपृच्छन्-भगवन् ! नाट्यवेदः कथमुत्पन्नः ? किमस्य प्रयोजनम् ? कति चास्याङ्गानि ? किमस्य प्रमाणम् ? कीदृशश्चास्य प्रयोगः ?

नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते।
कत्यङ्गः किं प्रमाणश्च, प्रयोगश्चास्य कीदृशः।।

मुनीनामेतान् प्रश्नानाकर्ण्य श्री भरतमुनिरूवाच- हे मुनिपुङ्गवाः! एकदा वैवस्वते मन्वन्तरे त्रेतायुगे यदा बहवो जनाः सात्त्विकवृत्तिं विसृज्य राजसवृत्तिं सेवितुमारेभिरे तदा तद्दुःखदुःखिता इन्द्राद्याः देवाः ब्रह्मणः सामीप्यमासाद्य प्रार्थयामासुः-भगवन्! ईदृशं मनोरञ्जनात्मकं साधनं सृज्यतां यत्र दृश्यश्रव्ययोर्मिश्रणं भवतु, चतुर्वर्णानां प्रयोजनं च सिध्यतु। तत्प्रार्थनामङ्गीकृत्य चतुराननो वेदचतुष्टयात् सारं-सारं समाहृत्य सर्वोपकारकं पञ्चमं नाट्यवेदमरीरचत्। स तु ऋग्वेदात्सम्बादतत्त्वं, यजुर्वेदात् अभिनयतत्त्वं, सामवेदात्सङ्गीततत्त्वमथर्ववेदाच्च रसतत्त्वं संजग्राहः-

एवं संकल्प्य भगवान्, सर्ववेदाननुस्मरन्।
नाट्यवेदं ततश्चक्रे, चतुर्वेदाङ्गसम्भवम्।।
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतिमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि (16-17)

अनया रीत्या रचितं नाट्यवेदमादाय तत्पौर्वापर्यपर्यालोच्य देवाः पुनरपि ब्रह्मणमूचूः- भगवन् ! ना वै देवा इमं नाट्यवेदं ग्रहीतुं धारयितुं ज्ञातुमभिनेतुं वा समर्थाः-

ग्रहणे धारणे ज्ञाने, प्रयोगे वास्य सत्तम्।
अशक्ताः भगवन् देवा, अयोग्याः नाट्यकर्मणि।।

एतच्छ्रुत्वा चतुराननोऽस्य नाट्यवेदस्य अभिनयादिकार्यं भरताय समर्पयामास्। भरतस्तु अभिनयसाफल्याय शिवपार्वत्योः सहयोगमग्रहीत्। ततश्च स्वकीयैः शतपुत्रैः सह भरतः नारदसहिताः गन्धर्वाः अप्सरोऽन्विता देवाश्च मिलित्वा सर्वे जनाः इन्द्रध्वजमहोत्सवावसरे सर्वप्रथमं दैत्यमानवनामकं नाटकमभिनीतवन्तः। नाटकं चेदं शास्त्ररीत्या रचितायां रङ्गशालायामभिनीतम्। तत्र तैः शतप्रतिशतं साफल्यमधिगत-मिति कथानकाधारेणापि नाटकोत्पत्तौ वेदा एव कारणं सिध्यति।

वैदिककालादेव नाटकानां परम्परा उत्तरोत्तरं विकासमधिगच्छति। तत्र रामायण-महाभारतपुराणेषु नटनर्तकनाटकगायकशैलूषादयो बहव ईदृशा शब्दाः मिलन्ति ये स्पष्टरूपेण नाटकीयकलां सङ्केतयन्ति। आदिकाव्ये रामायणे बाल्मीकिर्लिखति-

**शैलूषाश्च तथा स्त्रीभिर्यान्ति कैवर्तकास्तथा।(2-83-15)**

अमुना उपोद्बलकेन ध्वन्यते यत् पुरुषपात्रैः सह स्त्रियोऽप्यभिनयन्तिस्म। एवं हि महाभारतस्य विराटपर्वणि नाट्यशालायाः विस्तृतं वर्णनं विद्यते। फलतो महाभारत-रचनाकालपर्यन्तमनेकेषां नाटकानामभिनयाः सफलतया सम्पन्नतामगुः। हरिवंशपुराणस्य एकनवतितमध्यायमारभ्य षण्णवतितमाध्यायपर्यन्तमिंद वर्णितमस्ति यत् वज्रनाभनामकस्य राक्षसस्य नगर्यां रामायणनामकं कौवेररम्भाभिसारनामकं च नाटकद्वयमभिनीतमासीत्। एतेनेदं सिद्धं भवति यत् पुराणानां रचनाकालं यावत् नाटकानां प्रचारः प्रसारश्च जलतरङ्गे तैलविन्दुवत् सर्वत्र व्याप्तोऽभवत्। एतस्मिन् विषये इदमप्यपलपितुं न शक्यते यत् अष्टाध्यायीरचयिता दाक्षीपुत्रो भगवान् पाणिनिरपि जाम्बवतीजयम् पातालविजयं वा इत्येकं नाटकं रचितवान्, यस्य कतिपये श्लोका अद्यापि यत्र तत्रोपलभ्यन्ते। किन्तु बलदेवोपाध्यायो युधिष्ठिरमीमांसकश्च पाणिनिरचितं जाम्बवतीजयनामकं महाकाव्यमस्ति न तु नाटकमिति वदतः। अन्ये विद्वांसस्तु पाणिनिरचनां नाटकत्वेनैव स्वीकुर्वन्ति। वस्तुतस्तु अयं विरोधवादो गवेषणात्मकं पुष्टप्रमाणमाकाङ्क्षति।

पतञ्जलिमहाभागः स्वप्रणीते महाभाष्ये (3-2-111 मध्ये) कंसबधवलिबन्धनामकयोः द्वयोर्नाटकयोरभिनयशैलीं प्रदर्शयति। किन्तु नैते नाटकेऽद्यावधि प्राप्ते भवतः। फलत एषु वेदादिग्रन्थेषु नाटकानां सङ्केतमात्रं चक्षूंषि रञ्जयति 'पुस्तकाकारं नाटकशरीरयोग्यं किमपि नाटकं नोपलब्धं भवति' अनया सामग्र्या अदः सुनिश्चितं जायते यत् पुराकाले नाटकानां वंहीयान् प्रचार आसीत्, किन्तु कालकवलितत्वात् तेषां रचनाग्रन्था नेदानीं हस्तलब्धा भवन्ति।

नवोत्तरे एकोनविंशतिशततमे (1909) ईशाब्दे दाक्षिणात्यस्थाने त्रावणकोरपरिसरे गणपतिशास्त्री महाभागः भासकविरचितानि त्रयोदशनाटकानि प्राप्तवान्। एतानि नाटकानि ईशुम्बत्सरादपि चतुःशतवर्षेभ्यः (400 ई.) पूर्वं रचितानि सन्तीति इतिहासप्रसिद्धम्। गवेषकैरन्येषामपि नाटकानां विषये महती गवेषणाऽकारि किन्तु भासनाटकेभ्यः पूर्वरचितमन्यन्नाटकं साङ्गोपाङ्गप्रथितं नाधिगम्यते। तस्माद्धेतोरद्यावधि कृतगवेषणाऽऽधारेण नाटकसंसारे भास एव सर्वप्रथमो नाटककर्त्ता, तन्नाटकराशिरेव प्राचीनतमो नाटकराशिरस्तीति सर्वेषामैतिह्यविदां निर्विवादं मतम्। भासरचितस्य प्रत्येकनाटकस्य लघु-लघु कलेवरमस्ति, वाक्यानि (कथनोपकथनानि) चापि लघु-लघूनि सन्ति। पात्रेषु स्वाभाविकता विद्यते। गद्यपद्यशैली चातीवसरला सरसा भव्यभावोद्पूर्णा अभिनययोग्या च विलसति। भासनाटकेषु सहजरूपेण नाटकतत्त्वान्योतप्रोतानि सन्ति। घटनानां समावेशोऽतिनैपुण्येन निभालितः। यत्र तत्र भाषादिविषयकं स्खलनमेषु यत् दृश्यते तत्सर्वं हि तदानीन्तनस्य विकासयुगस्य प्रभावो मन्तव्यः।

भासरचनानन्तरं नाटकशृङ्खलायां मृच्छकटिकं नाटकं (प्रकरणं) द्वितीयकोटौ गणयितुं शक्यते। अस्य नाटकस्य शूद्रकनामा कश्चित् कविरस्ति रचयिता। शूद्रकस्य स्थितिकालः ख्रिस्ताब्दात्पूर्वं तृतीयं शतकं मन्यते। किन्तु वस्तुतः शूद्रकसमयो विवादग्रस्तो वर्तते। दशाङ्कयुक्तमतिविस्तृतमिदमीदृशं प्रकरणमस्ति यस्याऽध्ययनेन तत्काले समाजेषु वर्तमानानि सर्वाणि वृत्तानि हस्तामलकवत् प्रत्यक्षाणीव दृष्टुं शक्यन्ते। अस्मिन्नाटकेऽष्टौ भाषाः प्रयुक्ताः सन्ति। पात्राणामपि बाहुल्यं वर्वर्ति। किं बहुना इदं नाटकं दृश्यकाव्यापेक्षया श्रव्यताप्राधान्यं भजते। अर्थान्नाटकीयता तनिमानं काव्यात्मकता च गरिमाणमाप्नोति।

शूद्रकानन्तरं कालिदासस्य तृतीयः कोटिर्गण्यते। कालिदासस्यापि जीवनकालविषये बहवो विद्वांसः कलहायमानाः सन्ति। किन्तु वीरविक्रमादित्यसमयेऽयं कविः वर्तमान आसीदितिविषये कालिदासस्य ग्रन्था एव प्रमाणम्। फलतो विक्रमादित्यस्य समसामयिकं (विक्रमपूर्वद्वितीयशतकादारभ्य सप्तमशतकपर्यन्तम्) कालिदासं मत्वा इतिहासकाराः सन्तोषं कुर्वन्ति। कालिदासो हि विक्रमादित्यस्य राजधान्यामुज्जयिन्यां नवरत्नेष्वन्यतमः सभापण्डितः आसीदिति विषये प्रसिद्धमिदं पद्यम्:-

धन्वन्तरिक्षपणकामरसिंह शङ्कु,
वेताल-भट्ट-घटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायाम्,
रत्नानि वै वररुचिर्नवविक्रमस्य।।

कालिदासरचितानि त्रीणि नाटकानि जीवितरूपेण मिलन्ति-मालविकाग्निमित्रम्,

विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलं च। एषु नाटकेषु अभिज्ञानशाकुन्तलं नाटकं सर्वोत्तमं सकलनाटकीयलक्षणोपेतं च वर्तते। सप्ताङ्कयुतेऽस्मिन् नाटके शृङ्गाररसो मूर्तिमानिव भूत्वा नाट्यमञ्चेऽवतरति। एतन्नाटकं सर्वेषां नाटकानां सर्वप्रथमं स्थानं, महतीं प्रतिष्ठां, भूयसीं लोकप्रियतां च प्राप्नोति, इदमेव नाटकं स्वोत्तरभाविनां नाटकानां पथप्रदर्शकं, लक्षणकाराणां लक्ष्यसमर्पकं चाभवत्। अदो नाटकं न केवलं भारतीयनाटकेषु अपितु विश्वस्य अशेषनाटकेषु मूर्धन्यं गौरवं विन्दति। अतएव सर्वे वैदेशिका अप्यस्य मुक्तकण्ठेन भूरि-भूरि प्रशंसां कुर्वन्ति। अस्य नाटकस्य भावानां भव्यता, अर्थानां स्वाभाविकता, व्यङ्ग्यार्थानां विशदता, अलङ्काराणां चारुता, पदानां मञ्जुलता, घटनानां विन्यासनिपुणता च सर्वान् जनानाकर्षति। अस्मिन्नाटकेऽभिनेयता, गेयता, भाषाया सरलता, रसानां मधुरता च नाटककलेवरे जीवनशक्तिं सञ्चारयन्ति।

कालिदासस्य समकालीनोऽश्वघोषः कविरपि शारिपुत्रप्रकरणनामकमेकं नाटकं प्रणीतवान्। कालिदासयुगे विशाखदत्तरचितस्य मुद्राराक्षसनाटकस्यापि स्पृहणीयं स्थानं वर्तते। इदं नाटकं राजनीतिप्रधानं कूटनीतिप्रमुखं च विद्यते।

सप्तमशतके सम्राट श्रीहर्षवर्धनः त्रीणि रूपकाणि रचितवान्-प्रियदर्शिका, रत्नावली, नागानन्दं च। अष्टमशताब्द्यां भवभूतिः कविः नाटकपरम्परामुज्जवलयतिस्म। कान्यकुब्जेश्वरः सम्राट् श्री यशोवर्मा भवभूतेराश्रयदाताऽभवत्। अयं सम्राडपि स्वयमेव कविरासीत्, स च रामाभ्युदयनामकमेकं नाटकं लिखितवान्, किन्तु तन्नाटकमद्यावधि कृतेऽप्यनुसन्धाने नामिलत्। कालिदासवत् प्रखरप्रतिभाशाली गुणगणमाली भवभूतिरपि त्रीणि नाटकान्यरचयत्-उत्तररामचरितम्, महावीरचरितम्, मालतीमाधवं च। एषु नाटकेषु दिगदिगन्तेषु पल्लविता पुष्पिता फलिता छत्रिता च बोभवीति। अस्य पदं-पदं, पद्यं-पद्यं प्रतिपदं च करुणरसेन ओतं-प्रोतं वर्तते। एतन्नाटकमीदृशं मर्मस्पर्शकं हृदयहर्षकं प्रभावोद्भावकं चास्ति यत् यस्य महिम्ना पाषाणाऽपि रोदितुम् आरभन्ते, बज्रहृदयमपि द्रवीभवति।

अस्मिन्नाटके सर्वाणि नाटकतत्त्वानि जीवमानानि सन्ति। अभिज्ञानशाकुन्तलेन सह यदि किमपि नाटकं तोलयितुं शक्यते, तदा उत्तररामचरितमेव क्षमते। अस्य नाटकस्य ललितकलितकोमलकान्तपदावली रत्नावलीव रसिकानां स्वान्तं नितान्तं जरीहर्ति। भव्या भावाः, परिपक्वभाषा, सारगर्भितानि पद्यानि, शिखरिणी छन्दांसि चास्य नाटकस्य लोकोत्तरतां जनप्रियतां च वर्धयन्ति। कालिदासस्य प्रकृतिवर्णनं वासनालिप्तत्वात् कृत्रिमतारज्जितम्, भवभूतेस्तु तन्मुक्तत्वात् स्वाभाविकं वर्तते, कृत्रिमताया गन्धोऽपि नास्ति, वासनायाः छायापि नास्ति। कालिदासस्य दुष्यन्त शकुन्तलादीनि

कामुकानि किं वा साधारणानि अनादर्शपात्राणि सान्त। भवभूते सीतारामादीनि पात्राणि श्रद्धास्पदान्यनुकरणीयान्युदात्तचरितानि पवित्राणि च सन्ति।

अष्टमशतकमध्ये श्री भट्टनारायणस्य नाम कदापि न विस्मरणीयम्। नाटकसंसारे वीररसप्रधानस्य नाटकस्य अभावप्रायं विलोक्य भट्टनारायणो वेणीसंहारनाटकं प्रणीतवान्। अस्य नाटकस्य रचयिता भट्टनारायणो मूलतः कान्यकुब्जक्षेत्रवासी अभूत्, किन्तु वङ्गप्रान्ते गत्वासौ तत्रत्य एवाजायत। अयं गौडदेशाधीश्वरस्य आदिसूरस्य प्रेमपात्रतामगात्। वेणीसंहारनाटकस्य पदे-पदे, पद्ये-पद्ये, पात्रे-पात्रे च वीररसो मूर्तिमान् भूत्वा न केवलं नाटकमेव अपितु दर्शकवृन्दमपि कोपाटोपितं चरिकर्ति।

वेणीसंहारे षडङ्काः सन्ति। सन्धिपताकादीनि सर्वाणि नाटकतत्त्वानि नाटकमध्ये सहजतया समुल्लसन्ति। नाटककारो वीररसं समुद्दीपयितुं भगीरथप्रयासमकरोत् तथा तद्विषये पूर्णतया साफल्यमप्यवाप्नोति। कवीरसानुकूलपदचयने कुशलशिल्पी वर्तते। वस्तुघटनादीनां विन्यासेऽप्यत्यन्तं दत्तावधानोऽवलोक्यते। भीमादीनां पात्राणां सिंहगर्जनं, तीव्रतर्जनं च निशम्य मृतका अपि कोपाविष्टाः भवन्ति। अत्र नाटके यादृशी भाषा तादृशो भावः, यादृशो भावस्तादृशीभाषा इति भाषाभावयोर्मणिकञ्चनसंयोगो न केवलमालोचकलोचननिचयं चोरयति अपितु भावुकानां भव्यभावानपि विभावयति। नहि भावपक्षः कलापक्षस्य दासः, नापि च कलापक्षो भावपक्षस्य भिक्षुकः अपितूभौ परस्परं भावयन्तौ (उपकुर्वाणौ) नाटकस्य रोचकतां प्ररोचयतः। वेणीसंहारस्याध्ययनेन महाभारतीयान्यशेषाणि चित्राणि सजीवरूपेण लोचनाग्रे नृत्यन्ति दरीदृश्न्ते। नाटकमध्येऽभिनेयता पात्राणां स्वाभाविकता, कथनोपकथनानां योजना च नाटकमहत्त्वमुत्तम्भयति। फलतो वेणीसंहारनाटकं हाटकमिव स्वकीयैरूर्जस्वलैरुत्कृष्टगुणैर्नाटकश्रेणीषु श्लाघनीयं स्थानं प्राप्नोति।

द्वादशशताब्दीमध्ये जयदेवकविः प्रसन्नराघवं नाटकं रचितवान्। अयं कवि वङ्गनरेशस्य श्रीलक्ष्मणस्य सभापण्डित आसीत्। अस्य पितुर्नाम महादेवः तथा मातुर्नाम सुमित्रा, गोत्रस्य नामकौडिन्यमासीत्। प्रसन्नराघवे नाटके सप्त अङ्का सन्ति। अत्र रामायणस्य सम्पूर्णा कथा उपनिबद्धा वर्तते। प्रसन्नराघवस्य पदावली, कल्पना, रचनाशैली चातीव मनोऽभिरामा चकास्ति उदाहरणं यथा-

कदली-कदली करभः-करभः,
करिराजकरः-करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलाम्,
इदमूरुयुगं न च मूरु दृशः।।

इदं नाटकमपेक्षातोऽप्यधिकं विस्तृतमजायत। पद्यानां बाहुल्यम्, कथाप्रवाहस्य शैथिल्यं च जनमानसेष्वारूच्यं जनयति। यद्यपि कवित्वदृशा नाटकमिदं हृदयहारकं, चारूचमत्कारकं रत्नमिव गुणगणमण्डितं भूत्वा पण्डितमण्डलं प्रीणयति, किन्तु नाटकत्वदृशा अस्य मूल्यं महत्तां नासादयति। नाट्यतत्त्वापेक्षया काव्यतत्त्वस्य (श्रव्यतत्त्वस्य) एवात्र प्राधान्यं विलसतीति तात्पर्यम्।

वस्तुतो नाटकसंसारस्य पौर्वापर्यं पर्यालोच्य इदं निनीयते यत् नाटकपरम्परायां प्रसन्नराघवनाटकं चरमं (अन्तिमं) नाटकं वर्तते। अस्मात् परं नाटकानां पतनयुगः प्रारब्धो भवति। पश्चादस्मिन् पतनयुगेऽपि बहुभिः कविभिः नाटकानि रचितानि, किन्तु तानि नाटकानि आभासमात्राणि स्वीकर्त्तव्यानि। ईदृशं किमपि न नाटकमस्ति यस्य नाटककोटौ गणना कर्त्तुं शक्येत। पतनयुगे प्रणीतानि संस्कृतनाटकानि पूर्वप्रणीतनाटकानामनुहरणमात्रं (छायामात्रं) सिध्यति।

अयं निष्कर्षः यत् जयदेवानन्तरं नहि केवलं नाटकानामेव अपितु संस्कृतभाषाया एव पतनं प्रारब्धम्। अद्यतनं संस्कृतस्य पठने पाठन एव रूचिर्नास्ति नाटकरचनाया का चर्चा? समाजवत् शासनसत्तापिं संस्कृतमुपेक्षते, संस्कृतज्ञा एव स्वशिशून् संस्कृतमपाठयित्वा म्लेच्छभाषां पाठयन्तीति महान् खेदविषयः।

## प्रस्तुतनाटकस्य बीजम्

पुराणापेक्षया वाल्मीकिरामायणस्य प्राचीनतां सर्वे ऐतिहासिका एकस्वरेण स्वीकुर्वन्ति। तत्र रामायणे बालकाण्डस्य दशमसर्गेऽपत्यलाभाय दशरथं प्रति मन्त्री सुमन्तः कथयति स्म। तत्कथानुसारेण ऋष्यशृङ्गोपाख्यानं सर्वप्रथमं रामायण एव दृग्गोचरी भवति। फलतो रामायणमेवास्य शान्तामङ्गलनाटकस्य जन्मदायकं कथाबीजं निर्णीतं भवति। रामायणे त्वित्थं कथास्वरूपं प्रतिपादितम्-

सुमन्त्र उवाच- हे राजन् दशरथ ! तव सखा रोमपादोऽङ्गदेशस्य राजा वर्तते। एकदा तस्य राज्ये चिरकालीना अनावृष्टिः समपद्यत। हा! हा! कुर्वन्तः तद्देशवासिनो जना राजानं शरणं ययुः। तद्दुःखदुःखितो दयालु राजा विप्राणां परामर्शेन ऋष्यशृङ्ग-मानेतुं वेश्याजनानादिदेश। वनंगतास्ताः वेश्याः यदा शृङ्गिणं मार्गयन्ति स्म तदा स्वेच्छया पर्यटञ्छृङ्गी स्वयमेव तासां सन्मुखे समुपागतः। स च स्वपितरं त्यक्त्वा कदापि चान्यं नरं नारीं वा नापश्यत्, तपस्यातिरिक्तं न किमपि संसारविषयेऽजानात्। अतः स्वजीवने सज्जितास्ता विचित्रवेश्या विलोक्य सोऽमन्दमानन्दमविन्दत। वेश्याभिः पृष्टः स सर्वं स्वपरिचयमदात्। एते तेजस्विनस्तापसा इति मत्वा तानाश्रममानयत।

तत्र तासां पाद्यादिविधिना बहुस्वागतमकरोत्। ताः गणिकास्तं वशीकर्तुं विविधान् हावभावान् अदर्शयन्। ततस्ताः स्वाऽऽनीतानि फलानि (मोदकान्) तस्मै भोजयित्वा बारम्बारमाश्लिष्टा च विभाण्डकाऽऽगमभयाच्छीघ्रमेव निर्जग्मुः। तद्भावभावितः स शृङ्गी ब्रह्मचिन्तनकालेऽपि तान् तापसानेव चिन्तयञ्छान्तिं नावाप।

अथ विरहव्याकुलः स शृङ्गी अन्येद्युरपि तस्मिन्नेव स्थाने समागतः, यत्र पूर्वं वेश्या जनानद्राक्षीत्। स्वयमुपागतं तं विलोक्य स्मेराननास्ताः फलजलैः पूजयित्वाऽवदन्-ऋषे! अद्य त्वां स्वकीयमाश्रमं नयेम। तत्रातिमधुरं फलं जलं चासाद्यते। एवं वशम्वदः स तपस्वी ताभिर्वेश्याभिः सारल्येन अङ्गदेशमानिन्ये। तदागमनमात्रेण अङ्गराज्ये जलं ववर्ष। रोमपादश्च तत्कोपशान्तये शान्तां कन्यां तस्मै ददौ--

अन्तःपुरं प्रवेश्यास्मै, कन्यां दत्त्वा यथाविधि।
शान्तां शान्तेन मनसा, राजा हर्षमवाप सः।।

अनेन प्रकारेण वाल्मीकीयरामायणे ऋष्यशृङ्गोपाख्यानं वर्तते। इदमेव प्रस्तुत-नाटकस्योद्भवस्थानं मन्तव्यम्। अत्र वर्णितमुपाख्यानमतीवसंक्षिप्तं साकाङ्क्षं चास्ति।

महाभारतस्य वनपर्वणि त्वस्योपाख्यानस्य विस्तृतं वर्णनं क्रमबद्धता च यथायोग्यं दरीदृश्यते।

श्रीमद्भागवते महापुराणे इदमुपाख्यानं-श्लोकद्वयेन सङ्केतितं तत्र नवमस्कन्धे त्रयोविंशोऽध्यायो द्रष्टव्यः-

सुतो धर्मरथो यस्य, जज्ञे चित्ररथोऽप्रजाः।
रोमपाद इति ख्यातस्तस्मै दशरथः सखा।। 9।7।।
शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग उवाह ताम्।
देवेऽवर्षति यं रामा, आनिन्युर्हरिणी सुतम्।। 9।।8।।

अनेन प्रकारेण अन्येष्वपि पुराणादिषु शृङ्गिणः कथा उपनिबद्धा वर्तते। तत्र क्वचित्संक्षेपेण, क्वचित् विस्तरेण, क्वचित् प्रकारान्तरेण कथाकलेवरं दृष्टिपथे पथिकायते। मन्यते हीदमुपाख्यानं पुराकाले आदिकविर्वाल्मीकिर्व्यासश्च स्वस्वग्रन्थेषु तदुपाख्यानं जुगुम्फ। अतएवेदं निष्कृष्यते यत् प्रस्तुतनाटकस्योद्गमस्थानं रामायणं महाभारतं च विद्यते।

# अङ्गदेश कहाँ है?

प्रस्तुत नाटक "शान्तामङ्गलम्" में राजा रोमपाद को अङ्गदेश का शासक कहा गया है, किन्तु यह प्रश्नपिशाच स्वयं ही उठ खड़ा होता है कि इतने लम्बे चौड़े भारतवर्ष में अङ्गदेश कहाँ से कहाँ तक है और किस स्थान का नाम है तथा इसका नाम अङ्ग क्यों पड़ा? इस उलझन को सुलझाने के लिये हम कुछ उपोद्बलकों के साथ प्रियपाठकों की सेवा में इस प्रकार उपस्थित हैं।

हम अपने छोटे से घर में देखते हैं कि प्रभातकाल में जो वस्तु जिस रूप में जहाँ पर रक्खी थी, सायंकाल में वह वस्तु उस रूप में वहाँ पर नहीं मिलती। उसमें कुछ न कुछ परिवर्तन या परिवर्धन या परिमर्दन हो जाता है, अथवा उसका सर्वथा लोप ही हो जाता है, क्योंकि प्रकृति परिवर्तनशीला और अद्भुतलीला वाली मानी गई है। घर की वस्तुओं को बालक से लेकर बूढ़े तक इधर-उधर करते रहते हैं, वे जान अनजान में तोड़-फोड़ भी डालते हैं। कोई बालक सौ का नोट गाय को भी खिला देता है तो कोई बुढ़िया गन्देपानी के धोखे में घड़ाभर घी नाली में फेंक देती है, इस प्रकार का घर में गड़बड़घुटाला चलता ही रहता है। यह प्रकृति विकृति क्षण-क्षण में होती रहती है। आप एक लाख वर्ष बाद अपने घर को जायें तो आपको अपना घर क्या गाँव भी, गाँव ही क्या जिला भी, जिला ही क्या प्रान्त भी नहीं ढूँढ मिलेगा।

जब छोटे से घर में इतने अल्पकाल में (प्रातः से सायं तक) परिवर्तन हो सकता है तो जिस अङ्गदेश की चर्चा आज से नौ लाख वर्ष पूर्व या इससे पूर्वकाल में हुई थी, उस अङ्गदेश में कितना भौगोलिक परिवर्तन हुआ होगा, इसे भगवान् ही जानें।

अन्वेषकों ने अङ्गदेश का अन्वेषण करते हुए विविध ग्रन्थों को छान डाला, स्थान-स्थान पर जाकर पुराने खण्डरों से बातें कीं, तत्तदवासियों से जानकारी की पुरातत्त्ववेत्ताओं से सम्पर्क किया होगा, किन्तु प्रश्न सुलझने के स्थान पर उलझता गया। हमको जो उपोद्बलक मिले, वे यहाँ पर दर्शाये जा रहे हैं:-

श्री वामन शिवराम आप्टे जी अपने संस्कृत अंग्रेजी कोश में बताते हैं कि वर्तमान बिहार प्रान्त का जिला भागलपुर ही अङ्गदेश है। कौशिकी कच्छ (कोसी नदी की कछार) से दक्षिण की ओर एवम् गङ्गा के दक्षिण तट पर इस देश की चम्पा नगरी राजधानी थी। इसे अङ्गपुरी, लोमपादपुरी, कर्णपुरी एवम् मालिनी भी कहते थे।

दण्डीरचित दशकुमारचरित की उत्तरपीठिका के द्वितीयोच्छ्वास में लिखा है- अङ्गेषु गङ्गातटे-वहिश्चम्पायाः------।

चीनी परिव्राजक ह्वेनसाङ्ग के मत में चम्पानगरी गङ्गा से चौवीस मील दूर पश्चिम की ओर एक पहाड़ी पर बसी हुई थी।

अंग्रेज ऐतिहासिक जनरल कनिङ्घम के मत में भागलपुर से पूर्व में पाथरघाट के दूसरी ओर एक चम्पापुर व चम्पानगर नामवाला गाँव था। यहीं रोमपाद की राजधानी थी।

संस्कृत के कुछ कवियों के अनुसार जिस देश का नाम अङ्ग था, वह मगध की राजधानी गिरिव्रज से पूर्व की ओर एवम् मिथिलानगरी के दक्षिणपूर्व में था। वहाँ का राजा कर्ण था (आप्टे का कोश)।।

श्री आप्टे जी ही स्वलिखित हिन्दी कोश में स्वमुख से ही बतलाते हैं कि यह अङ्गदेश बंगाल प्रदेश में वर्तमान भागलपुर के आस पास है। (देखिये वामनशिवराम आप्टे का हिन्दी कोश)।

गीताप्रेस गोरखपुर से प्रकाशित महाभारत की नामानुक्रमणिका कहती है-

अङ्ग एक प्राचीन जनपद का नाम है। दुर्योधन ने कर्ण को अङ्गदेश के राज्य पर अभिषिक्त किया (आदि पर्व 135/38)।

बिहार प्रान्त में भागलपुर और मुँगेर जिले के आसपास का प्रदेश जिसकी राजधानी चम्पापुरी थी (कहीं कहीं इसका विस्तार वैद्यनाथ धाम से लेकर भुवनेश्वर तक लिखा है-हिन्दी शब्दसागर) कर्ण यहीं का राजा बनाया गया था। तीर्थ यात्रा के अवसर पर अर्जुन का यहाँ आगमन हुआ था।(आदिपर्व 214/9.10)।

चम्पा-भागीरथी गङ्गा के तट पर अवस्थित एक प्राचीन नगरी, जिसमे त्रेतायुग में राजा लोमपाद रहते थे। द्वापर में यह अधिरथ सूत की राजधानी थी। यहीं गङ्गा के जल से राधा को वह पिटारी मिली जिसमें शिशु कर्ण बन्द था। (इत्यनुक्रमणिका महाभारतस्य)।

वाल्मीकीय रामायण में बालकाण्ड के तेईसवें सर्ग में अङ्गदेश के विषय में एक कथा मिलती है, इस कथा को विश्वामित्र जी राम लक्ष्मण जी को सुनाते हैं- हे राम! प्राचीनकाल में इस देश में कामदेव सदेह होकर रहता था। उसके हाथ पैर इत्यादि सारे अङ्ग विद्यमान थे। यहाँ पुण्याश्रम में (जो गङ्गा सरयू के सङ्गम पर है) भगवान् शङ्कर आकर तपस्या करने लगे। कामदेव ने इन पर आक्रमण कर दिया, उसी समय

शङ्करजी ने क्रुद्ध होकर एक ऐसी हुङ्कार की कि जिससे कामदेव के सारे अङ्ग गिर गये और वह अनङ्ग हो गया। हे रघुनन्दन! काम के अङ्ग विशीर्ण होने के कारण इसे अङ्गदेश कहते हैं-

अनङ्ग इति विख्यातस्तदा प्रभृति राघव।
सचाङ्गविषयः श्रीमान्, यत्राङ्ग स मुमोच ह।।

विद्वानों ने अङ्गादिदेशों की यात्रा निषिद्ध मानी है-

अङ्गवङ्गकलिङ्गेषु, सौराष्ट्रमगधेषु च।
तीर्थयात्रां बिना गत्वा, पुनः संस्कारमर्हति।।

इसका समाधान करते हुये शक्तिसङ्गम तन्त्र के सप्तम पटल में पार्वती से शङ्कर जी कहते हैं- हे प्रिये ! वैद्यनाथधाम से लेकर भुवनेश्वर तक अङ्गदेश माना गया है, इस सीमा में यात्रा करने से काई दोष नहीं लगता-

वैद्यनाथं समारभ्य, भुवनेशान्तगं शिवे।
तावदङ्गाभिधो देशो, यात्रायां नहि दुष्यति।।

यह वैद्यनाथ धाम कहाँ है? इस विषय में गीताप्रेस गोरखपुर में प्रकाशित संक्षिप्त शिवपुराण की टिप्पणी में लिखा है- चिताभूमि स्थान संथाल परगने में ई. आई. रेलवे के जसीडीह स्टेशन के पास वैद्यनाथ च. ऐसा पाठ मिलता है। इसके अनुसार परली में वैद्यनाथ की स्थिति है। दक्षिण हैदराबाद नगर से इधर परभनी नामक एक जंक्शन है। वहाँ से परली तक एक ब्रांच लाइन गई है। इस परली स्टेशन से थोड़ी दूर पर परली गाँव के निकट श्रीबैद्यनाथ नामक ज्योतिर्लिङ्ग है।

इस अन्तिममत के अनुसार आन्ध्रप्रदेश के हैदराबाद से लेकर उड़ीसा के भुवनेश्वर तक अङ्गदेश का विस्तार माना गया है। उस युग में बिहार का भागलपुर बंगाल का कुछ अंश तथा आसपास के अन्य प्रान्तों के भी अंश अङ्गदेश के नाम से ही प्रसिद्ध होंगे। ऐसा मान लेने से ही हमने नाटक में रोमपाद को अङ्गदेश (आन्ध्र प्रदेश) का प्रशासक बताया है, अर्थात् यह अङ्ग प्रदेश अपने में कई प्रदेशों के भूभाग को समेटे रहा होगा।

प्रिय पाठकों ! अब आप समझ गये होंगे कि प्रस्तुत नाटक में आन्ध्र प्रदेश व अङ्गदेश या नदियों आदि का वर्णन किस दृष्टि से किया गया है। आप हंस बनकर नाटक के गुण दोषों का विवेचन करेंगे, ऐसी मुझे आशा है।

# ॥अङ्कों का सारांश॥

## ॥ प्रथम अङ्क॥

प्रस्तावन्रा में वाल्मीकि द्वारा भेजे गये सूत्रधार और नटी मञ्च पर राजा रोमपाद की प्रशंसा करते हैं। तत्पश्चात् नाटक खेलने की बातचीत करने लगे। इसी समय रोमपाद के आगमन की सूचना पाकर दोनों निकल गये।

तदनन्तर परिकर के सहित राजा रोमपाद का प्रवेश हुआ। राजा ने मन्त्री के द्वारा घोषणा करा दी कि मेरे राज्य में सभी लोग अनावृत कपाट होकर (दरवाजा बिना बन्द करके) ही शयन करें। इसी समय धावक ने आकर सूचित किया कि वर्षा न होने से किसानों की फसल सूख रही है। समस्या का समाधान करने के लिये राजा ने कोषागार से देश में प्रचुर धन बँटवा दिया। इसी समय गर्गाश्रम से आये दो शिष्यों ने सूखे से व्याकुल आश्रम की सूचना दी। राजा ने आश्रम में ज़लव्यवस्था हेतु सौ कर्मचारियों को भेज दिया। दुर्गम अनावृष्टि समझ कर राजा ने जल व्यवस्था हेतु राज्य में चारों ओर अनेक इञ्जीनियर भेज दिये। गाँव-गाँव में नहर, जलाशय, वावली, कुआँ और नल आदि की व्यवस्था करा डाली।

इसी समय राजा को प्रथम सूचना मिली कि राज्य के एक भाग में टिड्डी दल घुस आया है जिसने किसानों की सारी फसल और पेड़ पौधे सफाचट करने प्रारम्भ कर दिये, द्वितीय सूचना मिली कि उद्यान (अभयारण्य) में कोई पागल सिंह घुस आया है जो रक्षकों और पालतू जन्तुओं का मटियामेट (संहार) कर रहा है।

राजा ने अभिमन्त्रित कर एक ऐसा बाण छोड़ा जो भयङ्कर शब्द करता (कलरोर शोर मचाता) हुआ तथा धुँआ उगलता हुआ टिड्डी दल की ओर गया और कलकल तथा धुँआ मात्र से टिड्डीदल को भगाकर वापस आया और राजा के तरकस में पुनः प्रविष्ट हो गया।

अब राजा अश्वारूढ़ होकर सिंह को मारने के लिये अभयारण्य की ओर चल पड़े।

## ॥ द्वितीय अङ्क ॥

रोमपाद की राजधानी चम्पानगरी में एक प्यासे पण्डित जी ने प्रवेश किया। इन्होंने महापौर (कोतवाल साहब) को बताया कि यदि रुद्राभिषेक कराया जाये तो सूखा से छुटकारा मिल सकता है। इतने में शिर पर मधु (शहद) का मटका लादे

हुये एक किराती (कंजड़ी) निकली, वह शहद बेंचती फिरती थी शहद ले लो शहद ! पण्डित जी के पूछने पर उसने कहा कि एक गिलास पानी लेकर पाँच गिलास शहद देती हूँ अर्थात् पानी से पँचगुना शहद देती हूँ।

उसके चले जाने पर घी बेचने वाली ग्वालिनी आई। पण्डित जी के पूछने पर उसने कहा गुरुजी! एक गिलास पानी लेकर तीन गिलास घी बेचती (देती) हूँ। यदि आप पीना चाहें तो आपको घी मुफ्त पिला सकती हूँ। पण्डित जी हँस पड़े। अरे बेटी तू कितनी भोली है पानी की प्यास कहीं घी से दूर होती है? अरे! यह कैसा नगर है जहाँ घी सुलभ है पानी दुर्लभ है। महापौर ने बताया कि यह चम्पा नगरी है। चन्द्रवंशी राजा रोमपाद यहाँ राज्य करते हैं। भयङ्कर सूखा पड़ा हुआ है।

इतने में कन्धे पर बेंहँगी में पानी बेंचता हुआ नरक नाम का एक आदमी आया। पण्डित जी ने जल पीने की इच्छा प्रकट की किन्तु जब वह मूल्य लेकर जल पिलाने की बात कहता है तो पण्डितजी ने कहा कि तू शूद्र है तेरा छुआ जल नहीं पिऊँगा। इतने में महापौर ने जलविक्रेता को समझाया, जिससे विक्रेता पण्डितजी को निःशुल्क जल देने लगा। फिर क्या था, पण्डितजी कई गिलास पानी निगल गये।

जब ब्राह्मण देवता तीर्थयात्रा पर निकल गये तब धावक द्वारा ज्ञात हुआ कि राजा ने तलवार से सिंह का सिर काट डाला। इतने में परिकर सहित राजा का प्रवेश हुआ। महापौर ने राजा से रुद्राभिषेक के सम्बन्ध में पण्डित जी की बात कही। राजा ने तत्काल ही रुद्राभिषेक प्रारम्भ करा दिया। इसी समय देहात के लोगों का हाहाकार सुनकर राजा ने द्रव्य और मशीनों द्वारा पुनः जलव्यवस्था करा दी। इधर रुद्राभिषेक के आरम्भ में ही एक बड़ा भारी पुराना बरगद का पेड़ उखड़ पड़ा जिससे यज्ञशाला का अतिथि भवन चकनाचूर हो गया, देवयोग से अनुष्ठानकर्ता ब्राह्मण लोग बच गये।

इसी समय देश के एक भाग से अकाल पीड़ित लोग आये। राजा ने पर्याप्त धनधान्य और सान्त्वना देकर उन्हें विदा किया। जब रानी आदि के साथ राजा बैठे थे कि इतने में आँधी के सहित पत्थर बरसाता हुआ एक जबर्दस्त भूकम्प आया, जिससे अनेकों भवन, मन्दिर और वृक्ष धराशायी हो गये, यज्ञ शाला भी पूर्णतया ध्वस्त हो गई, किन्तु सौभाग्य से अनुष्ठानकर्ता इस बार भी सुरक्षित रहे।

थोड़ी देर बाद जब भूकम्प का उपद्रव शान्त होता है तब सब लोग अन्तःपुर की ओर जाने लगे। बाहर निकलने पर सबको आकाश मे धूमकेतु (अशुभतारा) दिखाई पड़ा। इस नक्षत्र को देखकर सभी लोग दुःखी हुयं और इसी अवस्था में अन्तःपुर को चले गये।

## ।। तृतीय अङ्क ।।

दैवी प्रकोप से परिपीड़ित लोग हाहाकार मचाते हुये राजद्वार पर आये। उन्हें कञ्चुकी से पता चला कि जलवृष्टि हेतु राजा रानी स्वयं ही हलकर्षण कर रहे हैं। इस बात को सुनकर वे लोग वापस लौट गये। जब मञ्चपर राजा का प्रवेश होता है तो धावक ने सूचना दी कि उत्तर की ओर देश के कुछ भाग मे खम्प जाति के लोग (वनमानुष) घुस आये हैं और नर नारियों को मार-मार कर खा रहे हैं। यह सुनकर सेना के साथ राजा-रोमपाद उनसे लड़ने हेतु तुरन्त चल पड़े, साथ में सेनापति मृत्युञ्जय भी सेना का सञ्चालन कर रहा था। उत्तर क्षेत्र में सेना सहित पहुँच कर राजा और सेनापति ने वनमानुषों को ललकारा।

खम्पसेना को लेकर खम्पराज राजा और सेना पर टूट पड़ा। दोनों ओर के सैनिकों में भयङ्कर संग्राम होने लगा। इधर महापराक्रमी राजा रोमपाद ने हस्तलाघव दिखाते हुये अपनी तीक्ष्ण तलवार से खम्पराज का सिर काट डाला, सेनापति मृत्युञ्जय भी विकराल हथियारों को लेकर एवं कोपाटोपित होकर वनमानुषों का रुण्ड मुण्ड अलग-अलग गिराने लगा। राजा की विजयवाहिनी सेना ने थोड़ी ही देर में खम्प लोगों के टुकड़े-टुकड़े कर दिये। इस प्रकार राजा की विजय हुई।

खम्प लोगों के पास बहुत मूल्यवान् सामान था। उस सारे सामान और उनके अस्त्र-शस्त्र लेकर सेना के सहित राजा राजधानी को वापस लौट आये। इसी समय अकालग्रस्त लोगों का एक झुण्ड राजदरबार में पुनः आया। दयालु राजा ने खम्पों से जीती हुई सारी सामग्री इन लोगों को देकर सान्त्वना दी।

## ॥चतुर्थ अङ्क॥

इस अङ्क में कुछ सेवकों को साथ लेकर राजा अकालपीड़ित क्षेत्रों का दौरा करने निकले। साथ में वितरण करने योग्य सामान भी था। स्थान-स्थान पर मरणासन्न लोगों की दशा देखी। अकाल से तड़प-तड़प कर मर जाने के कारण गाँव के गाँव मानवरहित दिखाई दिये। लोग जहाँ-तहाँ पेड़ों की छाल, गोबर, पेशाव इत्यादि खा-पीकर निर्वाह कर रहे थे। नदी, तालाब, नहरें, वावली, कूप सब सूखे पड़े थे। जहाँ तहाँ भूखे प्यासे जानवर छटपटाकर दम तोड़ रहे थे। राजा ने साथ में लाये हुये सामान का यथाशक्ति वितरण किया।

राजा इस विनाश लीला को देखते-देखते और दुःखियों की कथा व्यथा सुनते-सुनते बहुत थक गये थे। दोपहरी में चिलचिलाती हुई धूप में वे लोगों के साथ एक निर्जनस्थान पर पहुँचे। वहाँ एकमात्र बरगद का पेड़ था जो बहुत लम्बा चौड़ा और हराभरा था। राजा सेवकों के साथ विश्राम हेतु उसी बरगद के नीचे ठहर गये।

इसी समय दाँत कटकटाते हुये राक्षस और राक्षसी इन सबको खाने की आशा से वटवृक्ष से उतरने लगे। जब इन्हें मारने के लिये राजा ने धनुष पर बाण का सन्धान किया, तो डरकर राक्षस ने कहा कि राजन्! मुझे मारिये नहीं, मैं दुर्भिक्षनामक राक्षस और यह अनावृष्टि नामक राक्षसी मेरी पत्नी है। हे राजन् ! एकबार पालतू मृग को मारने के कारण जाजलि ऋषि ने आपको शाप दे दिया था, कि पानी के विना तेरा देश नष्ट हो जाये, आपके द्वारा प्रार्थना करने पर ऋषि ने कहा कि यदि विभाण्डक के पुत्र शृङ्गी ऋषि तेरे राज्य में प्रवेश करेंगे तो मेरे शाप का अन्त हो जायेगा और देश में वृष्टि होने लगेगी।

महाराज ! उसी शाप के कारण हम दोनों भूत प्रेतों के साथ आप के देश को नष्ट भ्रष्ट कर रहे हैं। ब्रह्मा का वरदान मिलने के कारण हम दोनों को कोई मार भी नहीं सकता। राजन् ! यहाँ से उत्तर दिशा में थोड़ी दूर पर एक विशाल श्मशान भूमि है, जिसमें ज्वर, प्लेग, महामारी, रोग, शोक, भूत-प्रेत पिशाच आदि सैनिक रहते हैं। वे सब हमारे संकेत पर कार्य करते हैं। थोड़ी देर में वे सब यहाँ आने वाले हैं, अतः अब आप लोगों का यहाँ पर ठहरना ठीक नहीं है। दूसरी बात यह भी है कि आपके द्वारा आमन्त्रित सभी ब्राह्मण राजद्वार पर उपस्थित हो गये हैं, आपको वहाँ अनुपस्थित देखकर सभी ब्राह्मण क्रुद्ध होकर आपको शाप देने वाले हैं, अतएव यदि आप सूर्यास्त तक वहाँ न पहुँचे तो ब्राह्मण आपको शाप देकर चले जायेंगे।

मित्रभाव दिखाते हुये राजा ने कहा राक्षसराज ! यहाँ से तीस योजन दूर हमारी नगरी है। इस पर यह सूर्य भी अस्तोन्मुख हो रहा है। अतः हम लोग वहाँ पर तत्काल कैसे उपस्थित हो सकते हैं? तभी राक्षस ने सभी को एक शवच्छद (कफन) से ढक दिया। वे लोग आँखे खोलने पर अपने को राजदरबार में उपस्थित पाते हैं। राजा ने सभी गुरुजनों के परामर्श से शृङ्गी ऋषि को वीहड़वनों में गिरिकन्दराओं और आश्रमों एवं निर्जन स्थानों तथा घनघोर श्मशानों में ढूँढने हेतु गुप्तचरियाँ (वेश्यायें) भेजी। इस गुप्तचर विभाग का मुख्यनायक मायापति नेतृत्व कर रहा था।

## ॥ पञ्चम अङ्क ॥

इस गुप्तचर विभाग ने शृङ्गी का अन्वेषण दण्डकारण्य से आरम्भ किया। वहाँ पर ये लोग वन में लगी हुई आग में घिर गये किन्तु सौभाग्य से बच निकले। उसी वन में एक भिल्ल के वचनों का विश्वास मानकर ये लोग हिमाचल प्रदेश के जंगलों में जा पहुँचे। वहाँ पर वन, पर्वत, आश्रम और कन्दराओं में शृङ्गी की खोज करने लगे, तभी परशुराम के शिष्य से पता चला कि शृङ्गी ऋषि हेमकूट पर्वत पर

कौशिकी नदी के समीप तपस्या करते हैं। बस फिर क्या था ये लोग उधर को ही चल पड़े।

इधर एक भिखारी का पानी चुराने वाले वेद पाठी को पकड़कर दो सिपाही राजा के पास लाये। राजाने चोरी का सत्य प्रकरण पाया और आज्ञा दी कि आखें बाँधकर इस चोर (देवशर्मा) को देश से तब तक के लिये बाहर निकाल दो जब तक कि शृङ्गी ऋषि नहीं आते। रक्षकों ने वैसा ही किया।

तत्पश्चात् आर्तनाद करते हुये दुर्भिक्षग्रस्त लोग राजा की शरण में आये। कोषाभाव होने के कारण राजा ने इन दीन दुःखियों के लिये सारे राजकीयपात्र बाँट दिये। जब वे लोग जय-जयकार करते हुये चले गये तभी परशुराम के दो छात्र राजा के पास आये और उन्होंने कहा कि हमारे गुरुजी एक दीर्घसत्र का अनुष्ठान कर रहे हैं जिसमें वरण किये वैदिकों की दक्षिणा आपसे माँगने हेतु हम दोनों को यहाँ भेजा है। यह सुनकर राजा दुःखी हुये। उनकी रानी पृश्नि इस दुःख का कारण समझ गई। वह उसी समय अपने सारे अलङ्कार उतार कर यज्ञदक्षिणा हेतु छात्रों को दे देती है। राजा को पुत्र प्राप्त होने का और देश में वर्षा होने का आशीर्वाद देते हुये दोनों छात्र दक्षिणा लेकर निजाश्रम को चले गये।

राजा ने वृष्टि होने के लिये एक वरुण यज्ञ आरम्भ कराया। इसी समय राजधानी में मोटे-मोटे तथा असंख्य जहरीले चूहे, बिच्छू, वर्राटे आदि पैदा हो गये। इन विषाक्त जन्तुओं के कारण भाँति-भाँति की बीमारियाँ उत्पन्न हो गईं। ये बीमारियाँ धीरे-धीरे सर्वत्र फैल गईं। इस प्रकोप को दूर करने के लिये राजा ने सायुध सेना और सौषध वैद्यों की व्यवस्था की।

पानी न बरसने से देश में घोर दुर्भिक्ष बढ़ा। लोग त्राहि-त्राहि करते हुये राजा की शरण में पुनः आये। दीन दुःखियों के लिये बाँटते-बाँटते सब सम्पत्ति समाप्त हो चुकी थी। बेचारे राजा को अब कोई उपाय नहीं सूझ पड़ा तो उसने प्रतिज्ञा की कि यदि एक मास के अन्दर शृङ्गी ऋषि नहीं आते अथवा पानी नहीं बरसता तो मैं चिता में जलकर मर जाऊँगा।

॥षष्ठ अङ्क॥

इस अङ्क में वेश्यावर्ग को लेकर नायक (मायापति) हेमकूट पर्वत पर पहुँच गया। वहाँ शृङ्गी को ढूँढते-ढूँढते बहुत समय बीत गया। एक बार वे सब कौशिकी नदी के किनारे हिंसक जन्तु पूर्ण वन में जा रहे थे और जब थक कर लतामण्डप

में विश्राम करने लगे तब वहाँ पर आक्रमण करने वाले राक्षस और राक्षसी को इन्होंने बड़ी युक्ति से मारा।

इसी समय विभाण्डक के साथ श्रृङ्गी ऋषि कौशिकी में स्नान करने आये। इन छिपे हुये लोगों ने सिर के ऊपर सींग को देखकर पहचान लिया कि यही श्रृङ्गी ऋषि हैं और साथ में वत्स-वत्स कहने वाले ये बूड़े बाबा विभाण्डक जी इनके पिता हैं। जब वे दोनों स्नान कर अपने आश्रम को लौटने लगे तो ये लोग भी इनके पीछे लग गये और आश्रम के किनारे सघन लताओं (लतामण्डप) में छिप कर इनकी गतिविधियाँ देखने लगे। जब विभाण्डक श्रृङ्गी को अकेला छोड़ कर पानी लेने हेतु नदी को चले गये तो अवसर पाकर नायक श्रृङ्गी के पास गया। इस साधुवेष धारी नायक को महात्मा समझ कर श्रृङ्गी ने बड़ा स्वागत किया। प्रयोजन पूछने पर नायक ने कहा कि विभाण्डक के दर्शन करने आया था किन्तु शीघ्रता के कारण अभी जा रहा हूँ और कल आकर दर्शन करूँगा। श्रृङ्गी ने कहा कि वे कल नहीं मिल सकेंगे, क्योंकि वे प्रातः काल ही कुश लेने हेतु दूर के वन में जायेंगे और सायं तक लौटेंगे। नायक ने कहा कि अच्छा तो फिर अन्य किसी दिन दर्शन कर लूँगा। इसी समय वेश्या द्वारा किये हुये काकशब्द (जो भय का संकेत था) को सुनकर तथा विभाण्डक का आगमन जानकर नायक लतामण्डप में लौट आया।

रात्रि में इन दोनों के सो जाने पर यही नायक दोनों के ऊपर और आश्रम में उस विभूति (भस्म) को फैलाता है, जो अभिमन्त्रित कर ब्राह्मणों ने इन्हें चम्पा नगरी में दी थी।

दूसरे दिन जब विभाण्डक कुश लेने चले गये तब सजी धजी हुई वेश्याओं ने आश्रम में प्रवेश किया। स्वागतोपचार होने पर इन वेश्याओं ने अपने को चम्पक वनवासी बताया और कहा कि सम्प्रति बदरीवन से आये हैं, साथ में फल जल भी प्रसाद रूप में लाये हैं। इस प्रकार श्रृङ्गी को मोदक खिलाये और आसव पिलाया।

स्त्री और पुरुष में भेद न समझने वाले भोले भाले श्रृङ्गीऋषि इनको महात्मा समझकर इन पर और इनकी कपटपूर्ण बातों पर दृढ़विश्वास करते रहे। इसी प्रकार बातचीत और मेलजोल करते कराते सारा दिन ही व्यतीत हो चला। इसी समय नायक द्वारा किये गये काकारव को सुनकर वे चारियाँ श्रृङ्गी का छाती से आलिङ्गन कर बाहर निकल गईं।

इधर विभाण्डक के आने पर पुत्र ने सारी बातें बताई, विभाण्डक समझ गये कि दूध में कुछ काला है। इसीलिये उन्होंने पुत्र को भाँति-भाँति के ऐसे उपदेश दिये जिससे वह अपने ब्रह्मचर्य पर अडिग रहे।

दिन का तृतीय प्रहर समाप्तप्राय था। इसी समय परशुराम का शिष्य आया और उसने सूचना दी कि गुरुजी ने दीर्घसत्र हेतु आपको बुलाया है अन्य महात्मा भी मार्ग में प्रतीक्षारत हैं। अतः आप अभी मेरे साथ चलिये। विभाण्डक परशुधर की आज्ञा का उल्लङ्घन न कर सके और शृङ्गी को समझाबुझाकर पन्द्रह दिन के लिये शिष्य के साथ चल दिये। वे थोड़ी ही दूर पहुँच पाये कि उन्हें पुत्रममत्व ने सताया और वे शृङ्गी को भी साथ में ले जाने के लिये वापस लौट आये। जब शृङ्गी ने चलने को पैर उठाया तभी उन्होंने स्वयं ही छींक दिया, उस पर भी सरला नामक वेश्या ने बिल्ली बनकर रास्ता काट दी। उस पर भी बिमला और चपला नामक वेश्याओं ने शृगाली शब्द बनाकर रोने लगीं। उस पर भी नायक ने काँव-काँव कर अशुभ शकुन दर्शाया। इन सब अपशकुनों के कारण शृङ्गी की यात्रा रोककर विभाण्डक जी जब बहुत दूर चले गये और उनके लौटने की कोई सम्भावना न रही तब नायक आश्रम की ओर लौटने लगा, उसी समय मार्ग भटके हुये देवशर्मा मिले जिनको साथ लेकर नायक लतामण्डप में पहुँचा। पूर्वपरिचित चरियों से शर्मा ने अपनी व्यथा कथा कही। पिता के अभाव में मन बहलाने हेतु शृङ्गी जी इन सन्तों के साथ चम्पक वन जाने को तैयार हो गये। नायक ने कपटपूर्वक श्री शर्मा को देवदूत बना कर आश्रम का प्रहरी बनाया और प्रातःकाल में प्रस्थान करने के लिये सब सो गये।

## ॥सप्तम अङ्क॥

इस अन्तिम अङ्क में एक भिखारी और महात्मा के प्रसङ्ग से ज्ञात होता है कि विभाण्डक ऋषि परशुराम के दीर्घ सत्र से निवृत्त होकर अपने आश्रम को वापस लौट आये। आश्रम में शृङ्गी को न पाकर खोजते-खोजते बदरीनाथ में पहुँचने वाले हैं।

इधर एकमास व्यतीत हो गया किन्तु न शृङ्गी ऋषि आये और न ही पानी बरसा, अतः अब राजा रोमपाद अपनी पूर्व प्रतिज्ञा के अनुसार चिता में जलकर मरने की तैयारी कर रहे हैं। राजा की आज्ञा से कञ्चुकी चिता तैयार कर अग्नि से प्रज्वलित करता है। चिता में जलमरने के लिये राजा और रानी चिताग्नि की परिक्रमा करने लगे। सारा समाज शोकसागर में निमग्न हो रहा था। इसी समय अयोध्या से आये हुये दशरथ, वशिष्ठ तथा अन्यान्य महानुभाव रोमपाद व रानी को जलने से मना करते हैं। किन्तु राजा और रानी किसी की बात नहीं मानते। उनकी पुत्री शान्ता फूट-फूट कर रोने लगी और माता-पिता से महल में लौट चलने के लिये कहती और दोनों से लिपट जाती है।

इसी समय उत्तर दिशा से काली अँधेरी झुक गई, देखते-देखते ही उमड़-घुमड़ कर श्यामल घटायें घिर आईं, चपला चकाचौंध करने लगी, गर्जना होने लगी तथा मोटी-मोटी बूँदों से बरसा होने लगी। फिर भी भावावेश में आकर राजा और रानी. जनता की हाहाकार की परवाह न कर धधकती चिता में प्रवेश करने ही वाले थे कि अकस्मात् आकर मायापति (नायक) ने उच्चस्वर से सूचना दीं कि राजन् ! शृङ्गी ऋषि को साथ लिये हुये वेश्यायें नगर की वाटिका तक आ चुकी हैं। सूचना को सुनकर और वर्षा देखकर राजा रानी के सहित सारा समाज आनन्द सागर में डूबने लगा। फिर क्या था, बाजे गाजे और वेदघोष के साथ शृङ्गी ऋषि उसी स्थान पर (वाटिका में) लाये गये, भृत्यों ने उस स्थान के बहुत ही सुसज्जित बना दिया था। ऋषि के आते ही घड़घड़ाती हुईं मेघ घटायें जोर-शोर से बरसनी लगीं, पानी की झड़ी लग गई। चारों ओर हर्षोल्लास छा गया। राजा अभी ऋषि को माल्यापर्ण कर ही पाये थे कि भिखारी का पानी चुराने वाले देवशर्मा भी तुरंत आ गये राजाने उन्हें प्रणाम कर क्षमा माँगी।

इसी समय नेपथ्य से चिल्लाकर अनावृष्टि राक्षसी ने शृङ्गी ऋषि को सूचना दी कि हे ऋषे ! ये सब वेश्यायें हैं महात्मा नही हैं। ये वेश्यायें तुम्हें ठगकर चम्पानगरी में आई हैं। वस्तुस्थिति समझ कर शृङ्गी ऋषि ने रौद्ररूप धारण कर लिया और हाथ में जल लेकर शाप देने लगे कि गर्मतेल, अङ्गारों और चट्टानों की ऐसी वर्षा हो कि जिससे प्रातः काल तक अङ्गदेश का नाम निशान तक मिट जाये।

वे शाप देने के लिये वाक्य का अभी अर्धोच्चारण ही कर पाये थे कि इतने में योगबल से उनके पिता विभाण्डक ऋषि वहाँ पर आ पहुँचे। उन्होंने पुत्र को शाप देने से रोक दिया। राजा ने उनका बड़ा ही स्वागत किया। यहाँ तक कि उन्हें प्रसन्न करने हेतु राजाने शृङ्गी ऋषि के साथ अपनी कन्या शान्ता का विवाह भी ठान दिया। जिस समय वरवधू सुसज्जित करने हेतु इन दोनों को अन्तःपुर ले जाया गया तो अकस्मात् एक देवकन्या दोनों को उठाकर आकाश में विलीन हो गई। थोड़ी देर के लिये हाहाकार मच गया।

किन्तु क्षण मात्र में ही दिव्य अलंड्कारों से अलङ्कृत कर उन दोनों को वह देवकन्या पूर्वस्थान में ही विराजमान कर गई, शृङ्गी जी के मस्तक पर अब सींग भी नहीं था। इस प्रकार उन दोनों को देखकर शोक का वातावरण पुनः हर्षोल्लास में परिवर्तित हो गया।

विभाण्डकजी ने शृङ्गी की उत्पत्ति का सारा रहस्य समझाया और कहा कि वह देवकन्या शृङ्गी की माता ही रही होगी जो अपने पुत्र को और पुत्रवधू को अलङ्कृत करने के लिये ले गई। शृङ्गी की सेवा से प्रसन्न होकर जाजलि ऋषि ने कहा था कि हे वत्स! जब तुम्हारी माता तुम्हें अब कभी देखेगी तो कुरूप करने वाला तुम्हारे मस्तक का यह सींग नहीं रहेगा। अतः वैसा ही हुआ।

अभी विभाण्डक ऋषि अपनी बात कह ही रहे थे कि बूढ़े जाजलि ऋषि भी शृङ्गी का विवाहोत्सव देखने आ पहुँचे वातावरण जय-जयकारों से गूञ्ज रहा था। लोग हर्षोन्मत्त होकर झूम रहे थे। ऋषियों और विद्वानों ने शान्ता और शृङ्गी का पवित्र विवाह सम्पन्न किया। रोमपाद ने अपने जामाता को राजपाट देकर जंगल में तपस्वी जीवन व्यतीत करने की इच्छा प्रकट की किन्तु विभाण्डक ने उन्हें ऐसा करने से मना किया और कहा कि राजन् ! मेरा आशीर्वाद है कि तुम्हारे तेज से इस रानी से एक सुन्दर राजकुमार जन्म ले।

जाजलि ऋषि ने विभाण्डक का समर्थन करते हुए कहा कि राजन् ! तुम अपने पुत्र का तथा दौहित्र (कन्या के पुत्र) का मुख देखने के पश्चात् जैसा उचित समझो वैसा करना।

इस प्रकार जलवृष्टि के साथ-साथ आनन्द वृष्टि के वातावरण में भरतवाक्यपूर्ण होता है।

## ॥ छाया पुरुष ॥

चम्पानगरी रोमपादादीनामनेकजनानां सन्मुखे विभाण्डकर्षिः शृङ्गिणं वदति यत् हे पुत्र! यदाहं बदरीवनान्नीलगिरिं प्रति प्रस्थातुमुद्यतस्तदाऽकस्माच्छायापुरुषप्रभावेण विदित-वेदितव्योऽभवम् यत् रोमपादाय शप्तुं मे पुत्र उदकस्पर्शं करोतीति न छायापुरुषोक्तमनृतं भवतीति मन्यमानोऽहं त्वां वारयितुं तत्क्षणेमेव अत्र उपस्थित इति।

अत्र प्रकरणे आश्चर्यपूर्णे द्वे शङ्के भवतः प्रथमा तावत्कोऽयं छायापुरुषः योहि विजनदेशे उपस्थितो भूत्वा विभाण्डकं शापवृत्तान्तमवोचत्।

द्वितीया तावत् बदरीवनं हि उत्तराखण्डे बदरीधामनामा वर्तते, चम्पानगरी च दक्षिणभारते आन्ध्रप्रदेशे (बिहारे वा) स्वीक्रियते। उभयोः स्थानयोरनेकयोजनानामन्तरं (दूरता) यात्रा वरीवर्ति। यदि कश्चित् यात्री बदरीवनात् पदयात्रां कृत्वा आन्ध्रप्रदेशमाप्तुमिच्छेत् तदा स यात्री बहुमासानन्तरमेव आन्ध्रं प्राप्तुं शक्नुयात्, तत्कथङ्कारं चिरकालयातव्या यात्रा ऋषिणा क्षणेन यापितेतिमहानाश्चर्यविषयः।

नह्यत्र कश्चिदाश्चर्यविषयः सिद्धपुरुषाणां योगिनां गतिर्विलक्षणा भवति। नह्यस्मदादीनां साधारणजनानामिव तेषां मनोरथाः देशकालक्रियाकारकादीनपेक्षन्ते अपितु इच्छामात्रेणैव तन्मनोरथाः फलन्ति। एवं साध्यसाधनादि नियमा अपि जनेष्वेव प्रवर्तन्ते योगिनां भावास्तु निरपेक्षयमा अपि सिध्यन्ति। ते योगिनां ज्ञानं बलं च असीमितमबाधितं च भवति। निजतपो महिम्ना एकस्मिन्नेव काले विभिन्नरूपाणि धृत्वा योगी अनेकेषु स्थानेषु द्रष्टुं शक्यते। सामान्यजनानां विषयः शङ्काक्रान्तो भवति, योगिजनानां विषये तु शङ्कायाः गुञ्जांशोऽपि नास्ति। फलतः प्रस्तुते आश्चर्यजनकविषये द्वये शङ्कापङ्कलङ्क-कणिकापि न कर्त्तव्या।

ननु पुत्रान्वेषणपरिश्रमात्प्रागेव कथं न तेन योगमहिम्ना सर्वं रहस्यमज्ञायि? सर्वसमर्थाः अपि योगिनः स्वशक्तिं न प्रदर्शयन्ति नापि च नियतिनियमान्निपातयन्ति। उक्तं च जानन्नपि हि मेधावी जड़वल्लोक आचरेत्। यच्च निर्लिप्ता अपि योगिनः प्रपञ्चे लिप्ता इव प्रतीयन्ते, तत्सर्वं लीलामात्रम्। नहि निष्कामा आप्तकामाः किमपि काङ्क्षन्ति न निन्दन्ति नैव च प्रशंसन्ति। फलाकाङ्क्षाविरहितत्वाच्छुभाशुभकर्मणापि न लिप्यन्ते। ऐन्द्रजालिक इन्द्रजाललीलया दर्शकान् विमोहयन्नपि यथा स्वयं न मुह्यति, तथैव योगिनः शुभाऽशुभकर्मणा परान् विमोहयन्तोऽपि न तत्र स्वयं विमुह्यन्ति। पुष्करपलाशवन्निर्लिप्तास्तिष्ठन्ति। फलतो नियतिनियोगादुपस्थायि तेन छायापुरुषेण सर्वं साधितमिति न कापि संशीतिः।

कस्तावच्छायापुरुष इति प्रश्नं समाधातुमहमहर्निशमनेकान् प्रयत्नानकरवम्। छायापुरुषस्य यथार्थं स्वरूपतासिद्धिप्रकारं च ज्ञातुं महातुरो भूत्वा अनेकग्रन्थानामालोडनं विलोडनं मन्थनं रोमन्थनं च अकार्णम्। विविधपुस्ताकलयान् गामं-गामम्, नैक पुस्तकानि पाठं-पाठम् च यदा छायापुरुषस्य रूपरेखानाऽमिलत् तदानेकविचारं कारं-कारं चिन्ताजर्जरचेतसा अहं परामशान्तिमभजम्। फलतो यदा नाना ग्रन्थानां विचारविथिकास्वविरामं भ्राम-भ्रामं परिश्रान्तिम् अगच्छम्, ग्रन्थावलोकनं विसृज्य महात्मभिः सह सम्पर्कमकार्णम्। मयेत्थं विचारितं यदयं योगसम्बन्धी विषयोऽस्ति। अतोऽवश्यं अस्य ज्ञातारो महात्मानो भवेयुरित्याशया ये महात्मानः, साधवः, सन्यासिनो, योगिनः, सन्तो, महामण्डलेश्वराः, विरक्ताः, शैवाः, शाक्ताः, वैष्णवाः, अघोरपथानुयायिनः, श्मशानवासिनो बौद्धजैनमतावलम्बिनो रक्तपीतकृष्णश्वेताम्बरधारिणो जटिलाः, मुण्डिनो दिगम्बराः, भस्माम्बराः, ब्रह्मचारिणो, वानप्रस्थाः, भिक्षुकाः, उदासीनाः, सत्सङ्गिनः, कुटीचक्रः, परमहंसाश्च अर्थात् ये ये दृष्टाः ये ये श्रुतास्तेषां सर्वेषां पार्श्वे गत्वा-गत्वा तच्चरणांश्च नत्वा-नत्वा तेभ्यः पत्रपुष्पफलानि च दत्त्वा-दत्त्वा अहं छायापुरुष

विषयेऽपृच्छम्। ते च महाभागाः प्रश्नं श्रावं-श्रावं मम मुखाकृतिं दर्शं-दर्शं स्वगौरवरक्षणाय यादृशं तादृशमुत्तरमुदीरयन्तो मौनधारणमकुर्वन्। बहवो महात्मानस्तु मम प्रश्नाशयमज्ञात्वा मह्यमत्यन्तमकुप्यन् अभद्रशब्दानप्यवोचन्। अनेन प्रकारेण महात्मनां भवने-भवने, कुटीरे-कुटीरे, द्वारे-द्वारे च मया कृतमाहिण्डनम्, किन्तु छायापुरुषविषये सर्वैः मौनमेवोत्तरं प्रदत्तम्।

"शिवस्वरोदय" ग्रन्थेऽस्य छायापुरुषस्य वर्णनं सविस्तरं समुपलभ्यते। तत्र हि कैलासपर्वतस्थः शिवोऽमरकथां श्रावयन् पार्वतीं कथयति-

एकान्तं विजनं गत्वा, कृत्वादित्यं च पृष्ठतः।
निरीक्षयेन्निजच्छायां, कण्ठदेशे समाहितः॥ 352॥

अर्थ- एकान्त निर्जनस्थान में जाकर सूर्य को पीठ के पीछे करके साधक खड़ा होवे। तत्पश्चात् भूमि पर पड़ी हुई अपनी छाया में कण्ठ को सावधानी से देखे।

ततश्चाकाशमीक्षेत्, ह्रीं परब्रह्मणे नमः।
अष्टोत्तरशतं जप्त्वा, ततः पश्यति शङ्करम्॥ 353॥

अर्थ- सबसे पहले ह्रीं परब्रह्मणे नमः इस मन्त्र का एक सौ आठ बार जप कर ले। तत्पश्चात् अपनी छाया में कण्ठ को देखें। कण्ठ की छाया देखते-देखते जब आँखें थक जायें तब तुरन्त ही आकाश की ओर देखना चाहिये। तभी आकाश में शङ्कर जी दिखाई देंगे। यहाँ पर यह बात ध्यान देने योग्य है कि अपनी छाया में कण्ठ को दृष्टि गड़ाकर देखते रहना चाहिये। दृष्टिनिर्निमेष (अपलक) होनी चाहिये। देखते-देखते जब दृष्टि थकने लगे तभी तुरन्त ही आकाश में देखने लगे। ऐसा बार-बार करने से अपनी छाया के आकार वाला एक बड़ा पुरुष आकाश में दिखाई देगा। यह पुरुष बहुत शीघ्र विलीन भी हो जाता है। प्रतिदिन के अभ्यास से यह पुरुष स्पष्ट होता हुआ साधक के समीप में आ जायेगा। छः मास के दृढ़तर अभ्यास से यह सिद्ध हो जाता है, फिर तो साधक से बातचीत करता है और इच्छाओं की पूर्ति करता है। हे पार्वती जी ! इसका स्फटिकमणि के समान अत्यन्त श्वेतवर्ण होता है:-

शुद्धस्फटिकसंकाशं नानारूपधरं हरम्।
षण्मासाभ्यासयोगेन भूचराणां पतिर्भवेत्।
वर्षद्वयेन ते नाथ, कर्त्ता हर्त्ता स्वयं प्रभुः॥ 35॥

अर्थ-नानारूपधारण करने वाले इन शङ्कर भगवान् का शुद्ध स्फटिकमणि के समान श्वेतवर्ण है। छः मास तक लगातार अभ्यास करने पर सब प्राणी साधक के

वश में हो जाते हैं। यदि दो वर्ष तक लगातार अभ्यास करता रहे तो साधक सारी सृष्टि का कर्त्ता धर्त्ता और संहर्त्ता हो जाता है। अर्थात् योगी सर्व समर्थ हो जाता है।

त्रिकालज्ञत्वमाप्नोति, परमानन्दमेव च।
सतताभ्यासमाप्नोति, नास्ति किञ्चित्सुदुर्लभम्॥ 355॥

अर्थ- निरन्तर अभ्यास करते रहने से योगी को तीनो कालों का ज्ञान हो जाता है। उसे परम आनन्द का अनुभव होता है। ऐसे योगी को कुछ भी दुलर्भ नहीं होता। इस प्रकार सूर्यप्रकाश में छायापुरुष की सिद्धि का वर्णन किया। चन्द्रप्रकाश में भी इसी प्रकार छायापुरुष की सिद्धि करनी चाहिये।

## (दीपक द्वारा)

कमरे में घृत या तेल का दीपक जलाकर उसके प्रकाश में अपनी छाया (खड़े होकर या बैठकर) देखनी चाहिये फिर कमरे की छत पर दृष्टि लगाकर देखें तो अपनी छाया ही श्वेतवर्ण की दिखाई देगी, दृढ़तर अभ्यास करने से छाया पुरुष प्रत्यक्ष बोल-चाल कर आपके पास आ जायेगा। किन्तु कमरे की छत में आसमानी रंग का कपड़ा या कागज चिपका रहना चाहिये।

## (दर्पण द्वारा)

अपनी बराबरी का लम्बा चौड़ा शीशा सामने रखे उसमें अपना प्रतिबिम्ब देखे, उसमे भी नासाग्रभाग में दृष्टि लगा दे, आँखे थकने पर आसमान या कमरे की छतपर पूर्ववत् देखे तो कुछ दिन में छाया पुरुष की सिद्धि हो जाती है।

इसी प्रकार अन्य विधियों से भी छाया पुरुष की सिद्धि की जा सकती है। सभी विधियों में प्रथम ॐह्रीं परब्रह्मणे नमः मन्त्र का 108 बार जप करना अनिवार्य है।

इसी छायापुरुष ने बदरीनाथ में विभाण्डक को बताया था कि तुम्हारा पुत्र रोमपाद को शाप दे रहा है।

# ॥ पात्रपरिचय॥

## पुरुष पात्र

- रोमपाद-राजा (अङ्गदेश)
- चन्द्रचूड़- मन्त्री
- धावक- सन्देशवाहक
- वज्रबाहु- महापौर (कोतवाल)
- मृत्युञ्जय- सेनापति
- मुद्गल- राजपुरोहित
- भल्लाट- विदूषक
- विभाण्डक- शृङ्गी के पिता
- शृङ्गी- विभाण्डक के पुत्र
- भद्रमुख- कञ्चुकी
- मायापति- गुप्तचरियों का नायक
- दुर्भिक्ष- राक्षस
- अनावृष्टि- राक्षस की पत्नी राक्षसी
- देवशर्मा- भिखारी का पानी चुराने वाला
- प्रजाजन

## नारी पात्र

- पृश्नि- रोमपाद की रानी
- शान्ता- रोमपाद की दत्तक कन्या
- ललिता- दासी
- विमला- वेश्या
- चपला- वेश्या
- सरला- वेश्या

श्रीः

॥अथ॥

# शान्तामङ्गलम्

## (नाटकम्)

### प्रथमोऽङ्कः

या सर्गस्थितिनाशहेतुरमला या कोमला शीतला,
या रत्नप्रकृतिश्चराचरमिदं स्वच्छं यया दृश्यते।
यस्याश्चाकृतयो लसन्ति विविधाः सा नीरमूर्तिर्हरेः,
शान्तामङ्गलमातनोतु सततं वो रोमपादादिषु।।

---

न्यायानन्दमतीन् वशिष्ठसदृशान् सम्मान्यभाजो गुरून्,
सस्नेहं शुभश्रद्धया पदयुगं नत्वा कृतर्थोऽभवम्।
सच्चाख्यान् शुभसुन्दरान् प्रभुवरान् हंसाख्यरूपानहो,
वात्सल्याकुलमानसान् मयि परान् नित्यं नमामो गुरून्।।
आरम्भे हृदये सर्वं, ज्ञानेन परिपूरितम्।
रामभद्रसमं देवं, गुरुपादं नमाम्यहम्।।
ऊषा च सरला माता, शिवदत्तः पिता मम।
शान्तामंगल दृश्ये हि, तयोस्स्मृति मया कृता।।
ऊषा वै सरला टीका संस्कृते परिभूषिता।
हिन्द्याञ्च राष्ट्रभाषायां शिवदत्ती सतां कृते।।

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारं परिपालयन् तथा समाप्तिकामो मङ्गलमाचरेदिति श्रुतिचोदनां च सम्मानयन् ग्रन्थकारः नाटकारम्भे आशीर्वादात्मकं मङ्गलाचरणमातनोति-

**अन्वयः**—या सर्गस्थितिनाशहेतुः, या अमला, कोमला, शीतला या रत्नप्रकृतिः, यया इदम् चराचरम् स्वच्छम् दृश्यते। यस्याः च विविधाः आकृतयः लसन्ति, सा शान्ता हरेः नीरमूर्तिः वः रोमपादादिषु सततम् मङ्गलम् आतनोतु।

---

**हिन्दी व्याख्या**—

जो जलमूर्ति संसार के उद्भव, पालन और संहार का कारण है, जो श्वेत कोमल और शैत्य गुणवाली है, तथा जो चौदह रत्नों को उत्पन्न करने वाली है, और जिससे (धुलकर) संसार के सभी जड़चेतन पदार्थ स्वच्छ दिखाई देते हैं एवम् नदी कूपादि में जिसकी विविध आकृतियाँ दिखाई देती हैं, शान्त रहती हुई भगवान्

**व्याख्या**—या=नीरमूर्तिः, सर्गः=उत्पत्तिः, स्थितिः= अवस्थानम् धारणमित्यर्थः। नाशः=संहारश्च तेषां हेतुः=कारणमिति द्वन्द्वगर्भकस्तत्पुरुषसमासः। या अमला=निर्मला शुक्लवर्णेत्यर्थः। कोमला=द्रवरूपा, शीतला=शीतस्पर्शा, जलस्य शीतस्पर्शलक्षणत्वात्। या रत्नप्रकृतिः= चतुर्दशरत्नानामुत्पत्तिस्थानम्। यया=नीरमूर्त्या जलराशिनेति भावः।

---

की वह जलमयी मूर्ति (जलरचना) आप लोगों के समस्त अङ्गों के लिए शाश्वत् कल्याण प्रदान करे।

## टिप्पणी

अतएव "ससर्जादौ तासु बीजमवासृजत्" इस मनुस्मृति के आधार पर ब्रह्माजी ने सर्वप्रथम जल पर ही सृष्टि रची थी, सृष्टि से पूर्व जल की रचना ब्रह्मा ने की और उस पर सृष्टि की रचना हुई ऐसा भी अर्थ हो सकता है। अतः जल को सृष्टि का जन्मदाता कहा जाता है।

जन्म से लेकर मृत्यु तक पानी की पदे-पदे आवश्यकता होती है इसके बिना जीवन का रहना असम्भव है, अतः पानी का दूसरा नाम जीवन कहा गया है। शरीर में भी पानी की मात्रा अधिक है, अतएव पानी को पालनकर्ता कहा गया है।

प्रलय के समय यही पानी इतना बढ़ जाता है कि जिसमें डूबकर सारी सृष्टि विलीन हो जाती है। अतः पानी को संहार का हेतु कहा गया है।

देवदानवों ने मिलकर समुद्र के जल का मन्थन किया था जिससे चौदह रत्न निकले। अतः पानी को रत्नप्रकृति (रत्नों का उत्पत्ति जनक) कहा गया है। चौदह रत्न इस श्लोक में संगृहीत हैं:-

लक्ष्मी-कौस्तुभ-पारिजातक सुराः धनवन्तरिश्चन्द्रमाः,
धेनुः कामदुधा सुरेश्वरगजो रम्भादि देवाङ्गनाः।
अश्वः सप्तमुखो विषं हरिधनुश्शङ्खोऽमृतं चाम्बुधेः,
रत्नानीति चतुर्दशप्रतिदिनं कुर्वन्तु ते मङ्गलम्।।

आकृति से यह तात्पर्य है कि जब पानी कूप थाली इत्यादि में भरता है तो उसकी भी आकृति गोल हो जाती है, चौकोर क्यारी आदि में भरता है तो उसकी भी आकृति चौकोर हो जाती है, शीशी आदि में लम्बी आकृति हो जाती है। पानी जैसे-जैसे आधार में भरता है वैसी ही वैसी आकृतियाँ बना लेता है। इसीलिए पानी को विविध आकृति वाला कहा गया है। अथवा यही पानी ओला, बर्फ, भाप, फेन, बुदबुद, तराङ्गादि रूप धारण कर लेता है, यही पानी दूध, रक्त, मूत्र, सुरा आदि के रूप में परिवर्तित हो जाता है, अतः पानी की विविध आकृतियाँ कही गई हैं।

भगवान् की अनेक मूर्तियों में एक जलीयमूर्ति भी अत्यन्त प्रसिद्ध है, यथा सरित्समुद्रांश्च हरेः शरीरम् (भाग. 11-2-41)।

प्रक्षालितम् इदम्=दृश्यमानम्, चराचरम् = चलाचलम् जडजङ्गात्मकं जगदिति यावत्। स्वच्छम्=उज्ज्वलम्, दृश्यते= विलोक्यते, यस्याः= नीरमूर्तेरपाम्, च=समुच्चये, विविधाः=नानारूपाः, आकृतयः= आकाराररूपाणि वा लसन्ति= भासन्ते, सा=विलक्षणा, शान्ता= प्रशान्ता, हरेः= नारायणस्य, नीरमूर्तिः= जलमयं शरीरम् वः युष्माकम् रोमपादादिषु=आनखशिखम् सर्वाङ्गेष्विति तात्पर्यम्। सततम्= निरन्तरम्, मङ्गलम्= कल्याणम्, आतनोतु=ददातु॥ मुद्रालङ्कारः। कविनिष्ठनीरविषयिणी रतिः भावध्वनि-रितियावत्। शार्दूलविक्रीडितं छन्दः। तल्लक्षणं यथा–सूर्याश्वैर्यदिमः सजौ सततगाः शार्दूलविक्रीडितम्।

---

## • नीरमूर्ति

इस नान्दी पाठ में नीरमूर्ति पद का प्रयोग किया गया है। विविध समासों के आधार पर इस पद के कई अर्थ निकल सकते हैं। उनमें प्रथम अर्थ से विभाण्डक का बोध होता है। इस अर्थ को जानने के लिए नीरे जलमूर्तिः शरीरं यस्य सः बहुव्रीहि समास करना होगा। क्योंकि विभाण्डक ऋषि ने कौशिकी नदी के किनारे महाब्द (झील) के पानी में खड़े होकर तपस्या की। अतः नीर में मूर्ति (शरीर) होने के कारण विभाण्डक ऋषि को नीरमूर्ति कहा जा सकता है। यह अर्थ ठीक भी जँचता है, क्योंकि नाटक का नियम है कि मङ्गलाचरण के माध्यम से नाटकीय पात्रों का नाम भी सङ्केत कर दिया जाये। अतः नीरमूर्ति पद से विभाण्डक (शृङ्गी ऋषि के पिता) का नाम प्रस्फुटित हो जाता है।

इसी नीरमूर्ति पद से शृङ्गी ऋषि (विभाण्डक के पुत्र) का नाम भी इङ्गित हो जाता है। इस पक्ष में नीरात् मूर्तिः उत्पत्तिर्यस्य स बहुव्रीहिः समास करना होगा। क्योंकि शृङ्गी का शरीर पानी से बना था। अतः नीरमूर्ति पद से शृङ्गी ऋषि का नाम भी सरलतया स्पष्ट हो जाता है। ऐसा करने से नाटकीय नियम का भी पालन हो जाता है। इस पक्ष के अर्थ से सम्बन्धित महाभारत में एक कथा का उल्लेख मिलता है, जो इस प्रकार हैः–

एक बार कौशिकी नदी के महाह्द (नदी के द्वारा छोड़ी हुई झील के कुण्ड) में विभाण्डक ऋषि आकण्ठ जलमग्न होकर तपस्या कर रहे थे। उनकी उग्र तपस्या को देखकर देवराज इन्द्र काँप उठे। उन्होंने उनकी तपस्या को खण्डित करने के लिए तत्काल ही उर्वशी अप्सरा को वहाँ भेजा। उर्वशी विभाण्डक के सामने पहुँची और हाव-भावविलोकादि करके इनको विचलित करने लगी। समाधिस्थ ऋषि ने जब

## अथवा

या=गङ्गा, सर्गस्थितिनाशहेतुः सर्गः = उत्पत्तिः तस्य स्थितिः परम्परया पुनः-पुनः शरीरधारणमित्यर्थः। तस्याः नाशहेतुः=मुक्तिं दत्वा शरीरबन्धनाशिनी स्नानपानस्मरणेन गङ्गा मुक्तिं ददाति इति प्रसिद्धमेव। या=अमला, पापिनां मलानि= पापानि गृहीत्वापि स्वयं निर्मलैव तिष्ठतीति प्रभावो गङ्गायाः। या गङ्गा कोमला=मातेव दयार्द्रहृदया शीतला तापत्रयहारकत्वात् शीतला। या रत्नप्रकृतिः=रत्नवत् दारिद्र्यहारिणी, रत्नं हि स्वभावेन दारिद्र्यं हरति तद्वत् गङ्गापि पापरूपं दारिद्र्यं दारयति, गङ्गा गङ्गेति यो ब्रूयादितिपुराणप्रसिद्धमेव। यया=गङ्गया, इदं चराचरं स्वच्छम्=पवित्रम् दृश्यते, गङ्गोदकस्पर्शेन अपवित्रमपि पवित्रं भवतीति तात्पर्यम्। यस्याः=गङ्गायाः विविधा आकृतयः लसन्ति क्वचिद् भागीरथी, क्वचिदलकनन्दा, क्वचिदृषिगंगा अर्थात् गङ्गा

---

अपने नेत्र खोले तो उस तरुणी के मादक स्वरूप को देखकर वे सम्हल न सके, फलतः पानी में ही इनके तेज (वीर्य) का पतन हो गया। इसी समय दैवयोग से एक प्यासी मृगी वहाँ आई और उसने वह (वीर्यमिश्रित) पानी पी लिया।

पूर्वजन्म में यह मृगी एक देवकन्या थी, इसने ब्रह्मा के सामने कुछ चपलता दिखाई। तब रुष्ट होकर ब्रह्माजी ने इसे शाप दिया कि तू मृगी के समान चपलता दिखा रही है अतः मृगी होकर मृत्युलोक में भ्रमण कर। शाप सुनकर कन्या भयभीत हो गई और ब्रह्मा से क्षमा प्रार्थना करने लगी। तब दयालु ब्रह्मा ने शाप में कटौती करते हुये कहा कि जब तेरे उदर से एक पुत्र उत्पन्न हो जायेगा तो मेरा शाप निवृत्त हो जायेगा और पुनः देव लोक में आ जायेगी।

शुक्रमिश्रित जल पीने के कारण वही मृगी गर्भवती हुई समय पाकर जब इसके गर्भ से पुत्र पैदा हुआ तब वह शाप मुक्त हो गई। इस बालक के सिर पर एक सींग था, इससे यह सूचित हो रहा था कि इस बालक की माता मृगी रही होगी। इस अद्भुत बालक को गोद में लेकर वह देवकन्या विभाण्डक के पास आकर बोली भगवन् ! आपकी शक्ति से उत्पन्न यह पुत्र आपका है। अतः आप इसे स्वीकार करें। इस प्रकार उस देव कन्या ने पूर्ववृत्तान्त सुनाया। रहस्य को समझकर विभाण्डक ने उस बच्चे को सहर्ष स्वीकार कर लिया। देवकन्या देवलोक चली गई। बालक के सिर पर सींग होने के कारण विभाण्डक ने अपने बालक का शृङ्गी (ऋष्यशृङ्ग) नाम रखा। पिता की देख रेख में ही शृङ्गी ऋषि का लालन-पालन हुआ। वे घनघोर वन में ही रहते थे, वन में रहने के कारण उनका सामाजिक व्यवहार न के बराबर था। यहाँ तक कि वे स्त्री और पुरुष में कुछ भेद नहीं समझते थे, दोनों

सहस्रधारा भूत्वा वहतीति युक्तमेव तस्या नानाकृतित्वम्। सा शान्ता-अनुकूला, हरेः-विष्णोः, वामनावतारस्य नीरमूर्तिः भगवतो वामनस्य चरणनिर्गमत्वेन विष्णुपदीति कथ्यते। ईदृक् लक्षणलक्षिता गङ्गा वः रोमपादादिषु सततं मङ्गलमातनोतु-भुक्तिं मुक्तिं च ददातु इति गङ्गापरकोऽर्थः।

---

को एक सदृश मानते थे, केवल केला के पत्ते के लँगोटी लगाये हुये ब्रह्मचर्य नियम का पालन करना जानते थे। इस प्रकार नीरमूर्तिपद से शृङ्गीं ऋषि का नाम सरलतया स्पष्ट हो जाता है।

नीरमूर्ति से गङ्गापरक अर्थ तो साफ-साफ स्पष्ट हो जाता है। इसी नीरमूर्ति पद को मत्स्यावतार पर घटाया जा सकता है, जिससे समस्त पद्य का अर्थ ही बदल जाता है। विस्तार के भय से इस प्रकार की व्याख्या पाठक महानुभावों पर छोड़ता हूँ।

### • शान्तामङ्गलम्

प्रस्तुत पद्य में शान्तामङ्गलम् पद का निबन्धन बड़ी ही सूझ-बूझ के साथ किया गया है। इस पद का यदि शान्त-अमङ्गल विच्छेद किया जाय तो शान्तम-समाप्तम् अमङ्गलम्-अनावृष्टिजनितं दुर्भिक्षं यस्मिन् तत् अर्थात् पानी न बरसने से अङ्ग देश में जो अमाङ्गलिक अकाल पड़ रहा था उसकी समाप्ति जिस नाटक में दर्शायी गई उस नाटक का नाम शान्तामङ्गलम् होता है। इस पदच्छेद में सवर्ण दीर्घ करना अनिवार्य होगा।

राजा रोमपाद ने प्रतिज्ञा की थी कि यदि एक मास के अन्दर पानी नहीं बरसा तो मैं चिता में जलकर मर जाऊँगा। मास का अन्तिम दिन था। स्वप्रतिज्ञानुसार राजा और रानी जलती हुई चिता में प्रवेश करने ही वाले थे कि अकस्मात् शृङ्गी ऋषि के आ जाने से वहाँ बरसा होने लगी और राजा रानी का मरणरूप अमङ्गल शान्त (समाप्त) हो गया। अतः शान्तं समाप्तं मरणरूपम् अमङ्गलं यस्मिस्तत् ऐसा समास करके इस पद को पूर्ववत् नाटक का ही विशेषण बनाना होगा।

तीसरा समास इस प्रकार होता है शान्तायाः रोमपादस्य कन्यायाः मङ्गलम् विवाहरूपं कल्याणं यस्मिस्तत् अर्थात् जिसमें शान्ता कन्या का मङ्गल (विवाह) हुआ हो उस नाटक को शान्तामङ्गल (शान्ता+मङ्गल) कहते हैं। क्योंकि बाद मे रोमपाद ने शान्ता का विवाह शृङ्गी के साथ कर दिया था।

भगवान् की शान्तमूर्ति (जलरूपशरीर वाली) आप लोगों का कल्याण करे। इस

चतुर्थ पक्ष में शान्ता पद को नीरमूर्ति का विशेषण बनाना पड़ेगा। इस दिशा में नाटक का नाम प्रस्तुत (प्रकट) नहीं हो सकेगा।

शान्त रहती हुई नीरमूर्ति (जल प्रवाहमयी) गङ्गा आपको मङ्गल प्रदान करे। इस पञ्चम पक्ष के गङ्गा अर्थ से भी नाटक का नाम प्रकट नहीं हो सकता।

वस्तुतस्तु एकश्रुति (संहितापाठ) से उच्चारण करने पर शान्तामङ्गल नाटक का नाम और शान्ता का नाम सरलतया प्रकट हो ही जाता है। यह उल्लेख नाटकारम्भ में अत्युपयुक्त है। कहा भी है कि नामकार्यं नाटकस्य गर्भितार्थप्रकाशनम् (सा.दर्पण 6 प०)।

## • रोमपादादिषु

मङ्गलपद्य में "रोमपादादिषु" पद का गुम्फन भी बड़ी कलात्मकता से किया गया है। इस पद से राजा रोमपाद का नाम तो स्पष्ट हो ही जाता है, साथ ही रोम (शिखा) से लेकर पाद (नख) तक (नखशिख पर्यन्त) मङ्गल की कामना का अर्थ भी प्रकट हो जाता है। एक ही शब्द से चमत्कारी दो अर्थों का बोध कराकर नाटककार ने एकतीर से दो शिकार मारने की उक्ति चरितार्थ कर दी।

आदि पद से नाटक में आये हुए अन्य पात्रों का बोध होता है।

## • जल का महत्त्व

एक बार राजा रोमपाद के अङ्गदेश (आन्ध्र प्रदेश) में भयङ्कर सूखा पड़ा। अन्न जलाभाव के कारण भूखी प्यासी जनता मरने लगी। सर्वत्र हाहाकार मच गया। भूख प्यास मिटाने के लिये नर-नारी लकड़ी गोबर मूत्र तक खाने पीने लगे। हजारों नर नारी मर गये। गाँव के गाँव खाली हो गये। क्योंकि पानी की क्षणे-क्षणे आवश्यकता होती है। इसके बिना जीवन टिक नहीं सकता, इसीलिये पानी का दूसरा नाम जीवन भी है। शरीर में पानी की मात्रा अधिक है। संसार में पानी अत्यन्त उपयोगी वस्तु है। पानी कर्त्ता धर्ता और हर्ता है। इसके लिये बड़े-बड़े यज्ञ किये जाते हैं। फलतः पानी के महत्त्व को ध्यान में रखकर सूत्रधार ने नान्दी पाठ में पानी (नीरमूर्ति) का वर्णन विशेष रूप से किया है। यह वर्णन नाटकीय घटना के सर्वथा अनुरूप है।

इस नान्दी पाठ में कुल मिलाकर चार पात्रों का बोध होता है, विभाण्डक का, शृङ्गी ऋषि का, शान्ता और रोमपाद का ऐसे नान्दी को पत्रावली नान्दी कहते हैं। नाट्यदर्पण में पत्रावली नान्दी का लक्षण इस प्रकार किया गया है-

यस्यां बीजस्य विन्यासो, ह्यभिधेयस्य वस्तुनः।
श्लेषेण वा समासोक्त्या, नान्दीपत्रावलीति सा।।

## • नान्दी

नाटक के आरम्भ में किये गये मङ्गलपाठ को नान्दी पाठ कहते हैं। साहित्य दर्पण में नान्दी का लक्षण इस प्रकार किया गया है:-

आशीर्वचनसंयुक्ता, स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां, तस्मान्नान्दीति संज्ञिता।।

आशीर्वाद से युक्त देव ब्राह्मण व राजादिकों के लिये की गई स्तुति नान्दी कहलाती है। यह सबको आनन्दित करने के कारण नान्दी कहलाती है। देवादि की स्तुति के व्याज से श्रोता और दर्शकों को भी आशीर्वाद मिल जाता है। अतः उनका आनन्दित होना स्वाभाविक ही है। अतः नन्दयति देवादीन् प्रशंसया इति नान्दी ऐसी व्युत्पत्ति बनती है। "टुनदि समृद्धौ" धातु से पचादिगण में होने से नन्दिग्रहेत्यादि सूत्र से अच् प्रत्यय हुआ पश्चात् स्वार्थे अण् पश्चात् टिड्ढाणञ् इत्यादि सूत्र से ङीप् प्रत्यय निष्पन्न होकर नान्दी शब्द सिद्ध होता है।

यहाँ पर यह जिज्ञासा उठती है कि इस नान्दी पाठ को कौन पढ़ता है? "सूत्रधार पठेन्नान्दीं मध्यमस्वरमाश्रितः" इस व्यवस्था के अनुसार सर्वप्रथम मञ्चपर सूत्रधार का प्रवेश कराना चाहिये। जिससे वह दर्शकों के समक्ष नान्दी पाठ कर सके। महाकवि भास ने अपने सभी नाटकों में ऐसा ही किया है। उन्होंने नान्दी से पूर्व ही "नान्द्यन्ते ततः प्रविशति सूत्रधारः" वाक्य लिखकर सूत्रधार का प्रवेश करा दिया तत्पश्चात् उसके मुख से नान्दीपाठ उत्पन्न हुआ। यह क्रम शतप्रतिशत समीचीन है, किन्तु यह बात यहाँ पर काँटे की भाँति खटकती है कि अभी नान्दी पाठ हो भी नहीं पाया कि भास ने नान्दी के अन्त में (नान्द्यन्ते.....) कहकर सूत्रधार का प्रवेश करा दिया। नान्दी के पूर्व केवल इतना लिखना चाहिये कि "नान्द्यर्थं सूत्रधारः प्रविशति" अथवा "प्रविशति सूत्रधारः" यह विसङ्गति इसी प्रकार दूर हो सकती है कि भाई कुछ ही क्षणों में नान्दीपाठ का अन्त होने वाला है ही, अतः उसी नान्दी के अन्त को ध्यान में रखकर कविवर भास ने नान्द्यन्ते पद का प्रयोग कर दिया।

भास कवि नाटकीय रचनाकाल के आदि कवि माने जाते हैं। आरम्भ में किसी विशेषवस्तु का आविष्कार करते समय उसमें कुछ न कुछ कमी अवश्य रह जाती है, उसमें परिवर्तन परिवर्धन और परिष्कार तो उत्तरवर्ती लोग करते ही रहते हैं। अतः भास का उक्त दोष परिहरणीय है अनुकरणीय नहीं।

कविकुलशिरोमणि श्रीकालिदास ने भास के उक्त दोष को समझा और उसका

परिमार्जन करते हुये उन्होंने नान्दीपाठ के पश्चात् ही सूत्रधार की उपस्थिति मञ्च पर दर्शायी है। भवभूति ने भी ऐसा ही किया है। इस पक्ष में यह शङ्कापिशाची मुँह फैलाकर खड़ी हो जाती है कि जब सूत्रधार ने मञ्च पर प्रवेश ही नहीं किया तो शून्य मञ्च पर नान्दीपाठ किसने किया?

इसका समाधान करने के लिये विद्वानों में बड़ा ही देवासुर संग्राम मचा रहता है जो सर्वथा निरर्थक है।

वस्तुतः कालिदास ने वन्दना (नान्दीपाठ) को इतना उच्चकोटि का महत्त्व प्रदान किया है कि उससे पूर्व किसी अन्य बात का लिखना घोर पाप समझते हैं, ठीक भी है कि यदि मङ्गलाचरण से पूर्व कोई अन्य बात लिखी गई तो (ग्रन्थादौ, ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयम्) ग्रन्थ के आदि में मध्य में और अन्त में मङ्गलाचरण होना चाहिये, इस व्यवस्थित मर्यादा का स्पष्टतः उल्लङ्घन हो जायेगा। अतः प्रतिभा धनी महाकवि श्रीकालिदास ने सूत्रधार के प्रविष्ट होने पर भी सिद्धान्त भङ्ग के भय से उसका प्रवेश अक्षरों में नहीं लिखा। वे मन से तो सूत्रधार का प्रवेश नान्दी से पूर्व ही करा चुके हैं। यही कारण है कि वे नान्दीपाठ के पश्चात् "नान्द्यन्ते सूत्रधारः" इतना वाक्य लिखते हैं, इसमें प्रविशति, क्रिया पद नहीं जोड़ते, क्योंकि प्रवेश तो वे मानसिक रूप से नान्दी से पूर्व ही करा चुके हैं अब प्रविशति लिखने की कोई आवश्यकता नहीं हैं।

जैसे सभी देवों में गणेशजी प्रथम पूजनीय हैं उनसे पूर्व कोई देवता पूजनीय नहीं है, इसी प्रकार सभी वर्णनों में मङ्गलाचरण (इष्टवन्दना) सर्वप्रथम वर्णनीय है। उससे पूर्व कोई भी (नान्द्यन्ते प्रविशति सूत्रधारः इत्यादि) वर्णन सिद्धान्त विरुद्ध होगा।

नेपथ्य के भीतर से नान्दीश्लोक पढ़ना भी एक समाधान है। उपर्युक्त सिद्धान्त को ध्यान में रखकर इस नाटक में भी प्रथम नान्दीपाठ पश्चात् सूत्रधार का उल्लेख किया गया है।

## • नान्दी व मङ्गल

नाटक के आरम्भ में किये गये मङ्गलपाठ को नान्दीपाठ कहा जाता है। हमारे विचार से मङ्गलाचरण और नान्दी में कोई विशेष अन्तर नहीं है। अन्तर्मन से देखा जाये, तो दोनों नामों (नान्दी व मङ्गल) से एक ही तत्त्व का बोध होता है। वह तत्त्व है इष्टदेव की वन्दना। वेदशास्त्र, पुराण, काव्य, नाटकादि ग्रन्थों में जहाँ कहीं मङ्गलाचरण हुआ है। उसमें देवद्विजनृपादि की स्तुति ही की गयी व आशीर्वाद की

कल्पना की गई। यही तत्त्व नान्दी के लिये भी अनिवार्य है। फिर मङ्गलाचरण और नान्दी में भेद कैसा? मङ्गलाचरण चाहे गाकर मञ्च पर बोला जाये, चाहे रघुवंश आदि की भाँति (श्रव्य काव्य में) लिख दिया जाये, वह मङ्गल ही प्रदान करेगा। अतः ऐसा कुबोध नहीं करना चाहिये कि दृश्यकाव्य में मञ्च पर गाये जाने के कारण दर्शकों को साक्षात् देखकर आनन्द देता है अतः यह नान्दीपाठ है। श्रव्य काव्यों में ऐसा नहीं होता द्रष्टा और श्रोताओं को प्रसन्न करना ही नान्दी व मङ्गलाचरण का एकमात्र लक्ष्य है। यह लक्ष्य मङ्गलाचरण से ही गतार्थ हो जाता है। यदि कोई कहे कि नान्दी पाठ में तो एक ही पद्य द्वारा दो अर्थों का प्रतिपादन हो जाता है। स्तुति भी और नाटकगत पात्रों की सूचना भी। मङ्गलाचरण में ऐसा नहीं होता, अतः दोनों में अन्तर है। तो यह कथन युक्तिसङ्गत नहीं है, क्योंकि अनेक श्रव्यकाव्यों में भी ऐसा ही मङ्गलपाठ मिलता है जिससे दो अर्थों की उत्पत्ति हो जाती है। कालिदास के कुमारसम्भव और श्रीहर्ष के नैषध आदि में ऐसे ही द्व्यर्थक मङ्गलाचरण हैं। दूसरी बात यह है कि बहुत से नाटकों में भी इस द्व्यर्थक पदावली का प्रयोग नहीं मिलता, यथा भवभूति का उत्तररामचरितम्। अतः द्व्यर्थकपदावली के आधार पर नान्दी को मङ्गलाचरण से पृथक् मानना अज्ञानविजृम्भित होगा। एक बात यह भी है कि यत्किञ्चित् वैशिष्ट्यविशिष्टपदार्थ स्वसमान पदार्थ का विभेदक नहीं बनता। दो गिलासों में रक्खा हुआ गङ्गाजल एक दूसरे से यत्किञ्चित् भिन्न है क्योंकि उसका आधारपात्र दक्षिण उत्तरादि में होने से भिन्न-भिन्न है, फिर भी दोनों जलों की स्वसमानता प्रवल होने के कारण आधारजनिता भिन्नता को बाधित कर देती है। अर्थात् आधारजनित भेद होने पर भी दोनों जल समान ही माने जाते हैं। सत्वभेद दो समान पदार्थों को भिन्न नहीं बना सकता। इसी प्रकार यदि नान्दी और मङ्गलाचरण में स्वल्पविशेषतावश भेद भी हो तो भी स्वसमानता (आनन्दित करने) का प्राबल्य होने के कारण उभयनिष्ठ स्वल्पभेद विलीन (तिरोहित) हो जाता है। दोनों ही तुल्य धर्मवाले बन जाते हैं। तुष्यतु दुर्जनन्याय से यदि ऐसा मान भी लिया जाये, तो श्रव्य काव्यों में ही क्या दृश्यकाव्यों (नाटकों) में भी प्रत्येक मङ्गलपद्य पृथक्-पृथक् विशेषता रखता है, वहाँ पर सर्वत्र नान्दी ही व्याप्त हो जायेगी। इस उलझन के कारण तो नान्दी का निर्दुष्ट लक्षण कभी नहीं बन सकता। वेदों में तो सभी मन्त्र नानार्थक ही हैं, चम्पू आदि काव्यों में भी ऐसा ही देखने को मिलता है। फिर तो सभी पर नान्दी लक्षण बरसने लगेगा।

यदि नानार्थक पदों से की गई स्तुति को नान्दी मान लिया जाये तो श्लेषालङ्कार की हत्या (समाप्ति) हो जायेगी, सर्वत्र नान्दी का ही साम्राज्य हो जायेगा। इस प्रकार

की सारी अड़चनें दूर करने के लिये यही समीचीन होगा कि नाटकारम्भ के पाठ को नान्दी न कहकर मङ्गलाचरण कहना चाहिये, जैसा कि सभी ग्रन्थों के आरम्भ में होता चला आया है। पृथक्-पृथक् ग्रन्थों के मङ्गलाचरणों का पृथक्-पृथक् लक्षण बनाना व पृथक्-पृथक् नामकरण करना ग्रन्थों के शिर पर भार लादने के अतिरिक्त और कुछ नहीं।

यदि साहित्यिक लोग लक्षणकारों का सम्मान रखने हेतु इस पाठ को नान्दी ही मानने पर तुले हों तो इस नान्दी को मङ्गलाचरण का पर्यायवाचक शब्द मानें, किन्तु नान्दी का लक्षण बनाना युक्तिसङ्गत नहीं।

नान्दी को मङ्गलाचरण मानकर इस पाठ को सूत्रधार मञ्चपर आकर गाये तो, या नेपथ्य से प्रसारित कर दे उद्देश्य पूर्ण हो जाता है।

मङ्गलाचरण का नियम है कि "ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयम्" यहाँ पर चकार का अर्थ अथवा है अर्थात् इसका तात्पर्य है कि प्राथम्य होने के कारण ग्रन्थ के आदि में मङ्गलाचरण करना अनिवार्य है किसी कारणवश आदि में न कर सके तो ग्रन्थ के मध्य में मङ्गल कर लेना चाहिये। यदि मध्य में न हो सके तो अन्त में कर लेना चाहिये। तीनों जगह मङ्गल अनिवार्य नहीं। प्रथम किया गया मङ्गलाचरण (इष्टवन्दन) ही इतना सशक्त समर्थ है कि वह अकेला ही प्रत्यूह व्यूहों को विध्वंस कर डालता है। उस (इष्टदेव) को अन्यदेवों (द्वितीय, तृतीय मङ्गलाचरणों) की आवश्यकता ही नहीं पड़ती, क्योंकि एक ही मृगेन्द्र अनेक गीदड़ों को पछाड़ देता है। दूसरी बात यह भी है कि यदि एक मङ्गलाचरण के पश्चात् शेष दो मङ्गलाचण भी किये जायें तो प्रथम मङ्गल अपमानित हो जाता है, क्योंकि किये गये दो मङ्गलों से उसकी विघ्नध्वंस के प्रति असमर्थता (पराजय) सूचित होती है। फिर यह भी क्या विश्वास है कि तीनों स्थानों के मङ्गल मिलकर भी विघ्नध्वंस कर सकेंगे उनके सहयोग के लिये चौथा भी मङ्गल होना चाहिये और उसके सहयोग के लिये पाँचवाँ इत्यादिरूप से अनवस्था दोष आ जायेगा। अतः सबसे उत्तम सिद्धान्त यही होगा कि केवल एक ही मङ्गलाचरण किया जाये और उपयुक्तता की दृष्टि से ग्रन्थ के आरम्भ में ही इसका पाठ समीचीन रहता है।

पाश्चात्य सभ्यता में रँगे हुये आधुनिक नास्तिक लोग किसी ग्रन्थ के आरम्भ में मङ्गलाचरण नहीं करते। ऐसे लोगों से बचकर रहना चाहिये। महाभाष्य में तीन स्थानों पर ही मङ्गलविधान है, उसका भी उपर्युक्त ही तात्पर्य समझना चाहिये। क्योंकि समाप्तिकामो मङ्गलमाचरेत् इस श्रुति में एकवचन से एक ही मङ्गलाचरण का विधान सूचित होता है।

**सूत्रधारः**- (प्रविश्य) आदिकविना श्रीवाल्मीकिना आदिष्टोऽहम् यत् रोमपादस्य जनपदे गत्वा कलाकौशलं प्रदर्श्यतामिति तदहमत्रागत्य आमूलचूलं सुखमनुभवामि। अहो! रोमपादस्य राज्यं तु साक्षात् वैकुण्ठलोकः, प्रशासनं नाम न यत्र तापत्रयम्।

---

**सूत्रधार**—(प्रवेश करके) आदिकवि श्री बाल्मीकि जी ने मुझे आज्ञा दी है कि रोमपाद के राज्य में जाकर तुम अपना कला कौशल दिखाओ, सो मैं यहाँ आकर सभी सुख प्राप्त कर रहा हूँ। अहह! रोमपाद का राज्य तो साक्षात् बैकुण्ठ लोक है। वस्तुतः प्रशासन तो उसी को कहते हैं, जिसमें तीनों ताप (दैहिक, दैविक, भौतिक) न हों।

**सूत्रधार**—सूत्रधार एक लाक्षणिक पद है नाटक की सारी सामग्री को सूत्र कहते हैं, इस सूत्र (सामान) को जो पात्र धारण करता है सम्हालता है, उस पात्र को सूत्रधार कहते हैं:-

**नाट्योपकरणादीनि, सूत्रमित्यभिधीयते।**
**सूत्रं धारयतीत्यर्थे, सूत्रधारो निगद्यते।।**

वस्तुतः सूत्रधार (नटमण्डलपति) पूरे नाटक का स्वामी होता है। इसी की देखरेख में पात्रों का चयन और लीला का निर्धारण होता है। प्रशिक्षण देते-देते और अनेक लीलाओं को देखते-देखते इसको इतना परिपक्व अनुभव हो जाता है कि यह कुशल से कुशल पात्र के अभिनय की आलोचना कर बैठता है। यह इस बात को खूब जानता है कि इस लीला में अमुक व्यक्ति ही अमुक पात्र का अभिनय कर सकता है। यह सूत्रधार नाटक करने से पूर्व ही देश, काल, पात्र, परिस्थिति, परिवेश पर पूर्णविचार कर लेता है। यही व्यक्ति पात्रों के पूर्वाभ्यास को देखता है। लीला करते समय किन-किन उपकरणों (छत्र, मुकुट, गदा, तलवार, कवच, वस्त्र, आभूषण, पर्दो) की कहाँ-कहाँ पर आवश्यकता होगी, इस बात का इसे बहुत ध्यान (अनुभव) रहता है। नाटक का निश्चित समय पर आरम्भ और उपसंहार कराने का यही निर्णय करता है। यह पात्र नृत्य, गीत वादित्र और प्रशंसनादि कार्यों में बड़ा ही दक्ष होता है। तभी तो नाटक के आरम्भ में प्रस्तावना और अन्त में भरतवाक्य का निरूपण इसी के द्वारा कराया जाता है। यह पात्र उत्तम जाति का विद्वान् और भव्य आकृति वाला विशेष पात्र होता है।

प्राचीनकाल में कठपुतलियों के नृत्य का बड़ा ही प्रचलन था। जो आज के चलचित्रों से भी अधिक रोचक और हर्षवर्धक था, अब इसका प्रचलन समाप्तप्राय

**यस्य राज्ये प्रजा सर्वा, मुदा शेतेऽकुतोभया।**
**तं वन्दे रोमपादाख्यं, महाराजं पुनः पुनः॥2॥**

---

**अन्वयः** - यस्य राज्ये अकुतोभया सर्वा प्रजा मुदा शेते, तं रोमपादाख्यं महाराजं पुनः पुनः वन्दे।

**व्याख्या-** यस्य=नृपस्य, राज्ये=अङ्गदेशे, अकुतोभया=निर्भीका, नास्तिकुतोऽपि भयं यस्याः सा, तत्पुरुष समासः, मयूरव्यंसकादयश्चेति सूत्रेण समासः। सर्वा=सकला, प्रजाः=जनताः, मुदा=हर्षेण, शेते=विश्राम्यति, तम् कुशलप्रशासकम् रोमपादाख्यम्=रोमपादनामकम्, महाराजम्=सम्राजम्, पुनः-पुनः=भूयो-भूयः, वन्दे=प्रणमामि। अनुष्टुप छन्दः। तल्लक्षणं यथा-

श्लोके षष्ठं गुरुर्ज्ञेयं, सर्वत्र लघुपञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं, सप्तमं दीर्घमन्ययोः।।

---

होता जा रहा है। हाँ राजस्थान आदि में अब भी इसके उदाहरण मिल जाते हैं। भाँति-भाँति की पुतलियों को सजाकर इन्हें तख्ते के सहारे नचाया जाता है। इन पुतलियों में एक बारीक सूत्र (धागा) बाँध दिया जाता है। इस सूत्र के संकेत (इशारे) पर ही ये पुतलियाँ नाना प्रकार के नृत्य करती हैं। सूत्र धारण (पकड़ने) का कार्य करने के कारण इस व्यक्ति को खेल का स्वामी (सूत्रधार) कहा जाता है। इन खेलों में पर्दा (यवनिकाओं) का भी प्रयोग होता था। जो आज भी नाटकों में देखा जाता है। पर्दों को गिराने और उठाने अथवा इधर-उधर खीचनें के लिये पर्दों में लगी हुई सूत्र की डोरी का प्रयोग होता है। इसको खीचनें वाला सूत्रधार (डोरी खीचनें वाला) कहलाता है। इसीलिये यह सूत्रधार पद (नटमण्डलपति) में रूढ़ हो गया है। प्रकृत नाटक में सूत्रधार कहता है कि आदि कवि बाल्मीकि जी ने मुझे रोमपाद की राजधानी (चम्पानगगरी) में अभिनय करने हेतु भेजा है। हो सकता है कि बाल्मीकि महाराज के यहाँ यह सूत्रधार (डाइरेक्टर) सेवक के रूप में रहा हो।

सूत्रधार के कथन से प्रतीत होता है कि रोमपाद का देश धन-धान्य, हिरण्य आदि सर्वसम्पत्तियों से परिपूर्ण था। तथा किसी को कोई रोग भय नहीं था।

बाल्मीकि जी का एक आश्रम दक्षिण में चित्रकूट के निकट है, जहाँ पर श्रीरामजी गये थे। दूसरा आश्रम विठूर में जहाँ सीता जी का त्याग किया था। यहीं से चलकर सूत्रधार अङ्गदेश में पहुँचा है।

जिनके शासन में रहकर समस्त प्रजा निर्भीक एवं आनन्दमय होकर सोती है उन महाराज रोमपाद की मैं (सूत्रधार) बार-बार वन्दना करता हूँ।

(भ्रमन्) महाराजस्य प्रभावेण मम कौशलं द्रष्टुं असंख्याः जनाः समवेताः सन्ति तदहं शान्तामङ्गलं नाटकमभिनीय इमां रङ्गस्थलीं प्रसादयामि। एतस्मिन्नवसरे रङ्गसङ्गिनी मे प्रिया न जाने कुत्र भविष्यति?

नटी- (प्रविश्य) आर्यमिश्रं वन्दे।

सूत्रधारः अये! सर्वथा त्वमायुष्मती यत् नामकीर्तनमात्रेण उपस्थितासि।

नटी- ननु कीदृशं नामकीर्तनम्?

सूत्रधारः- आर्ये! एते महानुभावाः दूरदूरात् समागताः इति। एतेषां प्रमोदाय शान्तामङ्गलमभिनेतव्यम्, तन्निर्वाहाय यावत्त्वं स्मृता तावत् स्वयमागता। अतस्त्वं सौभाग्यशालिनी वर्तसे।

नटी- कथं न भवता एकाकिनैव अभिनेतव्यम्?

सूत्रधारः- जानासि त्वम्, नारीं बिना किमप्यनुष्ठानं सफलं न भवति।

नटी- ननु शान्तामङ्गलमभिनेतव्यम्?

सूत्रधारः- अथ किम्?

---

(घूमता हुआ) महाराज के प्रभाव से मेरा कला कौशल देखने के लिए असंख्य नरनारी एकत्रित हुये हैं। अतः मैं शान्तामङ्गल नामक नाटक का अभिनय कर इस रङ्गस्थली को प्रसन्न करूँ। इस अवसर पर मेरी प्रिया रङ्गसङ्गिनी न जाने कहाँ होगी?

नटी- (प्रवेश करके) आर्यपाद को प्रणाम करती हूँ।

सूत्रधारः- अजी तुम तो सर्वथा दीर्घायु हो, जो कि नाम लेते ही उपस्थित हो गयी।

नटी- कैसा नाम लेना?

सूत्रधारः- प्रिये! ये महानुभाव बहुत दूर-दूर से आये हुये हैं। इनका मनोविनोद करने के लिये मैंने शान्तामङ्गलं नाटक का अभिनय करना चाहा, उसका निर्वाह करने हेतु जैसे ही तुम्हारे नाम का स्मरण किया वैसे ही तुम स्वयं आ गईं। इसीलिये तुम सौभाग्यवती हो।

नटी- आप अकेले ही क्यों नहीं नाटक का अभिनय कर लेते?

सूत्रधारः- प्रिये! तुम जानती हो कि नारी के बिना कोई कार्य सफल नहीं होता।

नटी- क्या शान्तामङ्गल नाटक खेलना है?

सूत्रधारः- हाँ जी।

**नटी-** किमिदं शान्तामङ्गलम् ? उताहो ! शान्ताया मङ्गलम् ?

**सूत्रधारः-** उभयं सङ्गतम्। प्रथममभिनयेन ज्ञास्यते, द्वितीयं कथयामि।

**नटी-** कथ्यतामार्य!

**सूत्रधारः-** अयोध्यानरेशः श्रीदशरथो रोमपादस्य घनिष्ठं मित्रमस्ति। दशरथस्य महिषी सुमित्रा शान्तानाम्नीमुत्तमकन्यामजीजनत्। दयालू राजा अपत्यहीनाय रोमपादाय तां कन्यामपत्यकल्पेन ददौ। सा शान्ता ऋष्यशृङ्गेण सह परिणीता।

**नटी-** एवं चेत्तर्हि महाराजोऽपीदं नाटकं सभाजयिष्यति ?

**सूत्रधारः-** अथ किम् ! तेन विना तु नेदं नाटकं सार्थकं मन्ये। तथाहि-

**विना चन्द्रं यथाकाशं, विना सिंहं यथा वनम्।**
**उत्सवं च तथा मन्ये, महान्तं पुरुषं विना॥3॥**

---

**अन्वयः-** यथा चन्द्रं विना आकाशं, यथा सिंहं विना वनं तथा च महान्तं पुरुषं विना उत्सवं (श्रीहीनं) मन्ये।

**व्याख्याः-** यथा=येन प्रकारेण, चन्द्रम्=शशाङ्कम्, विना=ऋते, आकाशम्=गगनम्, यथा सिंहम्=मृगेन्द्रम् विना वनम्=काननम् (श्रीहीनं) तथा च=तेनैव प्रकारेण महान्तम्=महापुरुषम् रोमपादं विनेत्यर्थः। उत्सवम्= नाटकाख्यम् (श्रीहीनं) मन्ये=जाने। यदात्र रोमपाद उपस्थितो भवति तदा मम कौशलं सफलमिति तात्पर्यम्। अत्र दृष्टान्तोऽलङ्कारः।

---

**नटी-** क्या शान्त हो गया है अमङ्गल जिसमें ऐसा अर्थ है अथवा शान्ता के लिये मङ्गल हुआ है जिस नाटक में ऐसा अर्थ है ?

**सूत्रधारः-** दोनों ही ठीक हैं। प्रथम अर्थ नाटक खेलने से ज्ञात होगा, दूसरा अर्थ कहता हूँ।

**नटी—** कहिये आर्यपाद!

**सूत्रधारः-** प्रिये ! अयोध्या के राजा दशरथ जी रोमपाद के घनिष्ठ मित्र हैं। दशरथ की रानी सुमित्रा ने शान्ता नाम वाली एक उत्तम कन्या को जन्म दिया। दयालु राजा ने सन्तानहीन रोमपाद को वह कन्या गोद में (दत्तक रीति से) दे दी। उसके साथ ऋष्यशृङ्ग ने विवाह किया। (स्कन्दपुराण नागरखण्ड)।

**नटी-** यदि ऐसी बात है तब तो महाराज भी इस नाटक को सुशोभित करेंगे ?

**सूत्रधारः-** हाँ जी! उनके बिना तो इस नाटक को मैं सफल नहीं मान सकता- जिस प्रकार चन्द्रमा के बिना आकाश की और सिंह के बिना वन की शोभा नहीं होती, उसी प्रकार महापुरुष के बिना कोई उत्सव (नाटकादि) भी सुशोभित नहीं होता।

**नटी-** अनेन व्याजेन महाराजस्य दर्शनमपि स्वच्छन्दतो भविष्यति।

**सूत्रधारः-** प्रिये ! यावन्महाराजस्य आगमनवेला निकटति, तावत्त्वया रङ्गरञ्जनाय वर्षर्तुमधिकृत्य एकं गीतं प्रस्तूयताम्।

**नटी-** गायति-

**वारिद गर्जतु वर्षतु वारि, मङ्गलकरणममङ्गलहारि,**
**भ्राम्यनुजलधरहरितः परितः, पूर्णाः सन्तु सरोवरसरितः,**
**सस्यवनस्पतिदलफलकारि॥ वारिद......... 4॥**
**वर्षतु भगवन् मन्दं-मन्दम्,**
**कृषको विन्दतु बहुमानन्दम्,**
**जनगणमानससुखसञ्चारि॥ वारिद......... 5॥**
**श्यामलकोमलघटां तनोतु,**
**तप्तधरोपरि दयां करोतु**
**भूचर-जलचर दुःखविदारि॥ वारिद......... 6॥**

---

**नटी-** इस बहाने से तो महाराज के दर्शन भी स्वच्छन्दरूप से हो जायेंगे।

**सूत्रधारः-** प्रिये ! जब तक महाराज के आने का समय निकट आ रहा है तब तक सभासदों को प्रसन्न करने के लिये तुम एक वर्षा सम्बन्धी गीत प्रस्तुत करो।

**नटी-** गाती है-पानी को देने वाले हे मेघ! आप खूब गरजें और जलवृष्टि करें। आपका यह जल मङ्गल करने वाला और अमङ्गल हरने वाला होता है। हे जलधर! आप दिशाओं में उमड़-घुमड़ कर ऐसा जल बरसें जिससे तालाब और नदियाँ उफन चलें।आपका जल फसल और वनस्पतियों (वृक्षों) को पल्लवित और फलित करता है। हे भगवान् मेघ! आप धीरे-धीरे (रिमझिम करके) वर्षा करें, जिससे किसानों को अति आनन्द प्राप्त हो। आपका पानी मानवों के हृदय में सुख का सञ्चार कर (आनन्दभर) देता है। हे जलधर ! आप काली-काली और कोमल घटाओं को (गगन में) तान दो और सन्तप्त (प्यासी) धरती के ऊपर दयाकर वृष्टि करो। आपका जल भूमिपर रहने वालों का और जल में रहने वालों (जड़ चेतनों) का सारा दुःख दूर कर देता है।

**सूत्रधारः**-(नेपथ्याभिमुखमालोक्य) अये! जय-जयकार इव श्रूयते। तस्मान्मन्ये नाटकमुद्घाटयितुं महाराज इत एव आगच्छति। तेन हि आवयोरत्रावस्थानं नोचितम्, दूरत एव द्रक्ष्यावः। यतो हि-

राज्ञो व्याघ्रस्य सूर्यस्य, तथा झंझानिलस्य च।
सन्मुखे न नरस्तिष्ठेत्, तिष्ठन्नूनं विपद्यते॥ 6॥

**नटी**- कम्पते मे शरीरमार्यपादः तच्छीघ्रमितश्चलावः।

**सूत्रधारः**- पलायताम्-पलायताम्। (इत्युभौ निर्गच्छतः)

॥ इति प्रस्तावना ॥

---

**अन्वयः**- राज्ञः व्याघ्रस्य सूर्यस्य तथा झञ्झानिलस्य च सन्मुखे नरः न तिष्ठेत्। तिष्ठन् (सन्) नूनं विपद्यते।

**व्याख्याः**- राज्ञः=नृपस्य, व्याघ्रस्य=सिंहस्य, सूर्यस्य=भास्करस्य, तथा=तद्वत् झञ्झानिलस्य= झञ्झावातस्य च सन्मुखे= अग्रे, नरः= बुद्धिमान्, न तिष्ठेत्=नैव वर्तेत, तिष्ठन्=वर्तमानः सन् नूनम्=ध्रुवम्, विपद्यते=विपदं प्राप्नोति। अनेन श्लोकेन रोमपादराज्यं विपद्ग्रस्तं भविष्यतीति सूचितम् सूत्रधारेण, अतो भाव्यर्थसूचनात् पताकास्थानम्। व्यापिप्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।

---

**सूत्रधारः**- (नेपथ्य की ओर देखकर) अजी ! नाटक का उद्घाटन करने के लिये महाराज तो इधर ही आ रहे हैं। अतः हम दोनों का यहाँ रहना ठीक नहीं है, दूर से ही दर्शन करेंगे।

क्योंकि-मनुष्य को चाहिये कि राजा, व्याघ्र, सूर्य और आँधी तूफान के सामने खड़ा न हो। यदि खड़ा होगा तो अवश्य ही विपत्ति में फँसेगा। वस्तुतः सूत्रधार ने रोमपाद के राज्य में आने वाली विपत्ति की सूचना इस श्लोक से दी है। अतः यहाँ पर पताकास्थान समझना चाहिये। जो प्रासङ्गिक कथा दूर तक व्याप्त हो उसे पताका कहते हैं।

**नटी**- आर्य ! मेरा शरीर काँप रहा है, अतः यहाँ से शीघ्र चलिये।

**सूत्रधार**- भागो-भागो (इस प्रकार दोनों निकल गये)

॥ इति प्रस्तावना ॥

॥प्रथमोऽङ्कः॥

जिस प्रकरण में नटी विदूषक या अन्य कोई नट सूत्रधार से बातचीत करें उसे

(ततः प्रविशति सपरिवारो राजा रोमपादः)

**राजा**-(सिंहासने उपविश्य) चन्द्रचूड ! मम प्रशासने सर्वाः प्रजाः निरापदः सन्ति न वा ?

---

प्रस्तावना, स्थापना वा आमुख कहते हैं। ये पात्र परस्पर में ऐसी विचित्र-विचित्र बातें गढ़ते हैं जिससे तत्क्षण ही नाटकलीला होने पर तुल जाती है। साहित्यदर्पण में प्रस्तावना का लक्षण इस प्रकार है-

**नटी विदूषको वापि, पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः, संलापं यत्र कुर्वते।।**
**चित्रवाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम प्रस्तावनापि सा।।**

प्रकृतनाटक में अवलगितनामक प्रस्तावना है क्योंकि सूत्रधार का सङ्केत पाकर राजा रोमपाद का प्रवेश कराया गया है। अवलगित का लक्षण इस प्रकार हैः-

**यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते।**
**प्रयोगे खलु तज्ज्ञेयं, नाम्नावलगितं बुधैः।।**

मेरी समझ में मङ्गलाचरण के पश्चात् तुरन्त ही नाटकलीला आरम्भ कर देने से भी कोई क्षति नहीं। सूत्रधार नटी का परस्पर में संलाप कराने से समय नष्ट होता है। ऐसा करने पर प्रस्तावना का अभाव खटकता नहीं। प्रस्तावना के अभाव में सूत्रधार और नट नटी का भी यदि अभाव हो जाता है, तो हो जाये, उनका भी अभाव खटकता नहीं। नाटक की मुख्यलीला में जिसका अभाव बाधक जैसा लगता हो, जिसके अभाव से मुख्यलीला में आरुच्य (न्यूनत्व) का अनुभव होता हो अन्वयव्यतिरेक के सिद्धान्त पर उसी विषय का विन्यास होना अनिवार्य है। प्रस्तावना के न होने पर भी नाटक की मुख्य लीला में उसका (प्रस्तावना का) अभाव अरुचिजनक नहीं लगता। अतः प्रस्तावना का लक्षण भी आपातरमणीय है। यही कारण है कि अद्यश्वीन (आजकल के) नाटकों में प्रस्तावना प्रकरण दिखलाई नहीं पड़ता।

(तत्पश्चात् परिवार के सहित राजा रोमपाद का प्रवेश होता है)

**राजा**- (सिंहासन पर बैठकर)- चन्द्रचूड ! मेरे प्रशासन में सभी लोग सुखी हैं या नहीं ?

मन्त्री- महाराज ! भवतः छत्रच्छायायां सर्वाः प्रजाः सर्वथा वर्धन्ते। ईतिभीतिरहिता धनधान्यहिरण्यसहिता अङ्गभूमिः भवन्तं सदैव स्मरति। प्रसन्ना राज्यलक्ष्मीर्वामाङ्गीव भवत्यनुरक्ता।

राजा- यद्येवं सत्यम्, तथापीयं घोषणा मम राज्ये प्रसार्यताम्।

अनावृतकपाटेन शेरतां, सकलाः जनाः।
तेषां प्राणधनादीनां, रोमपादोऽस्ति रक्षकः॥8॥

मन्त्री- गृहीतोऽयमादेशः। अधुनैव गत्वा प्रजामध्ये इमां रक्षाप्रतिज्ञां डिण्डिमनादेन घोषयामि। इति निष्क्रान्तः।

राजा- 'स्वमनसि विचारयति-

---

अन्वयः- सकलाः जनाः अनावृतकपाटेन शेरताम् तेषाम् प्राणधनादीनाम् रोमपादः रक्षकः अस्तिः।

व्याख्या- सकलाः= सर्वेजनाः लोकाः, अनावृतकपाटेन= अनावृतौ= अपिनद्धौ कपाटौ यस्य तेन द्वारेणेति वहुब्रीहिः। शेरताम्= विश्राम्यन्तु, तेषां= जनानाम्, प्राणधनादीनाम्= जीवनविभवादीनाम्, रोमपादः= राजा, रक्षकः=पालकः, अस्ति=वर्तते। शेरताम् अत्र शीङ्धातोर्लोटि अदादित्वाच्छपोलुकि झस्यादादेशे रूडागमे एत्वे आमादेशे ईकारस्य गुणे शेरताम्।

---

मन्त्री- महाराज ! आपकी छत्रछाया में सभी लोग सब प्रकार से बढ़ रहे हैं। ईति (अतिवृष्टि, अनावृष्टि, मूषक, शलभ, शुक, राजकलह) और भय रहित एवम् प्रसन्न राज्यलक्ष्मी अङ्गना के समान आप पर अंनुरक्त है।

राजा यदि यह बात सत्य है तो भी मेरे राज्य में यह घोषणा करा दोः-

सभी लोग दरवाजा बिना बन्द किये हुये (खुली किवाड़ें) ही शयन किया करें। उनके प्राण धनादि के रक्षक रोमपाद हैं।

मन्त्री- आदेश ग्रहण कर लिया, अभी जाकर ढिंढोरा पिटवाकर प्रजा में इस रक्षा प्रतिज्ञा की घोषणा करवाता हूँ। (इस प्रकार निकल गया)।

राजा- मन में विचार करता है कि जिनकी प्रजा में कभी भी ईतिभीति नहीं होती ऐसे राज्य भूमण्डल पर बहुत कम होते हैं। उन माताओं के उदर धन्यवाद के

केचिद् भवन्ति विरलाः क्षितिपाः पृथिव्याम्,
येषां प्रजासु न कदाचिदपीतिभीती।
धन्यानि सन्ति जननीजठराणि तानि,
यानीदृशा नरवरा वसतिं व्रजन्ति ।। 9।।

**धावकः**—(प्रविश्य) जयतु-जयतु देव!

**राजा**- धावक ! अधिगतं प्रजासु किमपि नूतनवृत्तम्?

**धावकः**- देव ! प्रजासु सर्वमनामयम्, किन्तु एकस्तावन्महाननर्थः।

**राजा**- कः सः?

**धावकः**- यत्र तत्र अनावृष्टिवशात्, कृषकेषु बलवती चिन्ता समुत्पन्ना।

---

**अन्वयः**- येषां प्रजासु कदाचिदपि ईतिभीती न (भवतः) पृथिव्यां (ईदृशाः) केचिद् विरलाः क्षितिपाः भवन्ति। तानि जननीजठराणि धन्यानि सन्ति। यानि ईदृशाः नरवराः वसतिं व्रजन्ति।

**व्याख्याः**- येषाम्=क्षितिपानाम्, प्रजासु= जनेषु, कदाचिदपि= कदापि, ईतिभीती ईतिभये न भवत इति शेषः, पृथिव्याम्= भूमौ (ईदृशाः) केचिद् विरलाः= स्वल्पाः, क्षितिपाः=भूपाः भवन्ति। तानि=तादृशानि जननीजठराणि=जननीनाम्=मातृणाम्, जठराणि=उदराणि तत्पुरुषसमासः। धन्यानि=प्रशंसायोग्यानि सन्ति, यानि= उदराणि कर्मपदमेतत् शसिरूपम्, ईदृशाः=ईतिभीतिनिवारकाः, नरवराः=पुरुषोत्तमाः, वसतिं=वासार्थं, व्रजन्ति=गच्छन्ति। ईतिभीतिनिवारकान् नृपान् जनयन्त्यो जनन्यः धन्या इति तात्पर्यम् वसन्ततिलकावृत्तम्, उक्ता वसन्ततिलका तभजाः जगौ गः इति तल्लक्षणम्। ईतिलक्षणं यथा-

---

पात्र हैं। जिन उदरों में ऐसे महापुरुषों (राजाओं) ने निवास किया। अर्थात् वे मातायें धन्य हैं, भूरि-भूरि प्रशंसा योग्य हैं, जिन्होंने ऐसे प्रशासकों को जन्म दिया।

**धावक**- (प्रवेश करके) जय हो जय हो महाराज की!

**राजा**- धावक ! क्या प्रजा में कोई नई बात मिली है?

**धावक**- महाराज ! प्रजा में सब कुशल है, किन्तु एक बहुत बड़ा अनर्थ है।

**राजा**- वह क्या?

**धावक**- जहाँ-तहाँ अनावृष्टि (सूखा पड़ जाने) के कारण किसान लोगों में भारी चिन्ता उत्पन्न हो गई है।

राजा- श्रुतं मया, त्वं स्वनियोगं साधय, अहं कृषकसंकटं वारयितुमुपायं करोमि।

धावकः- यथाज्ञापयति स्वामी (इति निष्क्रान्तः)।

राजा- (चिन्तयन्) अहो! बलिष्ठोऽयं दैवप्रकोपः कृषकाणां संकट हि राष्ट्रसंकटम्। यतोहि कृषका एव सर्वेषां जीवनाधायकाः भवन्ति देशस्यात्मा कृषकेषु तिष्ठति।

**यथा देहस्थिताः प्राणा, अङ्गानां सन्ति रक्षकाः।**
**तथा देशस्थिताः नृणां रक्षका कृषका ध्रुवम्॥10॥**

मन्त्री- (प्रविश्य) जयतु-जयतु देवः!

---

अतिवृष्टिरनावृष्टिर्मूषकाःशलभाःशुकाः ।
अत्यासन्नश्च राजानः षडेता ईतयः स्मृताः।।

अन्वयः- यथा देहस्थिताः प्राणाः अङ्गानां रक्षकाः सन्ति, तथा देशस्थिताः कृषको नृणाम् ध्रुवं रक्षकाः (सन्ति)।

व्याख्याः- यथा=येन प्रकारेण, देहस्थिताः=शरीरवर्तिनः, प्राणाः=असवः, अङ्गानाम्=करचरणादीनाम्, रक्षकाः=पालकाः, सन्ति भवन्ति, तथा=तेनैव प्रकारेण, देशस्थिताः=राष्ट्रवर्तिनः कृषकाः, क्षेत्रपालाः, नृणाम्=जनानाम्, ध्रुवम्,=निश्चितरूपेण रक्षकाः सन्तीति दृष्टान्तालङ्कारः। तल्लक्षणं तु–

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनम्"

---

राजा- सुन लिया मैंने, तुम अपने काम (ड्यूटी) पर जाओ, मैं किसानों का संकट दूर करने के लिये उपाय करता हूँ।

धावक- आपकी जैसी आज्ञा (ऐसा कहकर निकल जाता है)।

राजा- (सोचते हुये) अहो ! यह दैवी प्रकोप तो बड़ा बलवान है, क्योंकि किसानों का संकट तो राष्ट्र का ही संकट है, किसान ही सबके प्राण दाता हैं। देश की आत्मा किसानों में ही विराजती है।

जिस प्रकार शरीर में रहते हुए प्राण समस्त अङ्गों की रक्षा करते हैं, उसी प्रकार देश में रहते हुये किसान लोग भी समस्त मनुष्यों की रक्षा करते हैं, अर्थात् किसान ही खेत में कठिन परिश्रम कर अन्न पैदा करते हैं, जिसको खाकर मनुष्य जीवित रहते हैं।

मन्त्री- (प्रवेश करके) जय हो महाराज की!

**राजा**- चन्द्रचूड़ ! कृतं ममाभीष्टम्।

**मन्त्री**- देव ! घोषिता भवदीया रक्षा प्रतिज्ञा, सर्वै जनैश्चारूचन्द्रिकेवाभिनन्दिता किन्तु.....

**राजा**- कस्तावदत्रसंकोचः ? स्पष्टमुदीर्यताम्।

**मन्त्री**- किन्तु अनावृष्टिवशात् क्षेत्रपालाश्चिन्तामग्नाः सन्ति।

**राजा**- चन्द्रचूड़ ! धावकमुखादियं दैवीविपत्तिः पूर्वमेव मया श्रुता। नेयं कृषकाविपत्तिः अपितु देशमात्रविपत्तिरेषा, यतोह्यन्नाद् भवन्ति भूतानि, अन्नस्य जनकं जलम् तदभावे राष्ट्रं श्मशानं भवति, तद् भवति कस्मात् प्रभुत्वम्। तस्मात् रक्षाकोशात् वित्तराशिमादाय क्षेत्रपालेषु वितीर्यताम्। ते च वापी कूपतड़ागप्रणालादिभिरूपायैः नीरसकृषिं सरसीकुर्वन्तु।

**मन्त्री**-यथा रोचते भवते! नूनमेते उपाया अवग्रहं वारयिष्यन्ति। तदहमधुनैव कोशागारं गत्वा योजनामिमां मूर्तिमतीं करोमि (इतिनिष्क्रान्तः)।

---

**राजा**- चन्द्रचूड़ ! क्या मेरा प्रिय कार्य कर दिया।

**मन्त्री**- महाराज ! आपकी रक्षा प्रतिज्ञा की घोषणा सर्वत्र कर दी गई, उसका सभी लोगों ने चाँदनी की भाँति स्वागत किया, किन्तु.......।

**राजा**- इसमें संकोच की क्या बात है, स्पष्ट रूप से कहिये।

**मन्त्री**- किन्तु, अनावृष्टि के कारण किसान लोग चिन्तामग्न (शोकाकुल) हो रहे हैं।

**राजा**- चन्द्रचूड़ इस दैवी विपत्ति को मैंने धावक के मुख से पहले ही सुन लिया है। यह केवल कृषकों की ही विपत्ति नहीं है, अपितु देशभर की विपत्ति समझनी चाहिये। क्योंकि अन्न से प्राणी पैदा होते (जीवित रहते) हैं और अन्न को उत्पन्न करने वाला जल है। जल के अभाव (सूखा) में सारा राष्ट्र श्मशान वन जाता है। राष्ट्र के अभाव में राजा का अस्तित्व ही क्या रहता? इसलिये रक्षाकोश से धनराशि लेकर सभी किसानों में बाँट दो। वे लोग उस धन से बावली, कुवाँ, तालाब, नहर इत्यादि (खनन) उपायों से (सिंचाई करके) सूखती हुई फसल को हरी भरी कर लें।

**मन्त्री**- आपको जैसा अच्छा लगे! निश्चित ही ये उपाय दुष्काल को दूर कर देंगे। इसलिये मैं अभी कोशागार को जाकर इस योजना को सार्थक रूप देता हूँ। (इस प्रकार निकल गया)।

राजा- (चिन्तयन्) भ्रष्टो हि राजा प्रजापीड़ाया निदानं भवति। अहं तु मनसा वाचा, कर्मणा च पालयामि प्रजाम्। नह्यत्र विषये कदापि मम स्खलनं भवति। यद्यपि धर्मस्य सूक्ष्मा गतिः सिद्धानामप्यगम्या-

तथापि स्वं व्यतिक्रमलवमपि न पश्यामि, राजदोषो हि प्रजाजनान् पचतीत्यपि अलीकं नास्ति-

**नृपस्य दोषेण जना अदोषाः, दुःखानले तीव्रतरं दहन्ति।**
**एको हि वंशस्तरुवंशनाशं, करोत्यरण्ये निजपातकेन॥11॥**

किन्तु बहुशो विचारयतोऽपि न मे स्मृतिपथमधिरोहति निजदोषः। अथवा प्रत्यक्ष परोक्षरूपेण पदे-पदे पापमुत्पद्यते कः सर्वज्ञो यस्तज्जानाति?

---

**अन्वयः-** नृपस्य दोषेण अदोषाः जनाः दुःखानले तीव्रतरं दहन्ति, हि अरण्ये एकः वंशः निजपातकेन तरुवंशनाशम् करोति।

**व्याख्याः-** नृपस्य= राज्ञः, दोषेण=पापेन, अदोषाः=निष्पापाः, जनाः= लोकाः, दुःखानले= कष्टाग्नौ, तीव्रतरम्= अत्यन्तम्, दहन्ति=तपन्ति। हि= यतः, अरण्ये=वने, अटव्यरण्यं विपिनं गहनं काननं वनमित्यमरः। रन्तुं योग्यं रम्यं न रम्यमरण्यमिति पृषोदरादित्वात्सिद्धम्। एकः=केवलः, वंशः=वेणुः, निजपातकेन= स्वदोषेण, संघर्षणजनितानलेनेत्यर्थः। तरुवंशनाशम्=वृक्षकुलसंहारम्, करोति=भस्मसात् विदधाति। अत्र अर्थान्तरन्यासोऽलङ्कारः। उपजातिश्छन्दः।

---

**राजा (सोचता हुआ)-** दोषी राजा ही प्रजा की पीड़ा का कारण होता है। मैं तो मन, वचन और कर्म से प्रजा का पालन करता हूँ। इसमें मैंने कभी भी भूल नहीं की। यद्यपि धर्म की गति बहुत सूक्ष्म होती है जिसको कि सिद्धपुरुष भी नहीं जान पाते-

फिर भी मैं अपने में लेशमात्र भी धर्मोल्लङ्घन नहीं देख पा रहा हूँ। राजा का पाप ही प्रजाजनों को पीड़ित करता है, यह बात भी असत्य नहीं है।

राजा के दोष से राज्य के निर्दोष लोग दुःखाग्नि में सन्तप्त होते हैं (पीड़ित होते हैं) यह बात सर्वथा सत्य है, क्योंकि जंगल मे एक ही बाँस का पेड़ अपने दोष से अन्य सभी वृक्षों के कुल का नाश (भस्म) कर डालता है। यह बात सर्वप्रसिद्ध है कि बाँस की रगड़ से उत्पन्न अग्नि सारे वृक्षसमूह (वन) को भस्म कर डालती है। किन्तु बहुत कुछ विचार (ध्यान) करने पर भी मुझे अपने दोष का स्मरण नहीं हो पा रहा है। अथवा प्रत्यक्ष या परोक्ष में (जान अनजान में) कदम-कदम पर पाप होता ही रहता है, किन्तु ऐसा कौन सर्वज्ञ है जो उस पर (कृत पाप पर) ध्यान रखे।

**धावकः**- (प्रविश्य) महाराज ! गर्गाश्रमादागतौ द्वौ छात्रौ द्वारदेशे भवन्तं प्रतिपालयतः।

**राजा**- सादरं प्रवेशय।

**धावकः**- एवमस्तु। (इति छात्रौ प्रवेश्य निष्क्रान्तः)।

**प्रथम छात्रः**- (राज्ञे पुष्पाणि समर्प्य)

**त्वां शासकं प्राप्य नृपावतंसं, महीयते भारतभूमिरेव।**
**नूनं नृपाकारमवाप्य लोके, नारायणस्तिष्ठति रक्षणाय॥12॥**

**द्वि छात्रः**- फलानि समर्पयति-

---

**अन्वयः**- नृपावतन्सम् त्वाम् शासकम् प्राप्य एषा भारतभूमि महीयते। नूनम् लोके रक्षणाय नृपाकारम् अवाप्य नारायण एव तिष्ठति।

**व्याख्या**- नृपावतंसम्=भूपशिरोमणिम्, त्वाम्=भवन्तम्, शासकम्=प्रशासकम्, प्राप्य=आसाद्य, एषा=इयम् भारतभूमिः भारतदेशः-

उत्तरं यत्समुद्रस्य, हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद भारतन्नाम, भारती यत्र सन्ततिः॥ इति भारतलक्षणम्॥

महीयते= विभाति, नूनम्=वस्तुतः, लोके= संसारे, रक्षणाय= पालनाय, नृपाकारम्= भूपरूपम्, अवाप्य=प्राप्य, नारायणः=साक्षादीश्वर एव तिष्ठति=विराजते, रूपकालङ्कारः।

---

**धावक**- (प्रवेश करके) महाराज ! गर्गाश्रम से आये हुये दो छात्र द्वार पर आपकी प्रतीक्षा कर रहे हैं।

**राजा**- आदरपूर्वक प्रवेश कराओ।

**धावक**- एवमस्तु (इस प्रकार छात्रों को प्रवेश कराकर निकल गया)।

**प्रथम छात्र**- राजा के लिये पुष्प देकर हे राजन् ! आप जैसे कुशल प्रशासक राजा को प्राप्त कर यह भारतभूमि अत्यन्त प्रशंसनीय (पूजनीय) हो रही है। वस्तुतः संसार में रक्षा करने के लिये राजा के आकार में साक्षात् नारायण ही विराजमान (अवतीर्ण) होते हैं।

**द्वि. छात्र**- फलों को समर्पित करता है:-

अहो! भवान् सर्वसुखं विहाय,
दिवानिशं रक्षति लोकचर्याम्।
धर्मार्थकामाः विहिता मनुष्यैः,
फलन्ति सर्वे तव रक्षणेन॥13॥

राजा- (प्रणम्य पुष्पफलानि गृहीत्वा च) अपि कुशलं ब्रह्मचर्यम्?

प्रथमः- सर्वं कुशलं महाराज! किन्तु जलस्याऽवर्षणात् आश्रमस्थाः सर्वे वनस्पतयः शुष्यन्ति। तत्सूचनाय गुरुणा प्रेषितावावाम् इति भवन्तः प्रमाणम्।

राजा–किं कुलपतिना गर्गाचार्येण प्रहितौ भवन्तौ?

---

अन्वयः- अहो! भवान् सर्वसुखं विहाय दिवानिशं लोकचर्यां रक्षति। मनुष्यैः विहिताः धर्मार्थकामाः तव रक्षणेन नूनं फलन्ति।

व्याख्याः- अहो= महानाश्चर्यविषयः, भवान्=श्रीमान्, सर्वसुखं=भोगविलासम्, विहाय=त्यक्त्वा, दिवानिशम्=अहर्निशम्, लोकचर्याम्=जनव्यवहारम्, रक्षति=पालयति, मनुष्यैः=नरैः, विहिताः=प्रारब्धाः धर्मार्थकामाः पुरुषार्थाः, तव= भवतः, रक्षणेन=पालनेन, नूनम् = अवश्यम्, फलन्ति=सफलाः भवन्ति। राजरक्षणेन विना धर्मादिव्यापाराणां साफल्यमसम्भवमिति निष्कर्षः। उपजातिश्छन्दः।

---

यह आश्चर्य की बात है कि आप सभी सुखों (भोगविलासों) को छोड़ कर दिनरात प्रजा की (व्यवहारों की) रक्षा करते रहते हैं। मनुष्यों के द्वारा किये गये धर्मादि अनुष्ठान (सामाजिक व्यवहार) आपकी देखरेख (रक्षा) से ही सम्पन्न हो जाते हैं।

राजा- प्रणामपूर्वक पुष्पफलों को लेकर क्या आपकी तपश्चर्या सकुशल हो रही है?

प्रथम- सर्वत्र कुशल है, किन्तु पानी न बरसने के कारण आश्रम के सारे पेड़ पौधे सूख रहे हैं, यह सूचित करने के लिये गुरुदेव ने हमको भेजा है। अब आप साक्षी है।

राजा- क्या कुलपति श्री गर्गाचार्यजी ने आपको भेजा है?

टिप्पणी- जो ब्राह्मण दश हजार छात्रों को भोजन और वस्त्र प्रदान करता हुआ पढ़ाता है, उसे कुलपति (वाइस चांसलर) कहते हैं-

**प्रथमः**- अथ किम् महाराज्!

**द्वि.** जलाऽभावेन आश्रमपालिताः गवादयः पशवोऽपि व्याकुला भवन्ति।

**राजा**- गृहीतमाचार्यवचः, तत् भवन्तौ प्रतिष्ठेताम्, अहमनुपदमेव करोमि यत्नम्।

**छात्रौ**- वर्धतां भवान् (इति निर्गतौ)।

**राजा**- कोऽत्र भोः?

**धावकः**- (प्रविश्य) एषोऽस्मि महाराज।

**राजा**- धावक ! कोषाध्यक्षं विज्ञापय यत् कोशागारात् धनं दत्त्वा शतकर्मचरैः गर्गाश्रमे जलव्यवस्थां रचयतु। अकालक्षेपार्होऽयं कार्यक्रम इति।

**धावकः**- एष गच्छाम्यहम् (इति निष्क्रान्तः)।

**मन्त्री**- (प्रविश्य) जयतु-जयतु देव!

**राजा**- चन्द्रचूड़ ! ननु समाहिता जलसमस्या?

---

मुनीनां दशसाहस्त्रं, योऽन्नपानादिपोषणात्।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः।।

**प्रथम** - हाँ जी।

**द्वि.**—जल के अभाव में आश्रम में पालतू गौ आदि जन्तु भी अत्यन्त व्याकुल हैं।

**राजा**- आचार्य जी के वचन शिरोधार्य हैं। अब आप आश्रम को चलें, मैं अभी-अभी पानी का उपाय करता हूँ।

**छात्र**- ठीक है, वृद्धि हो आपकी (इस प्रकार निकल जाते हैं)।

**राजा**- यहाँ कौन है?

**धावक**- (प्रवेश करके) महाराज ! यह मैं हूँ।

**राजा**- धावक ! कोषाध्यक्ष को सूचित करो कि कोषागार से धन देकर सौ कर्मचारियों से गर्गाश्रम में जल की व्यवस्था करायें। यह कार्यक्रम विलम्ब करने योग्य नहीं है। अर्थात् यह कार्य तुरन्त होना चाहिये।

**धावक**- यह मैं जाता हूँ महाराज ! (इस प्रकार निकल गया)।

**मन्त्री**- (प्रवेश करके) जय हो महाराज की।

**राजा**- चन्द्रचूड़ ! क्या जल की समस्या का समाधान हो गया?

**मन्त्री**-महाराज ! आदेशानुसारेण मया प्रदेशपर्यटनं कृतम्, निरीक्षिता च चतुर्दिक्षु परिस्थितिः। आवश्यकतानुसारेण कोशात् स्वर्णदीनारान् यावच्छक्यं यन्त्राणि चादाय ग्रामकृषकेभ्यो यथायोग्यं वितीर्णानि। तेषु-तेषु स्थानेषु खनकशिल्पकादयोऽपि नियोजिताः, जलावतारे सति ते जनाः आश्वेव अस्मान् सूचयिष्यन्ति, नदीकूपतड़ागादिभ्यो जलमाहर्तुं घटीयन्त्रादीनां व्यवस्थापि साधिता।

**राजा**- मन्येऽहमनेन प्रबन्धेन आवर्षणाज्जलापायो दूरीभविष्यति।

**मन्त्री**- यथार्थमुदीरितं भवता, समर्थशाली भवान् दुर्भिक्षमपि सुभिक्षं विधातुं शक्नोति। भवादृशेन राज्ञा किं नामासाधनीयम् ?

रात्रिं करोति दिवसं दिवसं च रात्रिम्,
धूलिं गिरिं गिरिवरं विदधाति धूलिम्।

---

**मन्त्री**- महाराज! आपके आदेशानुसार मैंने जनपद का निरीक्षण किया और चारों ओर की परिस्थिति को समझा, आवश्यकता के अनुसार कोषागार से स्वर्णमुद्राओं और मशीनों को लेकर ग्रामीण किसानों में वितरण कर दिया है। यत्र-तत्र स्थानों पर खोदने वाले मिस्त्री और इञ्जीनियरों की नियुक्ति कर दी है। पानी निकल आने पर वे लोग हमको शीघ्र ही सूचित कर देंगे। नदी, कूप, तालाब आदि से जल निकालने के लिये घटी यन्त्र (रहट ढेकली) आदि की भी व्यवस्था कर दी गई है।

**राजा**- मैं समझता हूँ कि इस प्रबन्ध से वर्षा होने तक पानी का अभाव दूर हो सकेगा।

**मन्त्री**- आपने सर्वथा ठीक कहा है। आप सर्वथा समर्थशाली हैं, आप दुर्भिक्ष को भी सुभिक्ष बना सकते हैं। आप जैसे राजा के लिये असाध्य क्या है ? कुछ भी नहीं-

राजा विधाता के समान विचित्र रचना कर देता है। रात को दिन और दिन को रात, तथा धूलि को पहाड़ और पहाड़ को धूलि बना देता है। इसी प्रकार पुष्प

पुष्पं कठोरकुलिशं कुलिशं च पुष्पम्,
राजा तनोति विधिवत् रचनामपूर्वाम्॥14॥

**नेपथ्ये**- अरे! पतन्ति पतन्ति।

**राजा**- (श्रुतिमभिनीय) कुतोऽयं शब्दः ?

**मन्त्री**- आर्तनाद इव श्रूयते।

---

**अन्वयः**- राजा विधिवत् अपूर्वां रचनां तनोति (तद्यथा) रात्रिं दिवसं करोति, दिवसं च रात्रिं (करोति)। धूलिं गिरिं, गिरिवरं धूलिं विदधाति। पुष्पं कठोरकुलिशं, कुलिशं च पुष्पम् (विदधाति)।

**व्याख्या**—राजा=भूपः, विधिवत्=विधेरिवेतीवार्थे तत्र तस्येव इति षष्ठयन्तात् वति प्रत्ययः विधातृवत्, अपूर्वाम्=विचित्राम्, रचनाम्=सृष्टिम्, तनोति=रचयति, यथा रात्रिम्=निशाम्, दिवसम्=दिनम्, करोति=रचयति, दिवसं च रात्रिं करोति। धूलिं=रेणुम्, गिरिम्=पर्वतं विधेयपदम्, गिरिवरम्=हिमालयमुद्देश्यपदं धूलिमिति विधेय पदं विदधाति=रचयति। पुष्पम्= कुसुमम्, कठोरकुलिशम्= दृढ़िवज्रम्, कुलिशम् च पुष्पम् विदधाति। कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थो भवति राजा। अतिशयोक्तिः।

---

को बज्र, वज्र को पुष्प भी बना देता है। अर्थात् असम्भव को सम्भव करने का तात्पर्य यह है कि रोमपाद अनावृष्टिजनित दुर्भिक्ष को भी अद्भुत उपायों से सुभिक्ष बना सकते हैं।

**नेपथ्य में**— अरे गिर रहे हैं गिर रहे हैं।

**राजा**—(सुनने का अभिनय करके)- यह शब्द कहाँ से हो रहा है ?

**मन्त्री**— आर्तनाद जैसा सुनाई दे रहा है।

पुनर्नेपथ्ये हाहाकारः

सस्यानि वृक्षदलपुष्पफलान्यदन्तः,
धूम्रा धराम्बरतलं प्रतिरोधयन्तः।
घूका रूदन्त इव विन्ध्यगुहावतीर्णाः,
एते पतन्ति परितः शलभाः क्षुधार्त्ताः॥15॥

राजा- नूनमेते दीनस्वरा असह्यदुःखं सङ्केतयन्ति।

धावकः- (सहसा प्रविश्य) जयतु-जयतु स्वामी।

राजा- धावक ! कृतं कर्त्तव्यम् ?

---

अन्वयः- सस्यानि वृक्षदलपुष्पफलानि अदन्तः, धूम्राः धराम्बरतलं प्रतिरोधयन्तः, रूदन्तः घूकाः इव विन्ध्यगुहावतीर्णाः, एते क्षुधार्त्ताः शलभाः परितः पतन्ति।

व्याख्या- सस्यानि= धान्यानि, वृक्षदलपुष्पफलानि= दलानि= पत्राणि च पुष्पाणि= कुसुमानि च फलानि=आम्रादिफलानि चेति द्वन्द्वः, वृक्षाणाम्= विटपानाम् दलपुष्पफलानि तानीति द्वन्द्वगर्भकस्तत्पुरुषः। अदन्तः= भक्षयन्तः, धूम्राः= धूसराः धूलिवर्णा इत्यर्थः। धराम्बरतलम्= भूमिव्योमभागम्, प्रतिरोधयन्तः= आच्छादयन्तः, रूदन्तः=रटन्तः, घूकाः= पेचकाः, दिवान्धः कौशिको घूको दिवाभीतो निशाटन इत्यमरः। इव= उपमावाचकपदम्, विन्ध्यगुहावतीर्णाः=विन्ध्याचलकन्दरोत्थाः, एते=वर्तमानाः, क्षुधार्त्ताः=बुभुक्षापीड़िताः, शलभाः=पतङ्गाः, समौपतङ्गशलभावित्यरः। परितः= सर्वतः, पतन्ति= आक्रम्य तिष्ठन्तीत्यर्थः, द्वितीयपादे उत्प्रेक्षा, तृतीये उपमा, सर्वत्रानुप्रासः एवमनपेक्षत्वात् संसृष्टिरलङ्कारः। वसन्ततिलकावृत्तम्।

---

(नेपथ्य में हाहाकार)

खेतों की फसल और वृक्षों के पत्र पुष्प और फलों को सफाचट करती (खाती) हुई, एवम् अपने प्रसार फैलाव से पृथ्वी आकाश को ढकती (आच्छादित करती) हुई, धूसरवर्णवाली, घुघू के समान रोनेवाली तथा विन्ध्याचल की गुफा से निकली हुई ये भुक्खड़ टिड्डियाँ धावा बोलकर चारों ओर पड़ाव (बसेरा) ले रही हैं।

राजा- निश्चित ही ये आर्तस्वर असह्य दुःख होने का संकेत कर रहे हैं।

धावक- (अकस्मात् प्रवेश होकर) महाराज की जय हो।

राजा- धावक ! जो कार्य होना था वह पूरा हो गया ?

**धावकः**:- गर्गाश्रमे सम्पन्ना जलव्यवस्था महाराज ! किन्तु शलभबाधान्निवेदयितु-मरुणाचलवासिनो बहवः कृषकाः द्वारदेशे हाहाकारं कुर्वन्ति।

**राजा**-अहो ! ममापि राज्ये सारङ्गाणामीतिः।

**तरुपालः**:- (सहसा प्रविश्य) जयतु-जयतु स्वामी।

**राजा**- तरुपालक ननु फलन्ति तरवः ?

**तरूपालः**:- फलन्ति तरवो महाराज किन्तु लौहपञ्जरं भङ्क्त्वा जन्तुप्रदर्शनीतो विद्रुतः कश्चित्सिंहो वाटिकां प्रविष्टः, स च आवेशवशात् पालितजन्तून् विदारयति। अस्माभि कृतैरपि कलकलैर्न पलायते। तस्य भयात् वृक्षारूढ़ा मालाकाराः भवन्तं स्मरन्ति।

**राजा**- तरुपाल! त्वमितो गत्वा मालाकारानाश्वासय अहं चाशुपदमेव आगच्छामि।

**तरुपालः**:- यथादिशति भवान् (इति निष्क्रान्तः)।

**राजा**- धावक ! कुत्र मे धनुर्वाणौ ?

---

**धावक**- महाराज ! गर्गाश्रम में जल की व्यवस्था पूरी हो गई है। किन्तु टिड्डियों का उपद्रव निवेदन करने के लिए अरूणाचलवासी बहुत से किसान लोग द्वार पर हाहाकार मचा रहे हैं।

**राजा**- अरे ! मेरे राज्य में टिड्डियों का भय है।

**तरुपाल**- (सहसा प्रवेशकर) जय हो महाराज की।

**राजा**- तरुपाल ! क्या वृक्ष फल रहे हैं ?

**तरुपाल**- महाराज ! वृक्ष तो फल रहे हैं किन्तु लोहे का पिंजड़ा (कठघर) तोड़ कर प्रदर्शिनी (नुमाइश सर्कस) से भागा हुआ कोई सिंह वाटिका में घुस आया है। वह आवेश में आकर पालतू जन्तुओं को मार (चीरफाड़) रहा है। हम लोगों द्वारा होहल्ला मचाने पर भी वह नहीं भाग रहा है। उसके डर से सभी माली पेड़ों पर चढ़ गये तथा आपका स्मरण कर रहे हैं।

**राजा**- तरुपाल ! तुम इधर से जाकर मालाकारों को धैर्य बँधाओं मैं तुम्हारे पीछे ही आ रहा हूँ।

**तरुपाल**- आपका जैसा आदेश (इस प्रकार निकल गया)।

**राजा**- धावक! मेरा धनुषबाण कहाँ है ?

धावकः- गृह्यतां महाराज ! इदं धनुरयंवाणः (इति ददाति)।

राजा- (गृहीत्वा) धावक ! त्वया शलभाक्रान्तेषु जनेषु रक्षोद्यतं मां विज्ञाप्य अश्वं सज्जयितुमश्वपाल आदिश्यताम्।

धावकः- यथाज्ञापयति स्वामी (इति निष्क्रान्तः)।

राजा- चन्द्रचूड़ ! पश्य, एकतः शलभाक्रमणम्, अपरतश्च सिंहाक्रमणम्, अत उपद्रवद्वयवारणाय उपायद्वयमत्यन्तं मां प्रेरयति-

सधूमध्वनिवाणोऽयं, शास्तु मे शलभापदम्।
सिंहशोणितपानार्थं, खड्गोऽयं त्वरते मम॥16॥

---

अन्वयः- अयम् मे सधूमध्वनिवाणः, शलभापदम् शास्तु, सिंहशोणितपानार्थम् अयम् मम खड्गः त्वरते।

व्याख्याः- अयम्=एषः, मे=रोमपादस्य, सधूमध्वनिवाणः=धूमशब्दाभ्यां सहितं शरः, शलभापदम्= पतङ्गभीतिम्, शास्तु=हरतु, सिंहशोणितपानार्थम्=व्याघ्ररक्तास्वादार्थम्, अयं मम खड्गः=असिः, त्वरते=शीघ्रते।

---

धावक- लीजिये महाराज! यह धनुष और यह बाण है (इस प्रकार देता है)।

राजा- (लेकर) धावक! तुम टिड्डियों से पीड़ित लोगों की मेरे द्वारा रक्षा की तैयारी की सूचना देकर घोड़ा सजाने के लिये अश्वपाल को आदेश दो।

धावक- आपकी जैसी आज्ञा (इस प्रकार निकल गया)।

राजा- चन्द्रचूड़ ! देखो, एक ओर से तो टिड्डियों का आक्रमण हो रहा है, और दूसरी ओर से सिंह का आक्रमण हो रहा है, इसलिये दोनों आक्रमणों को दूर करने के लिये मुझे दो उपाय प्रेरित कर रहे हैं। अर्थात् मुझे दो उपाय करने चाहिये।

धुआँ छोड़ने वाला और शब्द करने वाला यह मेरा बाण टिड्डियों को भगाये और इधर सिंह का रक्तपात करने के लिये यह मेरी तलवार जल्दी मचा रही है।

**मन्त्री-** दशरथसखस्य भवत एवमुचितमेव।

**राजा-** वाणं सन्धाय-

**गच्छ वाणातिवेगेन, वमन् धूमं ध्वनिं सृजन्।**
**तत्कृत्वा पुनरागच्छ, यदिच्छाम्यरुणाचले।। 17।।** (इति बाणं चालयति)

---

**अन्वयः-**हे वाण! धूमम् वमन् ध्वनिम्-सृजन् अतिवेगेन गच्छ, अरुणाचले यत् इच्छामि तत् कृत्वा पुनः आगच्छ।

**व्याख्या--** हे बाण= भोः शर! धूमम्= धूम्रं वाष्पमित्यर्थः। वपन्= उद्गिरन्, ध्वनिम्= कलकलम्, सृजन्=कुर्वन्, अतिवेगेन= महारयेण, गच्छ=याहि, अरुणाचले= एतज्जनपदे, यत्=अहिंसापूर्वकशलभनिवारणम्, इच्छामि= अभिलषामि, तत्= शलभपलायनकार्यम्, कृत्वा=विधाय, पुनः=भूयः, आगच्छ=आयाहि। यथा गृहेषु= धूमप्रसारणेन मशकाः पलायन्ते, वृक्षसस्येषु कोलाहलोपायेन खगाः निवार्यन्ते, तथैव शलभवारणायं प्रयोग इति निष्कर्षः।

---

**मन्त्री-** आपके लिये यह उचित ही है, क्योंकि आपके मित्र अयोध्या नरेश दशरथ जी हैं।

**राजा-** (धनुष पर बाण चढ़ाकर) हे बाण ! तुम धुआँधार करते हुये तथा होहल्ला मचाते हुये द्रुतगति से जाओ और अरुणाचल क्षेत्र में मैं जो कुछ चाहता हूँ वह (टिड्डी भगाने का) कार्य करके वापस लौट आओ। (इस प्रकार राजा ने बाण चला दिया)।

## • सधूमध्वनि

राजा रोमपाद ने टिड्डियों को भगाने के लिये अभिमन्त्रित करके अरुणाचल की ओर एक ऐसा बाण जो धुआँ छोड़ता हुआ और कलरोर (होहल्ला) मचाता हुआ चला दिया। अरुणाचल में जाकर उसने धुँआ और कलकलध्वनि से सारी टिड्डियों को भगा दिया और वापस लौट कर राजा के तरकस में प्रवेश किया।

साधारण धुआँ करने से मच्छर आदि जन्तु भाग जाते हैं, यदि ईंधन में मिर्च चमड़ा आदि मिलाकर धुआँ किया जाये तो आदमी भी भाग खड़ा होता है। हल्लागुल्ला करने से पक्षी भी भागते हैं, यदि हल्लागुल्ला और धुआँ दोनों ही किये जायें तो टिड्डियों का भाग जाना स्वाभाविक है।

पुराणों में इस प्रकार के अस्त्रशस्त्रों का प्रयोग पदे--पदे मिलता है। महान् खेद

**मन्त्री-** धन्योऽयं पराक्रमः।

**राजा-** चन्द्रचूड़ ! भवान्तावत् पौरकार्यमवेक्षितुं स्वनियोगं प्रतिष्ठताम्, अहं पुनः सिंहं नियन्तुं वाटिकां साधयामि।

**मन्त्री-** एवमस्तु महाराज! (इति निष्क्रान्तः)।

**नेपथ्ये-** पलायताम्-पलायताम्, वित्रस्तोऽयं सिंहः पशूनमर्दयत् इत एव धावति।

**राजा-** विलम्बतेऽश्वपालः, त्वरते मे बाहुः सिंहं व्यापादयितुम्।

**पुनर्नेपथ्ये-** हं हो! रक्ष रक्ष! गोमहिषहरिणशिशून् विदारयन् एष सिंहः गर्जन्नाश्रमाभिमुखमेवाभिवर्तते, तद्भयात् सर्वे बटुकाः इतस्ततो लुप्यन्ति।

---

का विषय है कि ऐसा चमत्कारी गुण हमने हाथ से खो दिया। अश्रुगैस इसी प्रकार का धुआँ है।

कौटिल्य शास्त्र में इस प्रकार के अनेक उपचार दर्शाये गये हैं। सर्प की केंचुली, गाय का गोबर, घोड़े की लीद और दो मुँहे सर्प का मस्तक, इन चारों को मिलाकर यदि धुआँ किया जाये तो प्राणी अन्धे हो जाते हैं।

**मन्त्री-** धन्य है इस पराक्रम को।

**राजा-** चन्द्रचूड़ ! आप नगर सम्बन्धी कार्य देखने के लिये अपने कर्त्तव्य (ड्यटी) पर जायें, मैं सिंह को काबू में लाने के लिये वाटिका को जाता हूँ।

**मन्त्री-** ऐसा ही हो महाराज (इस प्रकार निकल गया)।

**नेपथ्य में-** भागो-भागो, विदका हुआ यह सिंह पशुओं को फाड़ता हुआ इधर ही आ रहा है।

**राजा-** अश्वपाल विलम्ब कर रहा है, इधर सिंह को मारने के लिये मेरी भुजा जल्दी कर (फड़क) रही है।

**फिर नेपथ्य में-** अरे! रक्षा करो रक्षा करो। गौ, भैंस, हरिण और इनके बच्चों को फाड़ता एवं गरजता हुआ यह सिंह आश्रम की ओर ही आ रहा है, उसके डर से सभी विद्यार्थी इधर उधर छिप रहे हैं।

नियः=नेत्रस्य, नेः=नेतुः (नायकस्य) वा पथ्यम्=हितकरमिति नेपथ्यम्, णीङ् धातु से विच् प्रत्यय करके तथा गुण करके नेपथ्य शब्द बताया गया है। वास्तव में नेपथ्य पद रूढ़ और लाक्षणिक (पारिभाषिक) पद है। मञ्च के पृष्ठभाग में एक या दो प्रकोष्ठ होते हैं। यहाँ पर पात्रों को वेषभूषा से सुसज्जित किया जाता है।

राजा-(श्रुतिमभिनीय) अये! त्वर्यतां त्वर्यताम्, कुत्र ममाश्वः ?

धावकः- (सहसा प्रविश्य) महाराज! द्वारदेशे सज्जितोऽश्वो भवन्तं प्रतिपालयति।

राजा- धावक ! पन्थानं दर्शय वाटिकायाः।

धावकः- इत इतो देव!

राजा- तिष्ठ रे! तिष्ठ व्याघ्राधम (इति वदन् धावकेन सह निष्क्रान्तः)।

॥ इति प्रथमोऽङ्कः॥

---

इसीलिये अमरकोश में 'आकल्पवेषो नेपथ्यम्' कहा गया है। पात्रों का प्रवेश और निर्गमन यहीं से होता है। जो बात खुले मञ्च पर दिखाने या सुनाने योग्य नहीं होती है, उसको नेपथ्य गृह के अन्दर से कह कर सूचित कर देते हैं। अतएव सज्जागार वा सूचनालय को नेपथ्य कहते हैं। नेपथ्य का लक्षण इस प्रकार हैः-

कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते।

प्रकृतस्थान पर पशुओं का मर्दन करते हुये सिंह का मञ्च पर स्पष्ट दर्शाना कवि को अभीष्ट नहीं है, अतः नेपथ्य का प्रयोग किया गया है।

राजा- (सुनने का अभिनय करके) अरे ! जल्दी करो जल्दी करो। मेरा घोड़ा कहाँ है ?

धावक- (सहसा आकर) महाराज ! द्वार पर खड़ा सुसज्जित घोड़ा आपकी प्रतीक्षा कर रहा है।

राजा- धावक ! वाटिका का मार्ग बताओ।

धावक- इधर से आइये महाराज !

राजा- अरे! अधम सिंह! ठहर जा, ठहर जा (ऐसा कहता हुआ धावक के साथ निकल गया)।

टिप्पणी- जिस प्रकरण के अन्त में मञ्चपर से सभी क्रीडापात्र निकल जायें, उसे अङ्क कहते हैं; अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इतिकीर्तितः (सा. द. 6)

॥प्रथम अङ्क समाप्त॥

# ॥द्वितीयोऽङ्कः॥

(ततः प्रविशति छत्रधारी पण्डितः)

**पण्डितः**–(परिक्रम्य) अहो ! वर्षर्तावप्यत्र ईदृशः प्रचण्डघर्मः यत् धृतातपत्रोऽप्यहं न शान्तिं विन्दामि, न जाने किमेतन्नगरम् ? समीपं रक्षाबन्धनम्, तथापि नगरं न सज्जितम्, रम्भाकलशतोरणैः चतुष्पथानि नालङ्कृतानि, मन्दिरेषु न ध्वजारोहणम् नापि च वैदिकाः वेदध्वनिं कुर्वन्ति, नैवापणमार्गाः मृज्यन्ते (पदान्तरे) श्रीहीनमिदम् नगरं चन्द्रनक्षत्रहीनं गगनमिव दृश्यते। नूनमत्र महता हेतुना भवितव्यम्, कुत्रापि न गीतं, न वादित्रं न नृत्यं पश्यामि। चिरात् पिपासितोऽहं कुत्र पिबेयम्, कुत्र पृच्छेयम्, जनसञ्चारोऽपि न प्रतीयते, किं केनापि शापितमिदम्।

(पुनः पर्यट्य) भोः! भोः! महाशयः श्रूयताम्, किमेतन्नगरम् ? न शृणोषि किम् ? हा! हा! स्वेदप्रवाहैर्ममपटान्यपि स्नातानि। पिपासया च मे प्राणाः शुष्यन्ति। (इतस्ततो जलं ढुण्ढति)

---

## ॥द्वितीय अङ्क॥

(तत्पश्चात् छाता लगाये हुये एक पण्डित प्रवेश करता है)

**पण्डित**–(घूमकर) अरे ! यहाँ तो वर्षा ऋतु में भी इतनी विकट धूप (गर्मी) हो रही है कि छाता लगाने पर भी चैन नहीं मिलता। न जाने यह कौन नगर है? रक्षा बन्धन का त्यौहार निकट आ गया है, फिर भी नगर में कुछ भी सजावट नहीं। न तो कहीं पर कदलीरोपण किया गया, न ही कलशस्थापन किया गया तथा न ही वन्दनवारों से प्रधान द्वार वा चौराहे सजाये गये हैं। मन्दिरों पर झण्डियाँ भी नहीं लगाई गईं। वैदिक लोग वेद पाठ भी नहीं कर रहे हैं। बाजार की सड़कों-की सफाई (छिड़काव आदि) भी नहीं हो रही है। (आगे बढ़कर) सजावट रहित यह नगर चन्द्रनक्षत्र से रहित आकाश के समान (भद्दा एवं सूनसान सा) लग रहा है। इसमें कोई भारी कारण होना चाहिये। मैं बहुत देर से प्यासा हूँ। कहाँ पर पानी पिया जाये, किससे बातचीत की जाये। यहाँ पर नरनारी भी तो नहीं चल फिर रहे हैं, क्या इस नगर को किसी ने शाप दे दिया है।

(पुनः घूमकर) अजी! अजी! महाशयजी ! सुनिये ! इस नगर का क्या नाम है? अजी! क्या नहीं सुन रहे हो। हाय! हाय! पसीना से तो मैं ऐसा सराबोर हो गया हूँ कि मेरे कपड़े भी नहा गये। प्यास के मारे मेरे प्राण ही सूख रहे हैं। (इधर-उधर पानी ढूँढने लगा)।

(ततः शिरसा मधुभाण्डं वहन्ती प्रविशति किराती)

**किराती-** मधुकं गृह्यतां मधुकम् (इत्युच्चैर्वदति)।

**पण्डितः—**(दृष्ट्वा) अहो! अस्या लावण्यम्, यद् विलोक्य मम वृद्धस्यापि तारुण्यं जागर्ति (इति नानाविचारं करोति, स्पष्टं ब्रूते) भोः ! वत्से ! अत्र कुत्रापि पानीयमस्ति ?

**किराती-** नास्ति कुत्रापि।

**पण्डितः-** अथ मधुकं केन मूल्येन विक्रीणासि ?

**किराती-** पात्रैकं पानीयमादाय पात्रपञ्चकं मधुकं ददामि।

**पण्डितः-** हन्त भोः! अपसर।

**किराती-** यदि न क्रेतव्यं तदा किं पश्यसि ? (इति निष्क्रान्ता)।

(ततः भाण्डं शिरसा वहन्ती गोपी प्रविशति)

**गोपी—**(उच्चस्वरेण) घृतं गृह्यतां घृतम्।

**पण्डितः-** भो देवि ! अहं पिपासया म्रिये, तदस्ति कुत्रापि पानीयम् ?

---

(तत्पश्चात् शिर पर शहद की हण्डी रखे हुये किराती प्रवेश करती है)

**किराती-** शहद ले लो शहद, (जोर से चिल्लाती है)।

**पण्डित-** (देखकर) अहो! क्या इसकी सुन्दरता है, जिसे देखकर मेरी बुढ़ौती पर भी जवानी छा गई। (इस प्रकार सोचता है, स्पष्ट बोलता है) अरी बेटी ! यहाँ पर कहीं पानी है ?

**किराती-** कहीं नहीं।

**पण्डित-** अच्छा तो शहद किस मूल्य पर देती है ?

**किराती-** एक पात्र (गिलास) पानी लेकर पाँच गिलास शहद देती हूँ।

**पण्डित-** बड़ा आश्चर्य है। जा चली जा।

**किराती-** यदि नहीं लेना तो क्या (मेरा मुँह) देखते हो। (इस प्रकार निकल गई)।

(तत्पश्चात् शिर पर मटकी लिए हुये एक गोपी ग्वालिनी भी प्रवेश करती है)

गोपी (उच्च स्वर से) घी ले लो घी।

**पण्डित-** भो देवी ! मैं प्यासा मरा जा रहा हूँ, सो यहाँ कहीं पानी मिलेगा ?

गोपी-विप्रदेव ! नास्ति कुत्राप्यत्र पानीयम्।

पण्डितः- अथ घृतं केन मूल्येन दीयते ?

गोपी- न केनापि मूल्येन।

पण्डितः- तदा कथं विक्रीणासि ?

गोपी- विप्रदेव ! नात्र देशे गव्यविक्रयणं क्रियते, किन्तु प्रतिदीयते।

पण्डितः- अथ केन रूपेण ?

गोपी- पात्रैकं जलं गृहीत्वा पात्रत्रयं ददामि घृतमितिभावस्तथापि यदीच्छति भवान् पातुम् निश्शुल्कं ददामि।

पण्डितः- (विहस्य) धन्या भवति यज्जलपिपासां घृतेन शमयति, नन्वहं पृच्छामि किमिदं नगरम् ?

गोपी- अलं प्रश्नोत्तरेण (इति निष्क्रान्ता)।

---

गोपी- ब्राह्मण देवता ! यहाँ पानी कहीं नहीं है।

पण्डित- अच्छा तो घी किस भाव बेचती हो ?

गोपी- किसी भाव में नहीं।

पण्डित- तब क्यों बेचती हो ?

गोपी- ब्राह्मण देवता ! इस देश (अङ्गदेश) में गव्य (दूध, दही, घी, मक्खन, मट्ठा इत्यादि) नहीं बेचा जाता है (प्राचीनकाल में कोई भी घृतादि बेचना पाप मानता था) हाँ बदला जा सकता है।

पण्डित- अच्छा तो किस रूप में बदलती हो ?

गोपी- तीन पात्र (गिलास) घी देकर एक पात्र पानी लेती हूँ, अर्थात् घी से पानी बदलती हूँ, यही मेरा अदला बदली का भाव (हिसाब) है, फिर भी यदि आप पीना चाहते हो तो आपको निःशुल्क (मुफ्त) दे सकती हूँ।

पण्डित- (हँसकर) श्रीमती जी ! आप तो धन्य हैं, जो पानी की प्यास को घी से शान्त करना चाहती हैं। अजी मैं ! आपसे पूछता हूँ कि इस नगर का क्या नाम है ?

गोपी- प्रश्नोत्तर करना व्यर्थ है (इस प्रकार निकल गई)।

**पण्डितः**- (पर्यटन्) अहो! कीदृशमिदं नगरम्, यत्र घृतं सुलभम्, जलं च दुर्लभम्।

**महापौरः**-(प्रविश्य) प्रणम्यते भगवन्!

**पण्डितः**- चिरञ्जीव वत्स! दूरादगतोऽहम् अतस्त्वां पृच्छामि किमिदं नगरम्?

**महापौरः**- भगवन्! चम्पाभिधानेयं राजधानी, सोमवंशीयो राजा रोमपादश्चात्र प्रशासको वर्तते।

**पण्डितः**- ननु सन्निहितेऽपि रक्षाबन्धने कथं नालङ्कृतं नगरम्?

**महापौरः**- अत्र देशे महादुर्मरा वर्ततेऽनावृष्टिः। प्रजानामिदं संकटं विलोक्य महाराजेन सर्वे उत्सवाः निषिद्धाः।

**पण्डितः**- किं किं जलं न वर्षति?

**महापौरः**- सत्यमेतत् देव! चिरान्न वर्षति।

---

**पण्डित**- (घूमकर) आश्चर्य है, न जाने यह कैसा नगर है जहाँ पर घी सुलभ है और पानी दुर्लभ।

**महापौर**- (प्रवेश करके) भगवन्! प्रणाम।

**पण्डित**- बेटा! चिरञ्जीव रहो। मैं दूर से आया हूँ, अतः तुमसे पूछता हूँ, कि यह कौन नगर है?

**महापौर**- भगवन्! यह चम्पा नाम की राजधानी है और चन्द्रवंशी राजा रोमपाद यहाँ के प्रशासक हैं।

**पण्डित**- रक्षाबन्धन का त्यौहार आने वाला (सन्निकट) है, फिर भी नगर की सजावट क्यों नहीं की गई?

**महापौर**- इस देश में मार डालने वाला (घोर) सूखा पड़ा हुआ है, प्रजा के इस संकट को ध्यान में रखकर महाराज ने सभी उत्सव निरस्त कर (रोक) दिये हैं।

**पण्डित**- क्या क्या पानी नहीं बरस रहा है?

**महापौर**- भगवन् यह बात सर्वथा सत्य है, बहुत समय से वर्षा नहीं हो रही है।

**पण्डितः** (इतस्ततो वीक्ष्य) अत एव धूलि-धूसरितं वातावरणम्, नन्वत्र वैदिका न वसन्ति ?

**महापौरः**- कथं न वसन्ति ?

**पण्डितः**- एवं चेत्तर्हि रुद्राभिषेकमारभ्य निवार्यतामिति।

**महापौरः**- (करौ बद्ध्वा) गुरुदेव ! राजकुलमध्युष्य भवतैव धर्मानुष्ठानेन अनुगृह्यता-मङ्गदेशः।

**पण्डितः**- वत्स ! तीर्थयात्रार्थं कृतसंकल्पस्य न मे क्षणः, तदन्यैर्ब्राह्मणैर्निष्पाद्यतां स्वकार्यम्।

**महापौरः**- तत् किं भवान् महाराजस्य अर्घ्यमपि न गृहीष्यति ?

**पण्डितः**- नहि नहि वत्स ! यद् वक्तव्यं तदुक्तं मया, किन्तु एकं श्रूयताम्।

**महापौरः**- किं तत् ?

**पण्डितः**- चिरकालात् पिपासया शुष्यन्ति मे प्राणाः तस्माच्छीतलं जलमिच्छामि।

---

**पण्डित**- (इधर-उधर देखकर) अच्छा जी! इसीलिये चारों ओर धूल ही धूल का वातावरण (सूखा मौसम) दिखाई दे रहा है। क्या इस नगर में ब्राह्मण (वेदपाठी) नहीं रहते ?

**महापौर**- क्यों नहीं रहते ?

**पण्डित**- यदि ऐसी बात है तो रुद्राभिषेक कराके इस विपत्ति को भगा दीजिये।

**महापौर**- (हाथ जोड़कर) गुरुदेव ! कुछ समय तक राजदरबार में रहकर आप ही इस धर्मानुष्ठान का सम्पादन कर इस अङ्गदेश पर कृपा करें।

**पण्डित**- वत्स ! तीर्थयात्रा का संकल्प लेकर मैं घर से निकला हूँ अतः मुझे क्षणमात्र भी अवकाश नहीं है। इसलिये अन्य ब्राह्मणों से ही यह कार्य करा लीजिये।

**महापौर**- तब क्या (चलकर) रोमपाद से आप अर्घ्य भी नहीं लेंगे ?

**पण्डित**- नहीं नहीं बेटा! जो कहना चाहिये वह मैंने कह दिया, किन्तु एक बात कहता हूँ, सुनिये।

**महापौर**- वह क्या ?

**पण्डित**- बहुत देर से ऐसी प्यास लगी है, कि मेरे प्राण सूख रहे हैं। इसलिये ठण्डा पानी चाहता हूँ।

**महापौरः**- भीषणेयं समस्या, तथापि विचारयामि।(ततः प्रविशति विहङ्गिकां वहन् नरकः)

**नरकः**- (परिक्रमनुच्चस्वरेण) पानीयं गृह्यतां रे पानीयम्।

**पण्डितः**- (आकर्ण्य) सिद्धं नः समीहितम् (पात्रं दर्शयित्वा) देहि भो! देहि अहं तृषार्त्तः।

**महापौरः**- अयं विक्रीणाति जलम्।

**पण्डितः**- अये, जलमप्यत्र विक्रीयते ! तात रे तात!

**महापौरः**- प्रागेवोक्तं यद् दुर्मरात्रानावृष्टिः।

**नरकः**- पानीयं गृह्यतां पानीयम्।

**महापौरः**- अरे ! केन कर्षेण ददासि पानीयम् ?

**नरकः**- एककर्षेण आतृप्तिपेयम् ददाम्यावुत्त ! कुम्भस्थं शीतलं सुवासितं च पानीयम्।

---

**महापौर**- यह तो विकट समस्या है, फिर भी विचारता हूँ।

(तत्पश्चात् (कन्धे पर) वैहगी ढोता हुआ एक आदमी (नीच) प्रवेश करता है)

**नरक**-(घूमकर चिल्लाता हुआ) अरे पानी ले लो पानी।

**पण्डित**- (सुनकर) अहा! हमारा मनोरथ सिद्ध हो गया (गिलास दिखाकर) अजी! लाओ लाओ मैं बहुत प्यासा हूँ।

**महापौर**- यह तो पानी बेचता है।

**पण्डित**- अरे! यहाँ पर पानी भी बेचा जाता है, बाप रे बाप !

**महापौर**- मैंने पहले ही कहा था कि यहाँ प्राणहारिणी (जानलेवा) अनावृष्टि है।

**नरक**- पानी ले लो पानी।

**टिप्पणी**- नरक पद में नर पद से कुत्सित (अधम) अर्थ में, 'क' प्रत्यय हुआ है पानी बेंचना कुत्सित कर्म है।

**महापौर**- अरे ! किस दर (हिसाब) से पानी देता है ?

**नरक**- बहनोई जी (बाबूजी) एक कर्ष में पेट भर पिलाता हूँ। मटके का ठण्डा और सुगन्धित पानी है। प्राचीनकाल में एक विशेष सिक्का चलता था, यह सोने का होता था। इसका वजन वर्तमान रूपये भर का (लगभग) होता था। इस मुद्रा को कर्ष कहते थे।

**पण्डितः**- नहि-नहि शूद्रस्पृष्टं न पिवामि, नाहमीदृशस्तीव्रपिपासितः अन्यत्र द्रक्ष्यामि।

**महापौरः**- गुरुवर्य ! वहुदूरमपि जलं न लप्स्यते, तदिहैव पीयताम्।

**नरकः**- व्यत्येति मे काल तस्माच्छीघ्रं निर्णीयताम्।

**महापौरः**- (सरोषम्) धिङ्मूर्ख ! किं न पश्यसि! एते गुरुचरणाः ब्राह्मणाः पिपासाकुला, पुनश्च त्वं कस्यादिशाज्जलं विक्रीणासि ? दर्शय राजाज्ञाम्।

**नरकः**- नहि-नहि आवुत्त! क्षम्यतां, क्षम्यताम्, ब्राह्मणाः सर्वपूज्या भवन्ति, एभ्यस्तु निःशुल्कं वितरामि (पण्डितं प्रति) गुरुदेव ! सज्जयतां पात्रम्।

**पण्डितः**- (पात्रमुत्तोल्य) पात्यतामस्मिन् पानीयं रे !

---

**पण्डित**- नहीं-नहीं, शूद्र का छुआ हुआ पानी नहीं पीता हूँ, मैं इतना अधिक प्यासा भी नहीं हूँ। अन्यत्र कहीं (पानी) देख लूँगा।

**महापौर**- गुरुवरेण्य! बहुत दूर तक पानी नहीं मिल सकेगा, इसलिये यहीं पर पी लीजिये।

**नरक**- मुझे बहुत विलम्ब हो रहा है, इसलिये जल्दी निर्णय कीजिये।

**महापौर**- (क्रोधपूर्वक) अरे! मूर्ख तुझे धिक्कार है। क्या तू नहीं देख रहा है कि ये ब्राह्मण गुरुदेव प्यास से व्याकुल हैं। फिर तू किसके आदेश से जल बेचता है? राजाज्ञा (लायसेंस) दिखा।

### • ॥ विहङ्गिका ॥

एक मजबूत डण्डे के दोनों छोरों पर छीकें बाँध लिये जाते हैं। इधर-उधर के छीकों में सामान रख लेते हैं। पश्चात् कन्धे पर दण्डे को रखकर सामान सरलता से ढोते हैं। इसी को वेहँगी कहते हैं। शिवजी पर जल चढ़ाने के लिये इसी (कावड़) से ले जाते हैं। यहाँ पर वेहँगी के दोनों ओर पानी के मटके लादकर आदमी पानी बेचता फिरता है।

**नरक**- नहीं-नहीं, बहनोई जी ! क्षमा कीजिये, क्षमा कीजिये। ब्राह्मण तो सभी के पूजनीय होते हैं, इनके लिये तो निःशुल्क (मुफ्त) पानी देता हूँ (पण्डित जी की ओर देखकर) गुरुजी ! पात्र (गिलास) बढ़ाइये।

**पण्डित**- (गिलास बढ़ाकर) अरे! इसमें पानी डाल दे।

**नरकः**- (जलेन पात्रं प्रपूर्य) पीयतां गुरो!

**पण्डितः**- (पीत्वा) अपरं देहि भोः! शीतलं सुगन्धितं चेदम्।

**नरकः**- (पुनः-पुनः-पुनः दत्वा) अलम्?

**पण्डितः**- (पुनः-पुनः पीत्वा) नहि-नहि। इमं कमण्डलुमपि पूरय, इदं पाथेयं भविष्यति।

**नरकः**- (घूर्णयित्वा) कमण्डलुं जलेन पूरयति (इति निष्क्रान्तः प्रणम्य)।

**पण्डितः**- (जलपानानन्तरम्) वत्स! अभिनन्दनीयेयं तव सेवा, सम्प्रत्यनुजानीहि मां गन्तुम्।

**महापौरः**- गम्यतां भगवन्! पुनर्दर्शनाय (इति प्रणमति)।

**पण्डितः**- वत्स! स्वस्ति ते भूयात् (इति निष्क्रान्तः)

**महापौरः**- (विचारयन्) ब्राह्मणोक्तमनृतं न भवति, तदहमितो गत्वा इदं तथ्यं महाराजाय निवेदयामि (परिक्रम्य) अत्र कोऽपि न दृश्यते।

---

**नरक**- (पानी से गिलास भरके) पीजिये गुरुजी!

**पण्डित**- (पीकर) अरे और दे। यह ठण्डा और सुगन्धित है।

**नरक**- (बार-बार देकर) बस करूँ? अर्थात् क्या अब पूरा पी लिया?

**पण्डित**- (बार-बार कई गिलास पीकर) नहीं-नहीं इस कमण्डलु को भी भर दे, रास्ते में पीने के लिये हो जायेगा।

**नरक**- (पण्डित को घूरकर देखता हुआ) कमण्डलु को पानी से भर देता है (प्रणाम कर निकल गया)।

**पण्डित** (पानी पीने के बाद) बेटा! तुम्हारी यह जल सेवा अत्यन्त प्रशंसनीय है, अब मुझे जाने की आज्ञा दीजिये।

**महापौर**- जाईये भगवन्! फिर कभी दर्शन दीजिये (प्रणाम करता है)।

**पण्डित**- बेटा! तुम्हारा कल्याण हो (इस प्रकार पण्डित जी निकल गये)।

**महापौर**- (विचार करता हुआ) ब्राह्मण का कथन असत्य नहीं हो सकता। इसलिये मैं इधर से जाकर यह तथ्य (वृत्तान्त) महाराज को सूचित करूँ (घूमकर) अरे! यहाँ तो कोई नहीं दिखाई देता है।

**महापौरः**- धावक! महाराजं द्रष्टुमिच्छामि।

**धावकः**- नायमवसरो दर्शनस्य।

**महापौरः**- कस्मात्?

**धावकः**- सिंहहननानन्तरं महाराजो विश्रामं करोति, अतस्तेन सर्वे प्रवेशाः वर्जिताः।

**महापौरः**- किं हतः सिंहो महाराजेन?

**महापौरः**- शलभान् विद्राव्य वाणः पुना राजानमासादित इति प्रकरणं जानामि न तु सिंहस्य।

**धावकः**- मत्तस्तच्छ्रूयताम्।

**महापौरः**- श्रावय रे!

**धावकः**- अश्वादवतीर्य खड्गमुत्तोलयन् महाराजो यदा सिंहं फट्करोतिस्म, तदा सिंहोऽपि भयङ्करगर्जनं कृतवान्।

**महापौरः**- ततस्ततः?

---

**महापौर**- धावक! महाराज के दर्शन करना (मिलना) चाहता हूँ।

**धावक**- यह अवसर मिलने का नहीं है।

**महापौर**- क्यों?

**धावक**- सिंह को मारने के पश्चात् महाराज विश्राम कर रहे हैं, अतएव उन्होंने सब प्रकार के प्रवेश रोक दिये हैं।

**महापौर**- क्या महाराज ने सिंह को मार दिया?

**धावक**- और क्या। क्या आपने नहीं सुना?

**महापौर**- टिड्डियों को भगाकर वाण राजा के पास (तरकस में) वापस आ गया, यहाँ तक के प्रकरण को तो मैं जानता हूँ, सिंह का प्रकरण ज्ञात नहीं।

**धावक**- वह मुझसे सुनिये।

**महापौर**- अरे सुना!

**धावक**- घोड़ा से उतरकर तलवार उठाते हुये महाराज ने जब सिंह को फटकारा (ललकारा) तब सिंह ने भी भयंकर गर्जना की।

**महा**- फिर क्या हुआ?

**धावकः**- ततः सिंहाभिमुखं गच्छतो महाराजस्य क्षात्रपरिक्रमः समुद्वलितः।

**महापौरः**- ततस्ततः ?

**धावकः**- तदा क्रोधाविष्टः सिंहः पुरुषाधिक्यं बारम्बारमुच्छलनं कृत्वा महाराजोपरि आक्रमणमकरोत् ?

**महापौरः**- ततः किं कृतं महाराजेन ?

**धावकः**-तदावसरं पश्यन् महाराजो दक्षिणवामव्यालीढकौशलैः तदाक्रमणं मोघीकृतवान्।

**महापौरः**- धन्यं महाराजस्य चातुर्यं लाघवं च।

**धावकः**- निष्फलापाक्रमणेन रोषविह्वलो मृगेन्द्रः प्राणानविगणय्य यदा महाराजस्य शिरस्यापतत्! तदा वृक्षारूढाः जना हाहाकारं कृतवन्तः।

---

**• ॥ महापौर ॥**

महापौर पद कोटपाल (कोतवाल) के अर्थ में प्रयुक्त हुआ है। यद्यपि यह अधिकारी पात्र राजा के साथ कहीं भी आ जा सकता है तथा सब प्रकार के सहयोग भी कर सकता है, तथापि इसका मुख्य कर्तव्य नगर की व्यवस्था (देखभाल) करना है। नगर की समस्याओं का समाधान इसी के अधिकारों में होता है। छोटा मोटा दण्ड देने का भी अधिकार इसे मिला रहता है। अतएव सभी लोग इससे भयभीत रहते हैं। तभी तो इसके द्वारा आँखे बिगाड़ने पर पानी बेचनें वाले ने पण्डित जी के लिये तुरन्त ही निःशुल्क (मुफ्त) ही पानी पिला दिया।

**धावक**- तब सिंह की ओर बढ़ते हुये महाराज का क्षत्रियतेज उबल (भड़क) उठा।

**महापौर**- तब क्या हुआ ?

**धावक**- तब क्रोध में भरकर पुरुष से भी अधिक बारम्बार उच्छल कर सिंह ने महाराज पर आक्रमण किया (हाथ उठाकर खड़े हुये पुरुष की मध्यमा अँगुली तक की ऊँचाई को पुरुष कहते हैं)।

**महापौर**- तब महाराज ने क्या किया ?

**धावक**- तब अवसर देखते हुये महाराज ने दाहिने बायें दावपेचों की चतुरता से (इधर-उधर कूद कर) उसके आक्रमण को विफल कर दिया।

**महापौर**- महाराज की चतुरता और क्षिप्रता (फुर्ती) धन्य है।

**धावक**- आक्रमण विफल हो जाने से क्रुद्ध सिंह प्राणों की परवाह न कर जब महाराज के शिर पर टूट पड़ा तब पेड़ों पर चढ़े हुये लोग हाय-हाय करने लगे।

**महापौरः**- तस्ततः ?

**धावकः**- तदा सहसैव भूमौ पतित्वा महाराजेन तदप्याक्रमणं विफलं कृतम्।

**महापौरः**- धन्या प्रत्युत्पन्नमतिः ! अग्रे श्रावय धावक!

**धावकः**- ततः कोपाटोपितो महाराजो दन्तान् पिष्ट्वा रे रे सिंहाधम! चिरकालेन त्वया सह क्रीडामि। तिष्ठ तिष्ठाधुना, एष मे करवालः ते प्राणान् पिवतीति कथयन् रौद्ररूपेण सिंहस्योपर्युपाद्रवत्।

**महापौरः**- अद्भुतमिदं साहसम्।

**धावकः**- सिंहोऽपि लाङ्गूलं लोलंयन् नखपञ्जरमुद्यम्य मुखगह्वरं च प्रसार्य यावद् महाराजं कवलीकर्तुमास्कन्दति तावद्धस्तकौशलं दर्शयन् महाराजो भीषणकरवाल-प्रहारेण तन्मुण्डं भूमावपातयत्।

**महापौरः**- जयतु-जयतु महाराजः, महापराक्रमी महाराजः।

**धावकः**- नूनमायुधेषु दीक्षागुरुर्मे स्वामी।

---

**महापौर**- फिर क्या हुआ ?

**धावक**- तब महाराज तुरन्त ही भूमि पर झुक (लेट) गये, जिससे सिंह का वह आक्रमण भी व्यर्थ हो गया।

**महापौर**- इस तात्कालिक बुद्धि को धन्य है। धावक ! आगे सुनाओ।

**धावक**- तब क्रोध में भर कर दाँतों को पीसते हुये महाराज ने कहा अरे नीच सिंह! बहुत देर से तेरे साथ खेल कर रहा हूँ, अब तू ठहर-ठहर यह मेरी तलवार तेरे प्राणों को पीने (हरने) वाली है, (ऐसा कहकर) महाराज विकराल रूप से सिंह के ऊपर टूट पड़े।

**महापौर**- यह बड़ा अद्भुत साहस (हौसला) किया।

**धावक**- सिंह भी पूँछ लपलपाता हुआ, नाखूनी पञ्जों को उठाकर और कन्दरा के सदृश मुख फैलाकर जब तक महाराज को खाने के लिए झपटा तब तक हाथ की सफाई (हस्तलाघव) दिखाते हुये महाराज ने भीषण तलवार के प्रहार से उसके मुण्ड को काटकर पृथ्वी पर गिरा दिया।

**महापौर**- महाराज की जय-जयकार हो। वास्तव में अत्यन्त पराक्रमशाली हैं महाराज।

**धावक**-वास्तव में हथियार चलाने की कला में तो हमारे स्वामी (राजा जी) दीक्षागुरु (आचार्य उस्ताद) हैं।

**महापौरः**- अतएव अङ्गदेशमाक्रमितुं नोत्सहते कश्चित्।

**धावकः**- अपरं च दशरथेन सह मित्रभावमासाद्य शक्तित्रयं वर्धते महाराजस्य।

**नेपथ्ये**- हता वयं हताः।

**धावकः**- (श्रुत्वा) किमेतत्?

**महापौरः**- चीत्कार इव श्रूयते।

**पुनर्नेपथ्ये**- हा! हा! अनयानावृष्ट्या वयं मारिताः।

**धावकः**- अहो! जलाऽभावग्रस्ताः क्षेत्रपालाः हा! हा! कुर्वन्तो महाराजस्य शरणं प्रपन्नाः तस्मादकालक्षेपार्हमिदं तथ्यं महाराजाय निवेदयामि (किञ्चिच्चलित्वा) अथवा विश्रामसमयोऽयं महाराजस्य, निवेदनं नोचितम् (जयकारं श्रुत्वा) अहो! महाराजः स्वयमेवेत आगच्छति, तस्मात् सिद्धं नः समीहितम्।

(ततः सपरिवारो राजा प्रविशति)

**उभौ**- जयतु-जयतु देव!

---

**महापौर**- इसीलिये इस अङ्गदेश पर आक्रमण करने का कोई उत्साह नहीं करता।

**धावक**- दूसरी बात यह भी है कि राजा दशरथ के साथ मित्रता होने के कारण महाराज की तीनों शक्तियाँ (प्रभुशक्ति, मन्त्रिशक्ति, उत्साहशक्ति) बढ़ रही है।

**नेपथ्य में**- मारे गये हम मारे गये।

**धावक**- (सुनकर) यह क्या हो रहा है?

**महापौर**- चीत्कार जैसा, सुनाई दे रहा है।

**नेपथ्य में पुनः**- हाय-हाय, इस सूखा (अवर्षण) ने हमको मार डाला।

**धावक**- अरे! सूखा से प्रपीड़ित ये बेचारे कृषक, हाहाकार करते हुये राजाजी की शरण में आये हैं। इसलिये विलम्ब न सहन करने योग्य इस अपरिहार्य कार्य को महाराज के लिये सूचित करूँ (कुछ चलकर) अथवा महाराज का यह विश्राम का समय 'है, कुछ 'भी निवेदन करना अनुचित होगा। (जय-जयकार सुनकर) अहह! महाराज तो स्वयं ही इधर आ रहे हैं, अतः हमारा काम बन गया।

(तत्पश्चात् परिवार के सहित राजा का प्रवेश होता है)

**दोनों**- जय-जय हो महाराज की।

राजा- वज्रबाहो ! ननु कुशलं पौराणाम् ? इति सिंहासने उपविशति।

महापौरः- सर्वं कुशलम् किन्तु एकं निवेदनीयमस्ति।

राजा- छन्दतो निवेद्यताम्।

महापौरः- अद्य खलु नगरमवेक्षमाणोऽयं केनचित्तीर्थयात्रिणा विप्रेण उक्तः।

राजा- किमुक्तं विप्रवर्येण ?

महापौरः- येयमनावृष्टिः सा रुद्राभिकेषेण परिहर्त्तुं शक्यते इति मया बहुशः प्रार्थितोऽपि कृततीर्थाटननिश्चयः स नात्र व्यरमत्।

राजा- ब्राह्मणाः मिथ्या न वदन्तीति कार्यं पुरोहितवर्येण शीघ्रम् निष्पाद्यताम्।

महापौरः- सत्यमेतत् शुभकार्ये कालात्ययो नोचितः।

राजा- धावक! पुरोहितपादं श्री मुद्गलाचार्यमावह।

धावकः- एष धावामि (इति निष्क्रान्तः)।

---

राजा- वज्रबाहो ! नागरिक लोग कुशल से तो हैं ? (यह कहता हुआ सिंहासन पर बैठ जाता है)।

महापौर- सब कुशल है महाराज ! किन्तु एक निवेदन है।

राजा- स्वछन्द रूप से कहिये।

महापौर- आज नगर का निरीक्षण करते हुये मुझसे एक तीर्थयात्री ब्राह्मण ने कहा।

राजा- क्या कहा विप्रवर ने ?

महापौर- जो यह सूखा पड़ रहा है वह रुद्राभिषेक के द्वारा दूर किया जा सकता है। मेरे द्वारा बहुत प्रार्थना करने पर भी तीर्थयात्रा के लिये निकला (तीर्थयात्रार्थकृत संकल्प) वह यात्री यहाँ रुक न सका।

राजा- ब्राह्मण झूठ नहीं बोलते हैं, अतः इस कार्य को पुरोहित द्वारा शीघ्र ही निष्पन्न (आरम्भ) कराइये।

महापौर- आपने ठीक ही कहा महाराज! क्योंकि शुभ कार्य में विलम्ब करना ठीक नहीं है।

राजा- धावक ! श्री मुद्गलाचार्य पुरोहितजी को बुलाओ।

धावक- लीजिये यह मैं दौड़ कर जाता हूँ (निकल गया)।

**पुनर्नेपथ्ये-** त्रायतां-त्रायतां भो! अनयानावृष्ट्या शोषिता वयम्।

**राजा-** (आकर्ण्य) कुतोऽयमार्तनादः ?

**महापौरः-** अकालग्रस्ताः कृषकाः भवच्छरणमिच्छन्ति।

**राजा-** चन्द्रचूड़! नूनं सर्वभक्षकोऽयं दुर्भिक्षकालः तस्मात् कोशागारात् धनं साधनं चैतेभ्यो वितीर्यताम्।

**मन्त्री-** यथाज्ञापयति भवान्! (इति निष्क्रान्तः)।

**महापौरः-** नूनं पानीयं विना सर्वे शुष्यन्ति देव।

**राजा-** वज्रबाहो ! यथायथेयमनावृष्टिः प्रचण्डायते, तथा-तथा जनाः क्षीयन्ते, विविधैरुपायैरपि नावैमि शान्तिम्, मम प्रजा यद्यसुरक्षामनुभवति तदा वृथा मे राजपदम्, सर्वतो भावेन नराणां पालनमेव नृपस्य नृपत्वम्। अतएव मम शरीरे-

यावत्प्राणास्तिष्ठन्ति तावत्पालयामि जनान्-

---

**पुनः नेपथ्य में-** अरे! बचाओ बचाओ। इस सूखा ने हमको सुखा डाला।

**राजा (सुनकर)-** यह हा-हाकार किधर हो रहा है?

**महापौर-** सूखा (दुष्काल) से पीड़ित कृषक जन आप की शरण में आये हैं।

**राजा-** चन्द्रचूड़ ! निश्चित ही यह दुर्भिक्ष सभी का भक्षण कर रहा है, इसलिये तुम कोषागार जाकर इन कृषकों के लिये धन और साधन (सामग्री) भी बाँट दो।

**मन्त्री-** आपकी जैसी आज्ञा ! (निकल गया)।

**महापौर-** यह सर्वथा सच है कि पानी के बिना सब झुलस (सुलग) रहे हैं।

**राजा-** वज्रबाहु ! यह अनावृष्टि जैसे-जैसे प्रचण्ड रूप धारण करती जाती है, वैसे ही वैसे लोगों का क्षय होता जा रहा है। नाना उपाय करने पर भी मुझे शान्ति नहीं मिल रही है। मेरी प्रजा यदि असुरक्षा का अनुभव करती है, तो मेरे लिये राजा पद का प्रयोग करना व्यर्थ है। सब प्रकार से लोगों का पालन करने से ही नृप का नृपत्व होता है, अतः मेरे शरीर में जब तक प्राण हैं- तब तक लोगों का पालन करूँगा।

मनसा कर्मणा वाचा, पालयिष्याम्यहं प्रजाम्।
एतस्मिञ्छुभकर्तव्ये, दारैः प्राणैश्च तत्परः॥18॥

**महापौर-** भवादृशैर्दयादानवीरैः किमसाध्यम्? भवत्प्रयासैः मघवा जलं वर्षिष्यति दुर्भिक्षश्च नङ्क्ष्यति।

(ततः प्रविशति मुद्गलः)

**राजा-**(उत्थाय) प्रणम्यते भगवन्?

**पुरोहितः-** आयुष्मानेधि प्रजावत्सल! (इत्यासने उपविशति)

**राजा-** (उपविश्य) भगवन्! प्राणहारिणीयमनावृष्टि स्थिरकालाद् वर्तते। तेन सर्वा प्रजा भयाक्रान्ताः जायते।

---

**अन्वयः-** अहम् मनसा कर्मणा वाचा प्रजाम् पालयिष्यामि, एतस्मिन् शुभकर्तव्ये दारैः प्राणैः च तत्परः अस्मीति शेषः।

**व्याख्या-** अहम्= रोमपादः, मनसा=चित्तेन, चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः। कर्मणा= क्रियाद्वारा, वाचा= वाणीद्वारा, ब्राह्मी तु भारतीभाषा गीर्वाणवाणी सरस्वतीत्यमरः। प्रजाम्=जनताम्, प्रजास्यात्सन्ततौ जने इत्यमरः। पालयिष्यामि= रक्षिष्यामि, एतस्मिन्=प्रजापालनरूपे, शुभकर्तव्ये=पुण्यकार्ये, दारैः=स्त्रीभिः, प्राणैः=असुभिः, च तत्परः=उद्यतोऽस्मीति शेषः। प्रजापालनाय भार्यां, प्राणानपि त्यक्तुं तत्पर इत्यर्थः।

---

मैं मन, वचन और कर्म से प्रजा का पालन करूँगा, इस शुभकार्य के लिये मैं पत्नी और प्राणों के सहित सदा तैयार हूँ, अर्थात् प्रजा की रक्षा के लिये मैं पत्नी और प्राणों को भी छोड़ सकता हूँ।

**महापौर-** आप जैसे दया और दानवीरों के लिये क्या असाध्य है? आप के प्रयासों से इन्द्र पानी बरसायेंगे और दुर्भिक्ष अवश्य विनष्ट हो जायेगा।

(तत्पश्चात् मुद्गल पुरोहित का प्रवेश होता है)

**राजा-** (उठकर) भगवन्! आपको प्रणाम है।

**पुरोहित-** प्रजावत्सल राजन्! चिरञ्जीव रहिये (आसन पर बैठता है)।

**राजा-**(बैठकर) भगवन्! प्राण लेने वाली यह अनावृष्टि चिरकाल से (राज्य में) व्याप्त है, जिससे सारे लोग भयभीत हैं।

**पुरोहितः-** पश्यामि राजन् ! तृषितां धरित्रीम्।

**राजा-** तद्वारणाय रुद्राभिषेचनमारभ्यतां भगवन्!

**महापौरः-** अस्त्येव महादेव आशुतोषः।

**पुरोहितः-** श्री शङ्करः शतशस्तनोति।

**राजा-** तस्मात्पूजनसामग्रीमादाय विप्रैः सह यज्ञशालायामिदमनुष्ठेयम्।

**पुरोहितः-** राजनित्थं भविष्यति (इति निष्क्रान्तः)।

**मन्त्री-** (प्रविश्य) जयतु-जयतु महाराज!

**राजा-** चन्द्रचूड़! सम्पादितं कृषककार्यम् ?

**मन्त्री-** वाढं श्रीमन्! दशकोटिमिताः मुद्रा प्रतिदिशं वण्टिताः। अनेन धनराशिना प्रसन्नाः जानपदाः सारल्येन स्वकार्यं साधयिष्यन्ति। कृषिकर्षणार्थं क्षेत्रसिञ्चनार्थं च यन्त्राणि तद्विशेषज्ञा अपि नियोजिताः। भूशक्तिवर्धनाय प्रचुरमुर्वरकं वण्टितम्। आवश्यकतापूर्त्तये सर्वे उपायाः परिकल्पिताः। प्रत्येम्यहं यदेभिरुपायैरेष दुष्काल आश्वेव नश्यति, तावच्च मेघा अपि वर्षिष्यन्ति।

---

**पुरोहित-** राजन् ! मैं देख रहा हूँ कि धरती पानी की प्यासी है।

**राजा-** भगवन्! उसको दूर करने के लिये रुद्राभिषेक करने की कृपा करें।

**महापौर-** देवों में महान् होने से वे (आशुतोष) शीघ्र ही प्रसन्न हो जाते हैं।

**पुरोहित-** श्री शङ्कर जी सैकड़ों कल्याण करते हैं।

**राजा-** इसलिये पूजन सामग्री लेकर यह अनुष्ठान यज्ञशाला में ब्राह्मणों के साथ कीजियेगा।

**पुरोहित-** हे राजन्! इसी प्रकार से किया जायेगा (निकल गया)।

**मन्त्री-** (प्रवेश करके) जय हो महाराज की।

**राजा-** चन्द्रचूड़ क्या कृषकों की समस्या का समाधान कर दिया ?

**मन्त्री-** हाँ जी श्रीमान् ! दश करोड़ रूपये चारों दिशाओं में बाँट दिये हैं। इस धनराशि से प्रसन्न होकर जनपद के लोग सरलता से अपना-अपना काम चला लेंगे। खेतों को जोतने और सींचने के लिये यन्त्रों (मशीनों) और इञ्जीनियरों की भी नियुक्ति कर दी है। भूमि को उपजाऊ बनाने के लिये प्रचुर मात्रा में खाद भी वितरित कर दी है। आवश्यकतापूर्ति के लिये सभी उपाय जुटा दिये हैं। मैं विश्वास करता हूँ कि इन साधनों से यह दुर्भिक्ष शीघ्र ही दूर हो जायेगा। (मैं समझता हूँ कि) तब तक वर्षा हो जायेगी।

राजा- सत्यमेतत् समये वृष्टिराशास्यते।

महा- ध्रुवं वर्षिष्यन्ति देवाः, देवाराधनं निष्फलं न याति।

नेपथ्ये- चटचटध्वनिः।

राजा- (आकर्ण्य) कुतोऽयं प्रचण्डघोषः ?

मन्त्री- भवनमिव पतति महाराज!

महा- कोऽयं दुर्विपाकः ?

राजा- चन्द्रचूड़ ! महाघोषस्य कारणं द्रुतं ज्ञातव्यम्।

धावकः- (सहसा प्रविश्य) जयतु-जयतु स्वामी !

राजा- अरे ! कोऽयं चटचटध्वनिः ?

धावकः- महाराज! यदा गुरुजनैः शिवार्चनमारब्धम् .............।

राजा- तदा किमभूदिति शीघ्रं कथ्यताम्।

धावकः- तदा यज्ञशालायाः पार्श्वस्थो न्यग्रोधपादपोऽकस्मान्मूलान्निपतितः।

राजा- अत्याहितं भोः!

---

राजा- यह बात सर्वथा सत्य है समय पर वर्षा की आशा की जाती है।

महापौर- निश्चित ही देवता वर्षा करेंगे, क्योंकि देवपूजा निष्फल नहीं जाती।

नेपथ्य में- चटचट ध्वनि होती है।

राजा (सुनकर)- यह प्रचण्डशब्द कहाँ से हो रहा है ?

मन्त्री- महाराज! भवन जैसा गिर रहा है।

महा- अरे ! यह कैसा दुर्भाग्य है।

राजा- चन्द्रचूड़! इस प्रचण्डशब्द का कारण शीघ्र जानना चाहिये।

धावक- (सहसा प्रवेश कर) जय हो महाराज की।

राजा- अरे! यह चटचट शब्द कैसा हुआ है ?

धावक- महाराज ! जब गुरुजनों ने रुद्राभिषेक आरम्भ किया...........।

राजा- शीघ्र बोल, तब क्या हुआ ?

धावक- उसी समय यज्ञशाला के पास खड़ा हुआ विशाल वट का पेड़ जड़ से उखड़ पड़ा।

राजा- अहो ! बड़ा अनर्थ (नुकसान) हुआ होगा ?

**धावकः**- न किमप्यत्याहितं देव! किन्तु तच्छाखाप्रहारेण भव्यमतिथिभवनं सर्वथा विध्वस्तम्।

**राजा**- किं-किं सर्वे गुरुजनाः सकुशलं यजन्ति?

**धावकः**- वाढम्, सर्वे गुरवस्तल्लीना यजन्ति।

**राजा**- सर्वारम्भाः विघ्नपूर्वा भवन्ति किन्तु तान्न गणयन्ति धीराः--

**सर्वदा शुभकार्येषु, नाना विघ्नाः भवन्ति हि।**
**तानपि विघ्नान्निघ्नन्ति, ये नरास्ते नरा नराः॥ 19॥**

धावक! त्वमितो गत्वा, पुरोधसं निवेदय यत् निरातङ्केनैव भवता शिवार्चनं विधातव्यम्।

**धावकः**- यथादिशति भर्त्ता! (इति निष्क्रान्तः)

---

**अन्वयः**- शुभकार्येषु सर्वदा नाना विघ्नाः भवन्ति हि, ये नराः तान् अपि विघ्नान् निघ्नन्ति ते नराः नराः सन्तीति शेषः।

**व्याख्या**- शुभकार्येषु=माङ्गलिककर्मसु, सर्वदा=सदा, नाना=बहवः, विघ्नाः=प्रत्यूहाः, भवन्ति=जायन्ते। हि=किन्तु, ये नराः=मानवाः, तान् अपि=कार्यघातकानपि, विघ्नान्=उपद्रवान्, निघ्नन्ति=मर्दयन्ति, ते=विघ्ननिघ्नकाः, नराः=मानवाः, नराः=मानवाः भवन्ति। अत्र अन्तिमं नरपदं शूरताधीरतादिगुणवैशिष्ट्यं व्यनक्तीत्यर्थान्तरसंक्रमितवाच्यो ध्वनिः।

---

**धावक**- कोई बड़ा अनर्थ तो नहीं हुआ किन्तु उसकी शाखाओं की टक्कर से अतिथि भवन विध्वस्त (चकनाचूर) हो गया।

**राजा**- क्या सभी गुरुजन सकुशल पूजन कर रहे हैं?

**धावक**- हाँ जी! सभी गुरुजन ध्यानमग्न होकर पूजन कर रहे हैं।

**राजा**- सभी कार्यों के आरम्भ में विघ्न पड़ते हैं। किन्तु धीर पुरुष उनकी गणना (विघ्नों की परवाह) नहीं करते-

शुभकार्यों में सदैव नाना विघ्न पड़ा ही करते हैं, किन्तु जो आदमी उन विघ्नों का भी मर्दन (मटियामेट) कर डालते हैं, वे ही आदमी वास्तव में आदमी (मर्द) होते हैं। धावक! तुम इधर से जाकर पुरोहित जी से कहना कि निःशङ्क होकर आप शिवपूजन करें।

**धावक**- महाराज की जैसी आज्ञा (निकल गया)।

मन्त्री- शाखापलाशपृथुलो दृढ़मूलः स वटवृक्षः कथमुच्छिन्नः ?

महापौरः- झञ्झादयोऽपि नाधुना कथं स निपतितः ?

राजा- नूनमत्र काललीलैव कारणम्—

**अवाप्य कालं निपतन्ति भूमाविन्द्रादिदेवा अपि लोकपालाः।**
**चराचराः कालविधानबद्धाः, भवन्ति तिष्ठन्ति लयं ब्रजन्ति ॥ 20॥**

तस्मान्नात्र चिन्तनीयम्, अस्य पादपस्य आयुष्यविषये मम पूर्वजा अपि नाविदन्। इमं पश्यतो मे पञ्चशतोत्तरं पञ्चसहस्रं वर्षाणि व्यतीतानि। नाद्यावधि अस्य जटातरवोऽगण्यन्त।

---

अन्वयः- कालम् अवाप्य लोकपालाः इन्द्रादि देवाः अपि भूमौ निपतन्ति। कालविधानबद्धाः चराचराः भवन्ति तिष्ठन्ति लयम् (च) ब्रजन्ति।

व्याख्या- कालम्=समयं मृत्युं वा अवाप्य=आसाद्य, लोकपालाः=स्वर्गादिरक्षकाः, इन्द्रादि देवाः=इन्द्रः=शक्रः=आदिर्येषां ते इन्द्रादयः, ते च ते देवाः=अमरः इतिबहुव्रीहिपूर्वकः कर्मधारयः, अपि=केऽन्ये वराकाः, भूमौ=भूपृष्ठे, निपतन्ति=च्यवन्ते म्रियन्त इत्यर्थः, क्षीणे पुण्ये मर्त्यलोकं विशन्तीतिनियमात्। कालविधानबद्धाः=कालस्य= अदृष्टापरपर्यायस्य, विधाने=नियमे, बद्धाः=संस्कारवशीभूता इत्यर्थः। चराचराः= स्थावरजङ्गमाः, भवन्ति= उत्पद्यन्ते, तिष्ठन्ति=वर्तन्ते, लयम्=संहारम् मृत्युञ्च ब्रजन्ति=प्राप्नुवन्ति। जातस्य हि ध्रुवार्मृत्युरिति सिद्धान्तः। अर्थान्तरन्यासः।

---

मन्त्री- शाखाओं और पत्तों से विस्तृत तथा पुष्टजड़ों वाला वह बरगद का पेड़ कैसे उखड़ गया ?

महापौर- इस समय आँधी आदि भी कुछ नहीं थी, फिर कैसे गिर गया ?

राजा-कालरूप भगवान् की लीला (खेल) ही इसके गिराने में कारण है—

समय पूरा होने पर इन्द्रादि लोकपालों (देवताओं) का भी स्वर्ग से भूमि पर पतन हो जाता है, क्योंकि काल के नियम में बँधे हुये ये सारे जड़ चेतन संसार में जन्म लेते, निवास करते, और अन्त में नष्ट हो जाते हैं। इसलिये इस वृक्ष के गिरने में चिन्ता नहीं करनी चाहिये। इस पेड़ की अवस्था (प्राचीनता) के विषय में हमारे पूर्वज भी नहीं जानते थे। इसको देखते हुये मेरी साढ़े पाँच हजार (5500) वर्ष की आयु हो गई है। आज तक इसकी जटाओं के बने वृक्षों को कोई नहीं गिन सका।

नेपथ्य में-हे रुद्र! तुम्हारे क्रोध को नमस्कार है। तथा तुम्हारे बाण और तुम्हारी भुजाओं को भी नमस्कार है।

**नेपथ्ये-**

**"ॐ नमस्तेरुद्र मन्यव उतोत इषवे नमः बाहुभ्यामुतते नमः"**

**राजा** (आकर्ण्य)-अहो! गुञ्जितं गगनमण्डलं वेदघोषेन, तन्मन्ये प्रसन्नाः गुरवोऽर्चन्ति।

**मन्त्री-** महाराज! अनेन धर्मकर्मणा सर्वारिष्टशान्तिर्भविष्यति।

**महा.-** देवपूजा असाध्यमपि साधयति।

**(नेपथ्ये पुनर्मन्त्रघोषः)**

**राजा-** वेदवाक्यं मिथ्या न भवति।

**मन्त्री-** वेदवाक्यं ब्रह्मवाक्यं देव!

**(नेपथ्ये हाहाकारः)**

**राजा-** कुतोऽयमार्तनादः ?

---

**अन्वयः-** हे रुद्र ! ते मन्यवे नमः! उत ते इषवे नमः। उत ते बाहुभ्याम् नमः (अस्तु)

**व्याख्या—** हे रुद्र=रोदनं रु दुखं द्रावयति रुद्रः! यद्वा रुत्=ज्ञानं राति=ददाति रुद्रः। यद्वा दुष्टान् रोदयति रुद्रः तत्सम्बुद्धौ। ते=तव, मन्यवे=कोपाय, नमः= नमस्कारोऽस्तु। उत=तथा छन्दसि बाहुलकादुत्वमोत्वं च ते इषवे=वाणाय पिनाकाय चेति लभ्यते। नमः उतते बाहुभ्याम्=भुजाभ्याम् नमोऽस्तु।

---

**राजा** (सुनकर) अहह! वेदघोष से गगनमण्डल गूँजने लगा है, इसलिये मैं समझता हूँ कि गुरुजन बड़े उत्साह से अनुष्ठान कर रहे हैं।

**मन्त्री-** महाराज! इस धार्मिककार्य से सारे अनिष्ठ शान्त हो जायेंगे।

**महा.-** देवपूजा असाध्य कार्य को भी सिद्ध कर देती है। अर्थात् असम्भव को भी सम्भव कर देती है।

(नेपथ्य में पुनः मन्त्रोच्चारण की ध्वनि)

**राजा-** वेदवाक्य (मन्त्र) मिथ्या नहीं होता।

**मन्त्री-** महाराज! वेदवाक्य (मन्त्र) तो साक्षात् भगवान् का वचन होता है।

(नेपथ्य में फिर महान् हाहाकार होता है)।

**राजा-** यह आर्तनाद कहाँ से हो रहा है?

मन्त्री- अस्ति कश्चिद् विशेषः।

पुनर्नेपथ्ये- अये ! क्षुन्पिपासाभ्यां मृता वयम्।

राजा- अतः परं श्रोतुं न शक्यते।

धावकः (सहसा प्रविश्य) जयतु-जयतु स्वामी।

राजा- किं दृष्टाः गुरुजनाः ?

धावकः- दृष्टाः महाराज! सर्वे सहर्षा यजन्ति, किन्तु एकं निवेदनीयमस्ति।

राजा- किं तत् ?

धावकः- अनिवार्यकार्यं वदन्तः केचन कृषकाः भवन्तं द्रष्टुं द्वारदेशमाश्रयन्ति।

राजा- शीघ्रं प्रवेशय तान्।

धावकः- यथाज्ञापयति देव! (इति निष्क्रान्तः)।

राजा- किमर्थमागमनं कृषकाणां चन्द्रचूड़!

---

मन्त्री- इसमें कुछ न कुछ विशेषता है।

पुनः नेपथ्य में- अरे ! भूख प्यास से हम लोग मर रहे हैं।

राजा- इससे अधिक नहीं सुना जा सकता।

धावक- (सहसा प्रवेश कर) जय हो महाराज की।

राजा- क्या गुरुजनों के दर्शन किये ?

धावक- हाँ जी! महाराज! सभी गुरुजन आनन्दपूर्वक पूजन कर रहे हैं, किन्तु एक निवेदन है।

राजा- वह क्या ?

धावक- कुछ किसान लोग आवश्यक कार्य का निवेदन करने के लिये आपके दर्शन हेतु द्वार पर खड़े हैं।

राजा- उनको शीघ्र ले आओ।

धावक- आपकी जैसी आज्ञा (इस प्रकार निकल गया)।

राजा- चन्द्रचूड़! इन किसानों का आगमन न जाने किस प्रयोजन से हुआ होगा ?

**मन्त्री**- सहायतामभिनन्दितुं तत्प्रयोजनं स्यात्।

(ततः प्रविशति कृषकैः सह धावकः)

**कृषकाः**- (करौ बद्ध्वा) विजयतां प्रजानाथ!

**राजा**- अये ! क्षेत्रपाला! कुशलिनो यूयं सप्रजाः ?

**प्रथमः**- भवतः छत्रछायायां कुशलिनो वयम्, किन्तु अनयानावृष्ट्या प्रपीड़िताः भवच्छरणमाश्रिताः स्मः। सप्तवर्षाणि व्यतीतानि, मेघाः न वर्षन्ति। अजस्रवाहिन्यो नद्योऽपि काकपेया जायन्ते। वापीकूपतड़ागादिषु धूलिमात्रमवशिष्यते। भूदरे पानीयं नास्ति, तस्माज्जलकलोपाया अपि न फलन्ति। तपनतापतप्तास्तरवो नीरसं शाखापञ्जरं वहन्ति। जनाधीश ! संतप्तवातास्तीव्रवेगेन सततं धावन्ति, येनास्माकं शोणितमपि शुष्यति, का कथा सस्यानाम् ? क्षुत्तृषार्त्ताः पशवोऽपि विचेष्टमाना म्रियन्ते।

**अन्ये कृषकाः**- प्रजापालक ! सर्वमेतत्सत्यम् घोरविनाशवेलेयम्। अतः परं जीवनं सम्भवं न पश्यामः।

---

**मन्त्री**- महाराज! आपके द्वारा दी गई सहायता का अभिनन्दन करना ही इनके आगन का प्रयोजन होगा।

(तत्पश्चात् किसानों के साथ धावक का प्रवेश होता है)

**कृषक**- (हाथ जोड़कर) प्रजानाथ की जय हो।

**राजा**- अये! क्षेत्रपालों। बालबच्चों सहित कुशल से तो हो ?

**प्रथम कृषक**- राजाजी ! आपकी छत्र छाया में हम कुशल से हैं, किन्तु इस सूखा से हताहत होकर हम लोग आपकी शरण में आये हैं। सात वर्षों से बादल नहीं बरस रहे हैं। सदा बहने वाली नदियाँ भी कौआ के पीने योग्य स्वल्प जलवाली हो गई हैं। वावली, कुआँ, तालाबों में पानी के स्थान पर धूलिमात्र बची हुई है। भूमि के भीतर पानी नहीं है, जिससे जलकूप (ट्युबिल) बेकार हो गये हैं। सूर्य के प्रचण्ड घाम से झुलसे हुये पेड़ों पर केवल सूखी शाखाओं की ठठरियाँ डोल रही हैं। मेरे स्वामी ! सन्तप्त (गर्म-गर्म) लू की हवायें बड़े वेग से दौड़ती हैं, जिससे हम लोगों का भी खून सूख रहा है फिर फसल सूखने की तो बात ही क्या ? भूख प्यास से व्याकुल होकर पशु छटपटाकर (तड़प-तड़प कर) प्राण छोड़ रहे हैं।

**अन्य किसान**- प्रजा का पालन करने वाले महाराज! यह सारा कथन सत्य है। विनाश करने वाला यह भयङ्कर काल (दुष्काल) आ गया है। इसके आगे तो हम लोगों का जिन्दा रहना असम्भव सा लग रहा है।

**राजा** (श्रुत्वा) चन्द्रचूड़ ! अत्यन्तं पीड़िताः सन्ति जनाः। कठिनाश्चैते दिवसाः। नाहं दुःखं द्रष्टुं पारयामि। अतोऽन्नागारात् पर्याप्तमन्नं वितीर्यतामेभ्यः, सचलकूपानां व्यवस्थापि सत्वरं विधीयताम्। यतोहि-

**प्रजाभ्यो यमुपादत्ते, षष्ठांशवसुधाधिपः।**
**प्राप्तकाले प्रजामध्ये, तमर्थं वितरेद् द्रुतम्॥ 21॥**

**मन्त्री**- यदाज्ञापयति भवान् (इति कृषकै सह निष्क्रान्तः)।

**राजा**—(महापौरं वीक्ष्य) वज्रबाहो ! त्वं पौरजनानवेक्षस्व। कुत्राप्यभावो मा-भूत्। पातालसरं वयमपि विदितवेदितव्या भवेम।

---

**अन्वयः**- वसुधाधिपः प्रजाभ्यः यं षष्ठांशं उपादत्ते, प्राप्तकाले तम् अर्थम् प्रजामध्ये द्रुतं वितरेत्।

**व्याख्या**—वसुधाधिपः=भूपः, प्रजाभ्यः=जनेभ्यः, प्रजायत इति प्रोपसर्गात् जनीधातोः उपसर्गे च संज्ञायामिति सूत्रेण डप्रत्ययः, यम्=करम्, षष्ठांशम्= षष्टभागम्, उपादत्ते गृह्णाति, प्राप्तकाले=दुर्भिक्षावसरे, तमर्थम्=तद्धनम्, प्रजामध्ये=जनानां मध्ये, द्रुतम्=शीघ्रम्, वितरेत्=विभजेदिति न्यायः।

---

**राजा** (सुनकर) चन्द्रचूड़! ये लोग बहुत दुःखी हैं। ये दिन बहुत कठिनाई से बीत रहे हैं। इससे अधिक दुःख नहीं देख सकता हूँ। इसलिये अन्नागार (कोठार) से इनको पर्याप्त अन्न बाँट दो। साथ ही सचलकूपों की व्यवस्था भी कर दीजिये, क्योंकि—

राजा को चाहिये कि प्रजा से कर (टैक्स) के रूप में जो छठा भाग ले, अवसर पाकर (दुष्कालादि के समय) उसे प्रजा के मध्य तुरन्त ही बाँट दे।

**मन्त्री**- आपकी जैसी आज्ञा (इस प्रकार कृषकों के साथ निकल गया)।

**राजा**—(महापौर की ओर)- वज्रबाहु ! तुम जाकर नागरिकों की देखभाल करो। कहीं भी कोई अभाव (वस्तु की कमी) न रहे। पातालकूपों से और बड़ी-बड़ी नदियों से पानी निकालकर जल वाहकों द्वारा घर-घर में (पानी) भेजते रहो। समय-समय पर हमको भी अवगत कराते रहना।

## • सचलकूप

दो या चार पहियों वाली गाड़ी पर कुओं के समान बड़े-बड़े पात्रों (ड्रमों टंकियों) को रख लेते हैं। इनमें पानी भरकर सभी लोगों को बाँटते फिरते हैं। पानी को शीतल रखने के लिये मिट्टी के मटकों द्वारा भी यह कार्य सम्पन्न किया जाता है। आजकल ठण्डे पानी की मशीन उसी का परिष्कृत रूप है। अथवा हाथ से चलाये

**महापौरः**- एष गच्छामि (इति निष्क्रान्तः)।

**राजा**–(स्वगतम्) प्रियमित्रेण दशरथेन शान्ता कन्या दत्त्वा मेऽनपत्यता वारिता, सम्प्रति निर्जलता वारणाय भूतनाथः प्रसाद्यते, नृपसाध्या अन्येऽप्युपाया अनुष्ठीयन्ते, किन्तु नाहं लभे सफलताम्।

---

जाने वाला (हैण्डपम्प) नल भी सचलकूप हो सकता है। राजा ने सूखा पर काबू पाने के लिये स्थान-स्थान पर इन्हीं कूपों की व्यवस्था की होगी।

### षष्ठांश

प्राचीनकाल में नियम था कि राजा प्रत्येक भूमिधर (किसान) से खेत में उत्पन्न हुये अन्न का छठा हिस्सा ले लेता था। राजा का राजकार्य इसी से चलता था। समय पड़ने पर वह राजा इस अंश को मुक्त (माफ) भी कर देता था। किं बहुना विपत्ति पड़ने पर तो राजा इस अंश को वापस भी कर देता था। आजकल इसे लगान भूमिकर इत्यादि कहते हैं। कर लेने के लिये मनुस्मृति में लिखा है-

पञ्चाशद्भाग आदेयो, राज्ञा पशुहिरण्योः।
धान्यानामष्टमो भागः, षष्ठो द्वादश एव वा।।

### • पातालकूप

विशेषरूप से एक गहरा गड्ढा खोदते हैं। खोदते-खोदते इसे पाताल तक (अतिगहराई तक) पहुँचा देते हैं। पश्चात् उसमें लोहे का एक पोपला बाँस (बम्बा नली) डाल देते हैं। उसके ऊपर का भाग पृथ्वी से एक आध हाथ ऊपर उठा रहता है। फिर इस गड्ढे को चारों ओर मिट्टी से पाट देते हैं। ऐसा करने से पाताल का पानी खोखले लोहे बाँस द्वारा युक्तिपूर्वक सरलतया निकाला जा सकता है। इसी को पातालकूप कहते हैं। चौड़े कुआँ के अन्दर एक पतला किन्तु अतिगहरा कुआँ खोदा जाता है, जिससे पानी स्वयं ही निकलता रहता है। आजकल खेतों की सिंचाई करने के लिये की गई बोरिङ्ग इसी का परिमार्जित रूप है।

**महा**- यह मैं जा रहा हूँ (इस प्रकार निकल गया)।

**राजा**–(स्वयम्) मेरे प्रियमित्र दशरथ ने शान्ता कन्या को गोद में देकर मेरी निःसन्तानता दूर कर दी, इस समय सूखा दूर करने के लिये मैं भूतनाथ शङ्कर जी की पूजा कर रहा हूँ, फिर भी सफलता नहीं मिल रही है।

**टिप्पणी**- मञ्चपर किसी पात्र से छिपाकर किन्तु अन्य सबको सुनाकर जो बात कही जाती है उसे स्वगत कहते हैं। "अश्रव्यं खलु यद् वस्तु तदिह स्वगतं मतम्" न सुनाने योग्य पात्र की ओर वक्ता अनामिका झुकाकर हाथ खड़ा कर देता है।

**नेपथ्ये-** इत इतो भट्टिनी।

**धावकः-** मन्येऽहमागच्छति महादेवी।

**राजा-** मया प्रागेवोक्ता महादेवी धर्मासने मिलितुम्।

(ततः प्रविशति सशान्ता महादेवी दासी च।)

**राज्ञी-**(प्रणम्य उपविश्य च) महाराज! अतिविलम्बं विलोक्य अहं स्वयमेव आगता भवन्तं द्रष्टुम्।

**दासी-** तत्रापीयं राजकुमारी महाराजं बिना विलम्बं न सहते।

**राजा-** बालानां स्वभाव एवेदृशः, तत्रापि कन्यकानां पित्रोर्वलिष्ठं ममत्वं भवति।

**राज्ञी-** विलक्षेणमेतम्, यत् निःस्वार्थं स्निह्यति कन्या पित्रोः।

**राजा-** महादेवि! सत्यं वक्ति भवती, अतएव कन्यापत्येऽपि पित्रोरद्वितीया ममता भवति-

वस्तुतः कन्यकापत्यं, लभ्यते भाग्यशालिना।
यस्य दानेन लोकोऽयमक्षय्यं पुण्यमर्जति॥ 22॥

---

**नेपथ्य में-** महारानी ! इधर-इधर से आइये।

**धावक-** ऐसा लगता है कि महारानी आ रही हैं।

**राजा-** मैंने यहाँ (धर्मासन) पर मिलने के लिये उनसे पहले ही कह दिया था।
(तत्पश्चात् शान्ता के साथ महारानी और दासी का प्रवेश होता है)

**रानी-**(प्रणाम कर तथा बैठकर) आर्यपुत्र ! विलम्ब समझकर मैं आपको देखने के लिये स्वयं ही इधर आ गई।

**दासी-** उस पर भी यह राजकुमारी (शान्ता) तो महाराज के बिना एक क्षण भी नहीं ठहरती।

**राजा-** बच्चों का स्वभाव ही ऐसा (माता-पिता पर स्नेह करना) होता है, उस पर भी लड़कियों की माता-पिता में अखण्ड भक्ति (अधिक चाहत) होती है।

**रानी-** यह विलक्षण बात है कि कन्यायें माता-पिता से निःस्वार्थ स्नेह करती हैं।

**राजा-** महादेवि ! आप सच कह रही हैं, इसीलिये माता-पिता की भी लड़कियों में अद्वितीय ममता रहती है। वस्तुतः कन्या अपत्य बड़े भाग्य से मिलती है। जिसका (कन्या का) दान देकर अधम मनुष्य भी अनन्त पुण्य फल प्राप्त कर लेता है।

**राज्ञी-** तातप्रियेयं तातं विलोक्य क्षुत्पिपासामपि न स्मरति।

**शान्ता-** तात ! कदान्तरःपुरं चलिष्यति ?

**राजा-** क्षणं तिष्ठ वत्से! तत्र किं वर्तते ?

**शान्ता-** तातपाद ! वर्षन्ती मेघघटा चित्रिता मया, तदधः आर्द्रवल्कलः जटिलस्तपस्वी दर्शितः तत् च पश्यतु तात!

**राजा-** किमनेन चित्रेण ?

**राज्ञी-** विनोदमात्रमार्यपुत्र!

**(ततः साक्षतं पुष्पफलमादाय पुरोधा प्रविशति)**

---

**अन्वयः-** वस्तुतः कन्यकापत्यं भाग्यशालिना लभ्यते, यस्य दानेन अयं लोकः अक्षय्यं पुण्यं अर्जति।

**व्याख्या**—वस्तुतः=तत्त्वतः, कन्यकापत्यम्=कन्यासन्ततिः, भाग्यशालिना= पुण्यात्मना पुरुषेण, लभ्यते=प्राप्यते, अधमोऽपि लोकः= जनः, अक्षय्यम्=अनश्वरम्, पुण्यम्=सुकृतम्, अर्जति= सञ्चिनोति।

---

**रानी-** पिता की प्यारी बेटी पिताजी को देखकर भूख-प्यास भी भूल जाती है।

**शान्ता-** पिताजी ! अन्तःपुर (रनिवास) को कब चलोगे ?

**राजा-** बेटी ! थोड़ी देर ठहरो, वहाँ क्या है ?

**शान्ता-** पिताजी ! मैने वर्षती हुई मेघघटा का एक चित्र बनाया है। उसके नीचे भीगे वल्कल धारण किये हुये अर्थात् भीगते हुए एक जटाधारी तपस्वी (बाबा) को भी चित्रित किया है। वहाँ चलकर वह चित्र देखिये।

**राजा-** ऐसे चित्र से क्या प्रयोजन बनेगा ?

**रानी-** आर्यपुत्र! यह चित्ररचना केवल मनोरञ्जन के लिये है। अर्थात् केवल बच्चों का खेल समझिये।

**टिप्पणी-** वस्तुतः ऐसे चित्र से भाविनी घटना की निष्पत्ति (सूचना) मिलती है, अतः इसे मुखसन्धि का अङ्ग परिन्यास समझना चाहिये। उत्पन्न अर्थ की सिद्धि को परिन्यास कहते हैं इसका लक्षण दर्पण में इस प्रकार है- तन्निष्पत्तिः परिन्यासः।

**(तत्पश्चात् अक्षत पुष्प और फल लेकर पुरोहित का प्रवेश होता है)**

पुरोधा- महाराज! शिवार्चनं सम्पन्नम्, गृह्णातु प्रसादं देवी सहितः ?

उभौ-(उत्थाय अञ्जलिञ्च बद्धा) अनुगृह्यतां गुरुदेव!

पुरोधाः- प्रसादं ददन्मन्त्रं पठति।

अविरलहरभक्तिर्मानसे जायतां ते,
मुनि दिशिदिशिकीर्तिश्चन्द्रिकावच्चकास्तु।
हरिरखिलपृथिव्यामाशुवृष्टिं तनोतु,
तिरयतु तव विघ्नं विघ्नराजो गणेशः॥ 23॥

---

अन्वयः- ते मानसे अविरलहरभक्तिर्जायतां, भुवि दिशि-दिशि कीर्तिः चन्द्रिकावत् चकास्तु, हरिः अखिलपृथिव्याम् आशु वृष्टिं तनोतु, विघ्नराजः गणेशः तव विघ्नं तिरयतु।

व्याख्या- ते=भवतः, मानसे=चित्ते, चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः। अविरल हरभक्तिः=हरस्यभक्तिर्हरभक्तिरविरला च हरभक्ति इति तत्पुरुषगर्भकः कर्मधारयसमासः, अखण्डशिवश्रद्धा। जायताम्=उत्पद्यताम्, लोट् लकारः आशिषी लिङ्लोटाविति सूत्रनियमात्। भुवि=भूमौ, दिशिदिशि=प्रतिदिशम्, कीर्तिः=यशः, चन्द्रिकावत्=ज्योत्स्नेवेत्युपमालङ्कारः। चकास्तु=भातु, हरिः= इन्द्रोविष्णुर्वा, अखिलपृथिव्यां= समग्रभूमौ, आशु=शीघ्रम्, वृष्टिम्=वर्षाम् तनोतु=करोतु। विघ्नराजः=विघ्नेश्वरः विनायको विघ्नराजद्वैमातुर्गणाधिप इत्यमरः। गणेशः, तव=रोमपादस्य, विघ्नं=प्रत्यूहम्, तिरयतु= नाशयतु, मालिनी छन्दः, ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणम्।

---

पुरो॰—महाराज! रुद्राभिषेक पूर्ण हो गया है अब महादेवी के सहित आप प्रसाद ग्रहण करें।

दोनों—(उठकर और अञ्जलियाँ धोकर) गुरुदेव! अनुग्रह कीजिये, अर्थात् प्रसाद और आशीर्वाद दीजिये।

पुरो॰—प्रसाद देता हुआ मन्त्र (आशीर्वाद) पढ़ता है-

आप (दोनों) के हृदय में अखण्डशिवभक्ति उदित हो। चाँदनी के समान आपकी कीर्ति भूमण्डल और प्रत्येक दिशा में चमत्कृत हो। इन्द्र व विष्णु देवता सारी भूमि पर शीघ्र ही पानी बरसायें। विघ्नों के राजा श्रीगणेश जी आपके सम्पूर्ण विघ्नों को दूर करें।

(इति प्रसादं आशीर्वादं च दत्त्वा निर्गतः ? उभौ यथा-यथा स्थानमुपविशतः)

**राजा-** अनेन पुण्यकर्मणा परां शान्तिमधिगच्छति ममान्तरात्मा।

**राज्ञी-** अध्यात्मं सुखं सर्वसुखमतिशेते।

**शान्ता-** तात! किमिदं क्रियते गुरुणा?

**राजा-** वत्से शिवपूजनं क्रियते गुरुणा।

**शान्ता-** किमनेन भवति?

**राजा-** प्रसन्नो हरः सर्वान् विघ्नान् हरति। स एव निर्जलतां हरिष्यति।

**शान्ता-** तदाहमपि शिवभक्तिं कुर्याम्।

**राजा-** वत्से ! क्रियतां-क्रियताम्।

**शान्ता-** प्रथमं शिवचित्रं मृत्तिकया रचयिष्यामि,ततस्तदर्चनम्।

**राजा-** पार्थिवशिवपूजनमशेषमशिवं हरति। वत्सया साधूक्तम्।

---

(इस प्रकार प्रसाद और आशीर्वाद देकर निकल गया, पश्चात् राजा और रानी यथास्थान पर बैठ गये)।

**राजा-** इस पवित्र कार्य से मेरी अन्तरात्मा परमशान्ति को प्राप्त कर रही है।

**रानी-** आध्यात्मिक सुख सभी सुखों से बढ़कर होता है।

**शान्ता-** पिताजी! पुरोहित जी यह क्या कर रहे हैं?

**राजा-** वत्से! यह शिवपूजन कर रहे हैं गुरुजी।

**शान्ता-** इससे क्या होता है?

**राजा-** शङ्करजी प्रसन्न होकर सम्पूर्ण सङ्कट दूर कर देते हैं। वही अनावृष्टि (सूखा) को दूर कर देंगे।

**शान्ता-** तब तो मैं भी शिवभक्ति करूँ।

**राजा-** बेटी ! करो-करो।

**शान्ता-** पहले मैं मिट्टी से शङ्कर जी की मूर्ति बनाऊँगी। तत्पश्चात् उनकी अर्चना (कीर्तन) करूँगी।

**राजा-** वत्से ! तुमने ठीक ही कहा, पार्थिव शिव की पूजा तो अशेष अमङ्गलों का हरण कर लेती है।

राज्ञी- हे भवानीवल्लभ ! रात्रौ स्वप्नदृष्टमखिलममङ्गलं हरतु।

राजा- महादेवी ! भवत्या अमङ्गलजनकः कीदृशः स्वप्नो दृष्टः ?

राज्ञी- अलमभद्रकीर्तनेन।

राजा- अकीर्तितविचारो नाना विकारान् जनयति, तस्मान्न विरन्तव्यम्।

राज्ञी- एवं चेच्छृणोतु प्राणनाथ!

राजा- समाहितोऽस्मि श्रोतुम्।

राज्ञी- आर्यपुत्र ! अरण्यस्थितं भवन्तं परितो भुजङ्गा फूत्कुर्वन्ति। यदा भवान् स्वमवितुं पलायते तदा.......(इति संकुचति)।

राजा- अलं सङ्कोचेन, स्वप्नकथनमेतत् देवि ?

राज्ञी- तदा सहासागतोऽलर्कस्त्वामदशत्।

धावकः- अत्याहितं देव !

---

रानी- हे पार्वती के प्राणनाथ ! रात में देखे हुये दुःस्वप्न का सारा अनिष्ट दूर कीजिये।

राजा- आपने कैसा अमङ्गलजनक स्वप्न देखा ?

रानी- अभद्रविचारों को प्रकट करना (कहना) ठीक नहीं।

राजा- मन में उठे हुए विचार को यदि प्रकट न किया जाये तो वह अनेक विकारों (रोगों) को पैदा करता है। अतएव तुम्हें प्रकट करने से रुकना (विरत होना) नहीं चाहिये।

रानी- यदि ऐसी बात है तो सुनिये, प्राणनाथ!

राजा- मैं सुनने के लिये तत्पर हूँ।

रानी- आर्यपुत्र! आप वन में स्थित हैं, और आपके चारों ओर विषधर (सर्प) फुत्कार कर रहे हैं। जब उनसे बचने के लिये आप भागने लगते हैं, तब.....इस प्रकार सङ्कोच करती है।

राजा- प्रिये! सङ्कोच करना व्यर्थ है, क्योंकि यह सपने की बात है।

रानी- तभी अकस्मात् आकर एक पागल कुत्ता ने आपको काट लिया (जिस कुत्ते की पूंछ सीधी हो जाये उसे पागल (अलर्क) कुत्ता समझना चाहिये।)

धावक- अत्यन्त भय की बात है।

दासी- अनेन शिवाराधनेन आशीर्वादेन च राजेन्द्राय भद्रं भविष्यति।

राजा- महादेवोऽस्माकं रक्षिता ननु, अतो नास्ति किमप्यत्याहितम्।

नेपथ्ये- भयङ्करो हा-हाकारः।

सर्वे- अरे! भू-भू भूकम्-भूकम्पोऽयम् कम्पोऽयम् (इति कम्पनं नाटयन्ति सर्वे)

राजा- न केवलं भूरेव कम्पते किन्तु धूलिरपि वर्षति।

शान्ता- किमेतत्तात्?

राजा- वत्से! सधूलिको भूचालोऽयम्। सम्प्रति प्रकाशो भवति। मा भैषीः।

नेपथ्ये-हा! हा! पतन्ति पतन्ति, पलायतां पलायताम्।

राजा- कुतोऽयमार्त्तनादः?

मन्त्री—(सहसा प्रविश्य) महाराज- पूर्वं सर्वमुपकल्पितम् किन्तु एभिर्भयङ्करै उत्पातैः नाना भवनानि तरवश्च निपतन्ति। परित उल्का पतित्वा दिग्देहदाहं कुर्वन्ति, कर्णस्फोटकाः पीसुलाश्चण्डवाताः धावन्ति प्रलयङ्करिणी कालरात्रिराक्राम्यति।

---

दासी- इस शिवार्चन से और पुरोहित जी के आशीर्वाद से महाराज का कल्याण ही होगा।

राजा- भगवान् महादेव हम सब के रक्षक हैं, अतः भयभीत होने की आवश्यकता नहीं।

नेपथ्य में- भयङ्कर हाहाकार।

सब लोग- अरे ! भूकम्प आ गया (सब लोग काँपने का अभिनय करते हैं। आतङ्क तथा संभ्रम की उक्ति के कारण अक्षरों का गड़बड़ोच्चारण दूषण नहीं अपितु भूषण ही है।)

राजा- केवल पृथ्वी ही नहीं काँप रही है, किन्तु गगन से धूलि भी बरस रही है।

शान्ता- पिताजी! यह क्या हो रहा है?

राजा- बेटी! धूलि बरसाने वाला यह भूकम्प हो रहा है। थोड़ी ही देर में प्रकाश (सब ठीक ठाक) हो जायेगा। बेटी ! डरो नहीं।

नेपथ्य में- हाय, हाय गिर रहे हैं, गिर रहे हैं, (सब लोग) भागो भागो ।

राजा- आर्त्तनाद कैसा हो रहा है?

मन्त्री- (अकस्मात् प्रवेश करके) महाराज! पहले का सम्पूर्ण कार्यक्रम पूरा कर दिया है, किन्तु इन भयङ्कर उत्पातों के कारण अनेक भवन और वृक्ष गिर रहे हैं। चारों ओर से गिरकर उल्कायें दिशाओं और शरीर को भून रही हैं। कर्णविदारक शब्द करती हुई ये धूल भरी आँधियाँ चल रही हैं। प्रलय करने वाली यह काली रात (मौत की निशा) सब पर धावा बोल रही है।

राजा- धैर्यमवलम्ब्यताम्, प्रकटितोऽयं नूनं रौद्रकालः—

काष्ठाव्याप्तघनप्रचण्डतमसा नूनं रविर्भक्षितः,
बल्गद्घर्घररावरेणु मिलितो झञ्झाऽनिलो जृम्भते।
जायन्ते पशुपक्षिवेश्मविटपास्त्रस्ताः धराशायिनः,
शम्पोल्कापतनं भयङ्करमिदं भोक्तुं भुवं धावति॥ 24॥

दासी- महाराज ! असह्योऽयमुपद्रवः तस्मादभ्यन्तरे प्रविशेम।

---

अन्वयः- काष्ठाव्याप्तघनप्रचण्डतमसा नूनं रविः भक्षितः, बल्गद् घर्घररावरेणु-मिलितः झञ्झानिलः जृम्भते, त्रस्ता पशु-पक्षि-वेश्मविटपाः धराशायिनः जायन्ते, इदं भयङ्करं शम्पोल्कापतनं भुवं भोक्तुं धावति।

व्याख्या—काष्ठासु=दिशासु, दिशस्तुककुभः काष्ठेत्यमरः, व्याप्तम्=प्रसृतम्, घनम्=निविडम्, प्रचण्डम्=महोत्कटम्, च यत् तमः=तिमिरम्, इति कर्मधारयतत्पुरुषः। तेन नूनम्=ध्रुवम् उत्प्रेक्षाद्योतकमिदं पदम्, रविः=भानुः भानुर्हंससहस्रांशुस्तपनः सविता रविरित्यमरः। भक्षितः=कवलीकृतः। बल्गत=उद्भवन्तः, घर्घररावाः=घर्घरध्वनयश्च, रेणवः=धूलयश्च, मिलिताः=मिश्रिताः यस्मिन् स इति द्वन्द्वगर्भको बहुब्रीहिः। झञ्झानिलः=चक्रवातः, जृम्भते=उत्तम्भते उत्तेजितो भवतीत्यर्थः। त्रस्ताः=भयार्त्ताः, विचलिताः वा पशवः=गवादयः, पक्षिणः=काकादयश्च, वेश्मानि= भवनानि, विटपाः=वृक्षाश्चेति चतुर्ण्णां पदानां द्वन्द्वः। धराशायिनः=भूलुण्ठिताः, जायन्ते=भवन्ति। इदम्=दृश्यमानम्, भयङ्करं=भीषणम्, शम्योल्कापतनम्=तडित्तारानिपतनम्, शम्पाशतहल्दाह्लादिन्यैरावत्यः क्षणप्रभेत्यमरः। भुवम्=भूमण्डलम्, भोक्तुम्=कवलीकर्त्तुम्, धावति=आक्राम्यति। उत्प्रेक्षानुप्रासादीनां संसृष्टिः। शार्दूलविक्रीडतं छन्दः, लक्षणन्तूक्तमेव प्राक्।

---

राजा- सभी को धैर्य धारण करना चाहिये। यह बहुत ही विकराल समय आ धमका है:-

दिशाओं में छाये हुये अन्धकार ने मानो सूर्य को निगल लिया है। उठते हुये घर्घरशब्द (घड़घड़ाहट) और धूलि से युक्त यह हवा का बवण्डर (तूफान) बढ़ता ही जा रहा है। भयभीत एवं विचलित होकर सारे पशु पक्षी भवन तथा वृक्ष (तहस नहस होते हुये) भूमि पर गिर रहे हैं। बिजलियों और उल्काओं का यह बार-बार पतन (आक्रमण) मानों समस्त भूमण्डल को निगल जाने के लिये धावा बोल रहा है।

दासी- महाराज! यह असह्य उत्पात हो रहा है, अतः भीतर प्रवेश करना चाहिये।

**मन्त्री-** भवनप्रवेशो नाधुना हितकारी देव! भूकम्पचलितानि नैकानि भवनानि विस्खलन्ति, वातप्रहारैः निपतन्तस्तरवः शाखाचपेटैः भवनानि मर्दयित्वा राजमार्गमावृण्वन्ति। क्षणै-क्षणै पाषाणाः वर्षन्ति। तिमिरावृतः पन्थाः न दृश्यते। सनीडाः शकुन्ताः भूमौ लुठन्ति, विच्छिन्नाः पशवः सार्तनादा इतस्ततो धावन्ति, तस्मादिहैव स्थातव्यम्।

**राजा-** यथार्थमुक्तं भवता। नेतो गन्तव्यम्।

**राज्ञी-** वत्से! न भेतव्यं न भेतव्यम् (इति शान्तामाश्वासयति)।

**दासी-** अलं भयेन राजकुमारि!

**राज्ञी-** पश्यतु आर्यपुत्र ! निष्ठुरा विपत्तिः निमित्तं नापेक्षते।

---

**मन्त्री-** महाराज ! इस समय भवन के अन्दर नहीं चलना चाहिये, क्योंकि भूकम्प से हिलाये हुये अनेक भवन (डगमगाकर) गिर रहे हैं। आँधी के प्रहार से गिरते हुये वृक्ष शाखाओं की चपेट से मकानों को चकनाचूर कर सड़क घेर करके पड़े हैं, क्षण-क्षण में पत्थरों (कंकड़ों) की वर्षा हो रही है। अन्धकार से ढकने के कारण मार्ग भी दिखलाई नहीं पड़ता। घोसलों के सहित भूमि पर गिरी हुई चिड़ियाँ छटपटाकर मर रही हैं। रस्सियाँ तोड़ कर रँभाते (चिल्लाते) हुये पशु इधर-उधर भाग रहे हैं। इसलिये अभी यहीं पर ठहरे रहना उचित है। तात्पर्य यह है कि इस बवण्डर तूफान के समय चलते हुये न जाने क्या दुर्घटना हो जाय, कौन सा पेड़ या भवन ऊपर गिर जाय, इसलिये मन्त्री ने अभ्यन्तर प्रवेश का निषेध किया।

**राजा-** आपने सर्वथा ठीक कहा, इधर से नहीं हटना चाहिये।

**राज्ञी-** बेटी ! डरो नहीं, डरो नहीं, (इस प्रकार शान्ता को धैर्य बँधाती है)

**दासी-** राजकुमारी ! भयभीत मत होइये।

**रानी-** आर्यपुत्र ! देखिये ! विपत्ति बहुत निष्ठुर (क्रूर) होती है, वह अकारण भी उत्पात मचाने लगती है।

घनं विना वर्षति धूलि-धारा,
घटां विनैते करकाः पतन्ति।
विना निमित्तं तडितः सिताभाः,
अकारणाः सन्ति च वज्रघोषाः॥ 25॥

**राजा-** महादेवि! अर्जितपापपादपानामेतानि फलानि।

**महापौरः-** (सहसा प्रविश्य) महाराज ! महाराज!

**राजा-** उच्यतां वज्रबाहो!

---

**अन्वयः-** घनं विना धूलिधारा वर्षति। घटां विना एते करकाः पतन्ति। निमित्तं विना सिताभाः तडितः (दीप्यन्ति), अकारणाः वज्रघोषाः च सन्ति।

**व्याख्याः**—घनम्=मेघम्, विना=ऋते, धूलिधारा=रेणुसम्पातः, वर्षति=पतति। घटाम्=मेघमालाम्, विना=अभावे, एते= पुरोदृश्यमानाः, करकाः=प्रस्तरखण्डाः, वर्षोपला इत्यर्थः। पतन्ति=वर्षन्ति, निमित्तम्=कारणम्, विना सिताभाः= शुक्लवर्णाः, तडितः= विद्युतः, तडित्सौदामिनी विद्युच्चंचला चपलापि चेत्यमरः। दीप्यन्तीतिपूरणीयम्। अकारणाः=निर्हेतुकाः, वज्रघोषाः=स्फूर्जथवः च सन्ति भवन्ति। दुर्भिक्षज्ञापनाय विद्युतां सितत्वमुक्तं कविना तथा चोक्तम्—

वाताय कपिला विद्युदातपायातिलोहिनी।
पीता वर्षाय विज्ञेया, दुर्भिक्षाय सिता भवेत्।।

अत्र सर्वत्र विना पदयोगे घनमित्यादौ "पृथक् विना नानाभिस्तृतीयान्यतरस्याम्" इति सूत्रेण द्वितीया। अत्र विभावनालङ्कारः, तल्लक्षणं यथा-क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना। विशेषोक्तिस्तु न शङ्कनीया तत्र शोभनाऽशोभनफलवर्णनात्।

---

देखिये बादल के बिना ही धूलि धारा प्रवाह से बरस रही है। बिना घनघटाओं के ही पत्थर गिर रहे हैं। कारण के (मेघ के) बिना ही ये श्वेत बिजलियाँ चमक रही हैं। देखिये बादल के बिना ही ये वज्रघोष (विद्युत्पात शब्द) हो रहे हैं।

**राजा-** महारानी ! ये सब मेरे द्वारा किये गये पाप ही फल दे रहे हैं।

**महा-** (अकस्मात् प्रवेश कर) महाराज ! महाराज !

**राजा-** वज्रबाहु ! कहिये।

**महा.**- हन्त ! हन्त ! यज्ञशाला।

**राजा**- अये ! स्पष्टं कथ्यताम् ?

**महा.**- एतच्चक्रवाताघातेन यज्ञशालायाः सम्पूर्णं भवनं खण्डं-खण्डं भूत्वा भूमौ विशीर्णम्।

**राजा**- अहो ! कुत्र भूदेवाः ? (इति विषादं नाटयति)।

**महा.**- देव! सुरक्षिताः सन्ति गुरवः।

**राजा**- (ससन्तोषम्) केन प्रकारेण सुरक्षितः ?

**महापौरः**- महाराज! पूजावसाने क्षमाप्रार्थनापरिक्रमां च कृत्वा यदा गुरवो गृहगमनाय बहिरागच्छन्ति, तदा भूकम्पकम्पिता सम्पूर्णा यज्ञशाला मर्मरायमाणा भूमौ न्यपतत्। यज्ञपात्राणि पूजापात्राणि च तत्रैव विध्वस्तानि। स्थापितस्तीर्थकलशो, रचिता वेदिका च तत्रैव विदीर्णा। यद्यपीयं विनाशलीला मन्दं-मन्दं मन्दायते, तथापि नाधुनापि जनसञ्चारोऽस्ति, राजमार्गा अपि नेदानीं सर्वथा विघ्नविहीनाः सन्ति, तस्मात् मुहूर्तकमिहैव विराजमानस्तिष्ठतु भवान् !

---

**महा**- अरे ! हा ! हा ! यज्ञशाला...........।

**राजा**- अजी ! साफ-साफ बोलो!

**महा**- इस बवण्डर तूफान के विकट प्रहार से यज्ञशाला का सम्पूर्ण भवन खण्ड खण्ड (चकनाचूर) होकर पृथ्वी पर बिखर गया है।

**राजा**- अरे ! पूजा कर रहे विप्रदेव कहाँ है ? (इस प्रकार दुःखी होता है)।

**टिप्पणी**- शिवार्चन का कार्यक्रम चिरकाल तक चलता रहेगा। अतः पूर्व प्रतिपादित पूजा सम्पन्नता का तात्पर्य प्रथम शिवार्चन से लगाना चाहिये। ऐसा प्रतिपूजन में ही होता रहेगा और पुरोहित जी प्रतिबार प्रसाद देते रहेंगे।

**महापौर**- महाराज! सभी गुरुजन सकुशल हैं।

**राजा**- (सन्तोष के साथ) किस प्रकार से गुरुजन सकुशल हैं।

**महापौर**- पूजन समाप्ति पर क्षमा प्रार्थना और परिक्रमा करके गुरुजन जिस समय पर अपने-अपने घर जाने के लिये बाहर निकले हैं, उसी समय भूकम्प से डगमगाती हुई सम्पूर्ण यज्ञशाला मर्मर करके (मानो रोती हुई) पृथ्वी पर गिर गई। यज्ञ तथा पूजा के पात्र (पूजोपकरण) उसी में ध्वस्त हो गये। स्थापित किया गया पूजाकलश (तीर्थजलपूर्ण घट) तथा रची गई वेदी उसी में विदीर्ण (विमर्दित) हो गई।

**राजा-** याज्ञिका निर्बाधा इति हेतोर्महती प्रसन्नता। कथं तदानीं तेषु गृहगमनाय मतिरुत्पन्ना ? अथवा बलिष्ठा भवितव्यता-

को वा मन्दमतिर्लोके, को वा बुद्धिविशारदः।
तादृशी जायते बुद्धिर्यादृशी भवितव्यता॥ 26॥

**राज्ञी-** अशिवं शिवो वारयतीति वलीयान् विश्वासः।

**मन्त्री-** (बहिरालोक्य) महाराज! समाप्तप्राय उत्पातः इदं नभो नीरजस्कं सम्पद्यते। मुकुलितोऽयं भास्करोऽस्ताचलं याति। अतोऽन्तःपुराय गन्तव्यम्।

---

**अन्वयः-** लोके को वा मन्दमतिः, कः वा बुद्धिविशारदः यादृशी भवितव्यता, तादृशी बुद्धिः जायते।

**व्याख्या-** लोके=इह संसारे, कः=पुरुषः, वा निश्चितरूपेण मन्दमतिः=बुद्धिहीनः मूर्ख इत्यर्थः। कः वा बुद्धिविशारदः=निर्मलमतिः, चतुर इत्यर्थः। यादृशी= यथा, शुभाऽशुभेति यावत्, भवितव्यता=भविष्णुता अदृष्टमिति तत्त्वम्, (भवति) तादृशी=तथैव, शुभाऽशुभा बुद्धिः=मतिः, बुद्धिर्मनीषा-धिषणा-धी-प्रज्ञाशेमुषी-मतिरित्यमरः। जायते= उत्पद्यते। अर्थान्तरन्यासोऽलङ्कारः।

---

यद्यपि यह विनाशलीला धीरे-धीरे शान्त होती जा रही है, तथापि अभी तक लोगों का सञ्चार (आवागमन) नहीं हो पा रहा है। राजमार्ग (सड़कें) अभी तक विघ्नों से सर्वथा खाली (साफ) नहीं है। इसलिये स्वामी थोड़ी देर तक यहीं पर ठहरिये।

**राजा-** याज्ञिक लोग (गुरुजन) सकुशल हैं ऐसा जान कर मुझे बड़ी प्रसन्नता हो रही है। आश्चर्य है कि उसी समय पर उनमें घर जाने की बुद्धि कैसे उत्पन्न हुई? अथवा होनी बहुत प्रबल होती है-

वस्तुतः इस संसार में कौन मूर्ख है और कौन बुद्धिमान् है, अर्थात् कोई नहीं बुद्धिमान् और न ही कोई मूर्ख है क्योंकि भवितव्यता (होनहार होनी) जैसी होने वाली होती है मनुष्य की बुद्धि भी वैसी ही (शुभ या अशुभ) बन जाती है अर्थात् भाग्य बहुत बलवान है।

**रानी-** मेरा विश्वास है कि शङ्करजी अमङ्गलों को दूर कर देते हैं।

**मन्त्री-** (बाहर देखकर) महाराज! उत्पात प्रायः समाप्त हो चुका है, आकाश भी धूलि रहित (निर्मल) होता जा रहा है, सिकुड़ता हुआ यह सूर्य भी अस्ताचल की ओर जा रहा है, अतः अब यहाँ से चला जाये।

**राजा**–(बहिरालोक्य) सत्यमेतच्चन्द्रचूड़ ! तदितः प्रस्थीयताम् इति सर्वे परिक्राम्यन्ति।

**महापौरः**- महाराज! पश्यतु भवान्! श्यामशाटकमिव तिमिरं गगनाभोगं शनैः-शनैरावृणोति।

**राजा**- (गगनाभिमुखमालोक्य) अये! अये! किमेतद् धूसरवर्णम् सपुच्छम् ?

**मन्त्री**- (उपर्यवलोक्य) हन्त! हन्त! महाननर्थो देव! अयं क्रूरग्रहो धूमकेतुः ?

(सर्वे साश्चर्यं पश्यन्ति)

**राजा**- सर्वथानिष्टं सूचयत्ययम्। अवश्यं घोरं सङ्कटं सम्भाव्यते।

**राज्ञी**- आर्यपुत्र! इमं वीक्ष्य कम्पते मे हृदयम्, तस्मात् गुरुवर्येण अस्य प्रायश्चित्तं समाचरणीयम्।

**राजा**- सत्यं ब्रवीति भवती। ईदृशं दुर्निमित्तं देवाराधनं विना न प्रणश्यति।

**मन्त्री**- ईदृशानां दुर्निमित्तानां देवाराधनमन्तरेण न किमप्यौषधम्।

---

**राजा**–(बाहर देखकर) सत्य कह रहे हो चन्द्रचूड! अतः यहाँ से चलना चाहिए।

**महापौर**- महाराज ! देखिये कालीचादर के समान यह अँधेरा आकाश को धीरे-धीरे ढाँक रहा है।

**राजा** (गगनाभोग को देखकर)- अरे! अरे! यह पूँछ के सहित धूमिल वर्ण का क्या दिखाई दे रहा है ?

**मन्त्री** (ऊपर देखकर)- हाय! हाय! यह तो बड़ा अनर्थ हो गया, यह तो धुमकेतु पुच्छलतारा उदित हो रहा है (आश्चर्यपूर्वक सब लोग देखते हैं)।

**राजा**- यह क्रूर ग्रह अत्यन्त अशुभ सूचक है। इसलिये घोर संकट की संभावना है।

**रानी**- आर्यपुत्र ! इसे देखकर मेरा हृदय काँप रहा है, अतएव पुरोहित जी से इसका प्रायश्चित्त करा देना चाहिये।

**राजा**- आप सत्य कह रही हैं, इस प्रकार का दुर्निमित्त देवाराधन के बिना शान्त नहीं हो सकता।

**मन्त्री**- देवाराधन के बिना ऐसे अनिष्टों का और कोई उपचार (औषध) नहीं है।

**राजा-** धावक! त्वमितो गत्वा अनामयं संसूच्य मुद्गलाचार्यं ब्रूहि यदस्य धुमकेतुग्रहस्य शान्तये प्रतिविधानं कुर्यादिति।

**धावकः-** एष गच्छामि देव (इति निर्गतः)।

**शान्ता-** मातः! भवनं चलतु विभेम्यहम्।

**राज्ञी-** वत्से ! मा भैषीः, एष ते गच्छति तातः।

**दासी-** राजकुमारि ! धैर्यं बध्नातु वयं महाराजेन सह सर्वे गच्छामः।

**महापौरः**—परितो दिशा अन्धकारे निमज्जन्ति, तदहमग्रेऽग्रे ब्रजानि मार्गदर्शनाय (इत्यग्रे चलित्वा) इत-इतो देव! (इति तमनुक्राम्यन्ति सर्वे)।

**राजा-**(परितः पश्यन्) वस्तुतः सर्वान् जीवलोकाननर्थकुहरे निपातयन्तीयं काल-निशा समुजृम्भते। इयं स्वकीयं परकीयं चागणयन्ती पुण्यं-पापं चाविचारयन्ती चराचरेण स्वोदरं पूरयति-

---

**राजा-** धावक! तुम इधर से जाकर कुशल मंगल की सूचना देते हुये मुद्गलाचार्य से कहना कि इस धूमकेतु क्रूरग्रह की शान्ति के लिये अनुष्ठान कर दें।

**धावक-** यह मैं चला (इस प्रकार निकल गया)।

**शान्ता-** माता जी! भवन को चलिये, मैं डर रही हूँ।

**रानी-** बेटी! डरो नहीं। यह तुम्हारे पिताजी चल रहे हैं।

**दासी-** राजकुमारी! धैर्य धारण करो! हम सब लोग महाराज के साथ चलेंगे।

**महापौर-** चारों ओर से ये दिशायें अन्धकार में डूब रही हैं इसीलिये मैं आगे आगे चलकर मार्ग दिखाता हूँ (आगे बढ़कर) इधर से आइये महाराज इधर से (इस प्रकार उसके पीछे-पीछे सब चलते हैं)।

**राजा-** (चारों ओर देखते हुये) वास्तव में प्राणिमात्र को अनर्थ के गर्त में ढकेलती हुई यह कालरात्रि भयङ्कर धावा बोल रही है। यह कालरात्रि अपना और पराया न गिनती हुई तथा पुण्य और पाप का कुछ भी विचार न करती हुई चराचर से अपना उदर भर रही है। अर्थात् अन्धकाररूपी उदर में सबको विलीन (सिमेट) कर खा रही है।

अतिविकटनिशेयं मूर्च्छयन्ती नृलोकम्,
पृथुतिमिरपटेनाच्छादयन्ती जवेन।
दिवि भुवि कलयन्ती सर्वथा चैकवर्णम्,
वत! वत! भयभीतो भास्कारोऽस्तं प्रयाति॥ 27॥

**राज्ञी-** आर्य पुत्र! विभेतीयं वत्सा, तदाशु गन्तव्यम्।

**राजा-** त्वर्यतां त्वर्यताम् (इति सर्वे निष्क्रिन्ताः)।

॥इति द्वितीयोऽङ्कः॥

---

**अन्वयः-** नृलोकं मूर्च्छयन्ती जवेन पृथुतिमिरपटेन आच्छादयन्ती दिवि भुवि च सर्वथा एकवर्णं कलयन्ती इयं अतिविकटनिशा (अस्ति) वत! वत! भयभीतो भास्करः अस्तं प्रयाति।

**व्याख्या-** नृलोकम्=मर्त्त्यलोकम्, मूर्च्छयन्ती=अचेतयन्ती मारयन्तीत्यर्थः। जवेन=वेगेन, पृथुतिमिरपटेन=निविडतमो वस्त्रेणशवच्छदेनेत्यर्थः। आच्छादयन्ती=आवृण्वन्ती लोकमेवेति यावत्। दिवि=आकाशे, भुवि=भूमौ च अर्थात् भूतलमारभ्य गगन-पर्यन्तमिति सारांशः। सर्वथा=सर्वतोभावेन, एकवर्णम्=शुक्लादिवर्णान् विलोप्य कृष्णवर्णमात्रम्, कलयन्ती= कुर्वती, इयम्=पुरोवर्तिनी, अतिविकटनिशा=भयङ्करतमिस्रा, समुज्जृम्भते इति पूर्वेण क्रियापदेन सम्बन्धः। वत! वत!= महान्खेदविषयः, भयभीतः=त्रस्तः, भास्करः=दिनाधीशोऽपि, अस्तम्= अस्ताचलम्, प्रयाति=गच्छति। रूपकोत्प्रेक्षानुप्रासादीनां संसृष्टिः। मालिनीच्छन्दः, "ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणम्"।

---

यह बड़ी भयङ्कर (काल) रात्रि है, यह मनुष्यलोक को मूर्च्छित (मार) कर उसे स्थूल अन्धकाररूपी कपड़े से ढँाक रही है (जैसे कोई मुर्दा को कफन से जल्दी ही ढँाक देता है) आकाश से भूतल तक के सभी वर्णों (ब्राह्मणादि चारो वर्णों या श्वेतादि सप्तवर्णों में छः वर्णों) को मेटकर एकमात्र कृष्णवर्ण बना रही है, अति दुःख की बात है कि इससे डरकर सूर्य भी छिपने हेतु अस्ताचल को भाग रहा है।

**रानी-** आर्यपुत्र ! यह बेटी डर रही है, अतः शीघ्र चलना चाहिये।

**राजा-** शीघ्र चलो, शीघ्र चलो, (इस प्रकार सब निकल जाते हैं)।

॥द्वितीयअङ्क समाप्त॥

# ॥तृतीयोऽङ्कः॥

(ततः प्रविशन्ति पीड़िताः जनाः)

**सर्वे-** हा! हा! अनार्यम्-अनार्यम्। मारिता वयमनयानर्थपरम्परया।

**प्रथमः-** प्रथमं तावदनावृष्टिरेवाऽस्मान् हन्तुं पर्याप्ता, तत्रापि महावातः, धूलिवर्षा, शिलापातः, भूकम्पः, वज्रपातः, भूस्खलनम् इत्युत्पातपरम्परा सम्पद्यते, येनेदं भूतलं निवासयोग्यं न दृश्यते, विपदि विपदो धावन्तीति सत्यम्।

**द्वितीयः-** भो भ्रातः! मम ग्रामे पञ्चाशद्गृहेषु पञ्चदशैवावशिष्टाः शेषाः अनया विनाशलीलया कवलीकृताः, असंख्याः जनाः पशवश्च पञ्चत्वं प्राप्ताः, बहवो हि अङ्गभङ्गा जर्जराश्च भूत्वा चीत्कारं कुर्वन्ति।

**तृतीयः-** पितृव्य! श्रूयताम्, मदीयं भवनमकस्मादेव धरायां निपतितम्, यत्र च मां विमुच्य सर्वः परिवारः कथावशेषतां यातः।

---

## ॥तृतीय अङ्क॥

(तत्पश्चात् पीड़ित लोगों का प्रवेश होता है)

**सभी लोग-** हाय! हाय! अनर्थ है। इन विपत्तियों ने हमको मार डाला।

**प्रथम-** अजी! यह सूखा ही हम लोगों की हत्या करने के लिये पर्याप्त था, उस पर आँधी, धूलि, पत्थर, वर्षा, भूचाल तथा बिजलियों का गिरना और भूस्खलन इत्यादि उत्पातों का ताँता लग गया, जिससे यह पृथ्वी निवास करने योग्य नहीं रही, यह उक्ति ठीक ही है कि विपत्ति में विपत्तियाँ आ धमकती हैं।

**द्वितीय-** अरे भैय्या! मेरे गाँव में पचास घर थे, जिनमें पन्द्रह ही बचे, शेष सब को इस विनाशलीला ने निगल लिया, असंख्य नरनारी और पशु मर गये। बहुतों के हाथ पैर टूट गये, जो जीर्ण शीर्ण होकर हा-हाकार (अन्तिम श्वासें भर) कर कराह रहे हैं।

**तृतीय-** सुनिये चाचा जी! मेरा घर अचानक ही भूमि पर गिर गया, अर्थात् भूस्खलन से भूमि में धँस गया, जिससे मुझे छोड़कर सारा परिवार मर गया।

**चतुर्थः**:- अहो ! बन्धुवर, मम ग्रामे घटितघटना शब्देन वक्तुं न शक्यते।

**सर्वे**- किं किं घटितम्! ब्रूहि भोः ?

**चतुर्थः**:- भ्रातृवराः ! मम ग्रामे सर्वे ब्राह्मणा वसन्ति स्म, अस्मिन् उत्पातकाण्डे सहसा भूस्खलनं जातम्, येन हि स समग्रो ग्रामः श्मशानतां प्राप्तः, यावच्च सपत्नीकोऽहं तीर्थात्प्रत्यागत्य ताम् अदृष्टपूर्वां विनाशलीलां पश्यामि तावत्तामसहमाना मम ब्राह्मणी भूमौ पतन्ती प्राणानत्यजत्। सोऽहं मन्दभागो गृहविहीनः कथं जीवेयम्, कुत्र गच्छेयम्, क्वास्ति शरणम् ?

**द्वितीयः**:- प्रजानां रक्षिता राजा भवति, तस्मादितो गत्वा रोमपादाय निवेदयामः।

**तृतीयः**:- सत्यं वदति भवान्! यद्यपि स दयालु राजा प्रजापायवारणाय स्वयमेव यतते, तथापि कर्त्तव्यपालनायास्माभिरपि गन्तव्यम्।

**सर्वे**- चलन्तु, चलन्तु तत्रैव (इति सर्वे परिक्राम्यन्ति)।

---

**चतुर्थ**- हाय! चौधरी जी! मेरे गाँव में जो दुर्घटना हुई उसका वर्णन शब्द से नहीं किया जा सकता।

**सबलोग**- क्या-क्या घटना घटी कहिये जी !

**चौथा**- भैय्याजी ! हमारे गाँव में सब लोग ब्राह्मण ही रहते थे, इस बवण्डर (आँधी आदि) के समय सहसा भूस्खलन हुआ, अर्थात् पृथ्वी नीचे धँस गई, जिससे वह ग्राम श्मशान बन गया, (भूमि में घुसकर दब गया)। जब तक तीर्थ से लौटकर पत्नी के सहित मैं उस अभूतपूर्व दृश्य को देखता हूँ तब तक उसे सहन न कर पाने के कारण मेरी पत्नी मूर्च्छित हो भूमि पर गिर गई और तत्काल ही चल बसी (मर गई)। अब मैं अभागा ब्राह्मण बेघर होकर कैसे जीवित रहूँ कहाँ जाऊँ ? और कौन मेरा रक्षक है ?

**द्वितीय**- प्रजा को रक्षा करने वाला राजा होता है, इसलिये इधर से चलकर हम लोग राजा रोमपाद से निवेदन करें।

**तृतीय**- आप ठीक ही कह रहे हैं। यद्यपि वह राजा बड़ा दयालु है इसलिये वह स्वयं ही जनता का दुःख दूर करने के लिये प्रयत्नशील रहता है, तथापि हमको अपना कर्त्तव्य पूरा करने के लिये वहाँ चलना चाहिये।

**सब लोग**- चलो चलो! वहीं चलें।

(इस प्रकार सब लोग मञ्च पर घूमते हैं)

**कञ्चुकी** (सहसा प्रविश्य) अरे! कथं शब्दायन्ते? के यूयम्?

**प्रमुखः**– (प्रणमन्) आवुत्त! विविधग्रामवासिनो वयं भूकम्पकृतं विनाशकाण्डं देवाय निवेदयितुमत्र समागताः।

---

## कञ्चुकी

अन्तःपुरस्य रक्षणार्थमेको वृद्धो ब्राह्मणो नियुज्यते किन्तु वृद्धो भूत्वाप्ययं शक्तिशाली, गुणगणमाली, प्रभावसम्पन्नो भवति। अयं ज्ञान-विज्ञाननिपुणः, शिष्टवेषभूषामण्डितः, सकलकलाकलापपण्डितः, परमपवित्रश्चारूचरित्रः, सर्वं राजव्यवहारं जानाति। अयं शिरसि उष्णीषं वध्नाति, पादायामं धौतवस्त्रं वा धारयति। एष लम्बमानं कञ्चुकं (चोलकं) अवश्यं परिधत्ते। अनेनैव कारणेन कञ्चुकीत्यभिधीयते। कञ्चुकमस्यास्तीति कञ्चुकी। सौविल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते, इत्यमरः। अयं यष्टिधारी कञ्चुकी न केवलं खलु अन्तःपुरस्यैव रक्षकः अपितु नायकस्य (नृपस्य) अपि सहयोगी (कार्यकारी) भवति, आवश्यकतानुसारेणायं विभिन्नकार्येष्वपि सहयोगं करोति। अस्य गणना उच्चपात्रेषु क्रियते, अयं हि राजभवने प्रतिष्ठितपदासीनत्वात् अन्यजनान् यदा-कदा फटकर्तुम् अपि शक्नोति। अतएव राजा हलाकर्षणं करोतीत्यस्य मुखात् निशम्य आगताः कृषका प्रतिनिवृत्ताः। कञ्चुकिनो लक्षणं यथाः–

अन्तःपुरचरो वृद्धो, विप्रो गुणगणान्वितः।
आचारवेषकुशलः, कञ्चुकीत्यभिधीयते।।

काञ्चुकीय इति तु श्रीभासकविः प्रयुङ्क्ते तत्र कञ्चुको भक्तिः सेव्योऽस्येति व्युत्पत्तौ गहादि सूत्रे "वेणुकादिभ्यश्छण्" इति वार्तिकेन छण् प्रत्यये, आदिवृद्धौ छस्येयादेशो काञ्चुकीय इति साधुः। वेणुकादिश्चाकृतिगणः।

---

**कञ्चुकी**– (सहसा प्रवेश करके) अरे! क्यों हो-हल्ला कर रहे हो, कौन हो तुम लोग?

**चौधरी**– (प्रणाम करता हुआ) बहनोई जी! (बाबूजी) विविध गाँवों में रहने वाले हम लोग भूचाल से हुये सत्यानाश (तहस-नहस) का निवेदन करने के लिये महाराज के पास आये हैं।

**कञ्चुकी-** युक्तमेतत् किन्तु तत्प्रयोजनं निष्पादयितुं महाराजा स्वयमेव तल्लीनः।

**प्रमुखः-** किमहं शक्नोम्यवगन्तुम् आर्य! कीदृशस्तल्लीनः ?

**कञ्चुकी-** दैवज्ञप्रेरितः स महादेव्या सह हलाकर्षणं सज्जते।

**प्रमुखः-** कीदृशं हलाकर्षणं भ्रातः ?

**कञ्चुकी-** हलाकर्षणेन वृष्टिर्भवति।

**ब्राह्मणः-** जानाम्यहं प्रमुख ! अनावृष्टिकाले राजा महिष्या सह हलं चालयति, ततः प्रसन्नो हीन्द्रो जलं वर्षति।

**प्रमुखः-** एवं चेत्तर्हि स्वयमेव तल्लीनो महाराजोऽस्माकं हिताय, तदलम् निवेदनेन।

**(नेंपथ्ये वाद्यध्वनिः)**

---

**कञ्चुकी-** यह बात ठीक है, किन्तु इस प्रयोजन को पूर्ण करने के लिये महाराज स्वयं ही तल्लीन हैं।

**प्रमुख-** बाबूजी ! क्या हम जान सकते हैं कि महाराज कैसे तल्लीन हैं ?

**कञ्चुकी-** ज्योतिषियों की आज्ञा से महाराज महारानी के साथ हल चलाने की तैयारी कर रहे हैं।

**प्रमुख-** कैसा हलाकर्षण भैय्या जू ?

**कञ्चुकी-** हल चलाने (जोतने) से वर्षा होती है।

**ब्राह्मण-** चौधरी जी ! इस विषय में मैं जानता हूँ सूखा पड़ने पर देश का राजा रानी के साथ मिलकर हल चलाता है, तब प्रसन्न होकर इन्द्रदेवता पानी बरसाते हैं।

**प्रमुख-** यदि ऐसी बात है, तब तो महाराज स्वयं ही हमारे हितसाधन में संलग्न हैं, इसलिये अब निवेदन करना व्यर्थ है।

**(नेपथ्य में बाजाओं की ध्वनि)**

**कञ्चुकी-** (श्रुतिमभिनीय) अहो ! समुत्थिताः वाद्यनादाः हलोत्सवसम्पादनाय महाराज इत एवाभिवर्तते।

**ब्राह्मणः-** एवं चेन्नास्माकमत्रावस्थानमुचितम्।

**कञ्चुकी-** एवं दिक् दूरदर्शी भवान्, तस्मात् दूरत एव हलोत्सवं पश्यत।

**प्रमुखः-** वाढम् वाढम्, साधयामो वयम्।

(इति सर्वे निष्क्रान्ताः)

॥इति विष्कम्भः॥

---

**कञ्चुकी** (सुनने का अभिनय करके)- अहह! बाजे बजने लगे हैं, हलोत्सव का कार्य पूर्ण करने के लिए महाराज इधर ही आ रहे हैं।

**ब्राह्मण-** यदि ऐसी बात है तो (महाराज के समक्ष) हम लोगों का यहाँ पर रहना ठीक नहीं है।

**कञ्चुकी-** यह बात समझदारी की है। आप बहुत दूरदर्शी हैं। इसलिये आप लोग दूर से ही हलोत्सव देखें।

**प्रमुख-** अच्छा जू अच्छा जू! हम लोग यहाँ से फूट रहे हैं (जा रहे हैं)।

(इस प्रकार सब निकल गये)

## • ॥ विष्कम्भक ॥

जिस प्रकरण में पात्रों द्वारा पूर्वघटित और आगे घटित होने वाले चरित्र की सूचना दी जाये उस प्रकरण को विष्कम्भ कहते हैं, विष्कम्भति सूचयति पूर्वापरं (अतीतानागतं) वृत्तान्तं यः स विष्कम्भः, वि उपसर्ग पूर्वक स्कम्भ (सौत्र) धातु से कर्त्ता के अर्थ में "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यादि सूत्र से अच् प्रत्यय करने पर विष्कम्भ प्रयोग बनता है, "ण्वुल्तृचौ" सूत्र से ण्वुल् प्रत्यय करने पर और उस प्रत्यय को अकादेश करने पर विष्कम्भक प्रयोग बनता है। विष्कम्भक का लक्षण साहित्यदर्पण में इस प्रकार किया गया है-

वृत्तवर्तिष्यमाणानां, कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ, आदावङ्कस्य दर्शितः।।

प्रकृत विष्कम्भक से सूचित होता है कि तूफान बवण्डर से गाँव के गाँव तहस नहस हो गये इस सूखादि को दूर करने के लिये राजा हलाकर्षण करने में तत्पर हैं।

॥विष्कम्भक समाप्त॥

(तत्पश्चात् हल चलाते हुये परिवार के सहित राजा का प्रवेश होता है)

(ततो हलं चालयन् सपरिवारो राजा प्रविशति)

**प्रमुखः**- पश्य, पश्य, प्रजावत्सलो राजा किं-किं न करोति। एष महाराजो महादेवी च हलं कर्षतः।

**जनाः** (दूरतः) जयतु-जयतु महाराजः! फलन्तु तव मनोरथाः।

**विदूषकः**- (प्रविश्य स्वगतम्) शूरोऽयं दुष्काल, यत्र राजानोऽपि वृषभायन्ते।

(नेपथ्ये वाद्यध्वनिः)

**पुरोहितः**- राजन्! सम्पन्नोऽयं विधिः, विसृज्यतां हलाकर्षणम्? हस्तावुत्थाप्य वासवं नमस्कुरु, (राजा तथा करोति) जलं मार्जयन् पुरोहितो मन्त्रमुच्चारयति-

**देवराजः सहस्राक्षो, वासवो नाम देवता।**
**मम राज्ये करोत्वाशु, मेदिनीं सस्यभूषिताम्॥ 18॥**

**राजा**- गुरुवर्य ! अतः परं किमवशिष्यते?

---

**अन्वयः**- देवराजः सहस्राक्षः वासवः नाम देवता मम राज्ये आशु मेदिनीं सस्यभूषितां करोतु।

**व्याख्या**- देवराजः=अमरेशः, सहस्राक्षः वासवः इन्द्रः नाम प्रसिद्धो देवता सुरः, मम=रोमपादस्य अङ्गदेशे, आशु=शीघ्रम्, मेदिनीं=भूमिम्, सस्यभूषिताम्= धान्यसम्पन्नां, करोतु=कुर्यात्।

---

**मुखिया**- देखो-देखो ! प्रजाहितैषी राजा क्या-क्या नहीं करते, देखो रानी के सहित राजाजी हल जोत रहे हैं।

**अन्य लोग**-(दूर से देखते हुये) महाराज की जय हो! जय हो! आपके मनोरथ सफल हों।

**विदूषक**-(प्रवेश करके मन में) वाह! यह सूखा बड़ा बहादुर है जिसने हल खिचवाकर राजा (लोगों) को भी डंगर (बैल) बना दिया है। (नेपथ्य में बाजे बजते हैं)।

**पुरो**- राजन् ! अब यह अनुष्ठान पूरा हो गया, हलाकर्षण का कार्य विसर्जित कीजिये, और हाथ उठाकर इन्द्र देवता को प्रणाम कीजिये।

**राजा**- हाथ उठाकर इन्द्र देवता को प्रणाम करता है तथा जल छिड़कता हुआ पुरोहित मन्त्रोच्चारण करता है।

हजारों नेत्र वाले देवताओं के स्वामी इन्द्र भगवान् (या विष्णुजी) मेरे देश की सम्पूर्ण पृथ्वी को धनधान्य से शीघ्र ही अलङ्कृत (परिपूर्ण) करें।

**राजा**- इसके पश्चात् क्या करना चाहिये?

पुरो- गुरुजनान् वन्दस्व, महाराज!

राजा राज्ञी च- करौ बद्ध्वा प्रणमतः

राजँस्तव प्रजामध्ये, वारि वर्षतु वारिदः।
दुग्धवद्धवला कीर्तिः, पूरयत्ववनीतलम्॥ 29॥

(इति ब्राह्मणैः सह पुरोहितो निष्क्रान्तः)

जनाः- महाराज! सम्पन्नोऽयं महोत्सवः कामना ते फलतु अनया ते प्रजावत्सलतया प्रसन्नाः वयम्, अतः परं गन्तुमनुजानातु।

राजा- एवमस्तु (इति प्रजाजनाः निष्क्रान्ताः)।

---

अन्वयः- हे राजन् ! तव प्रजामध्ये वारिदः वारि वर्षतु, दुग्धवत् धवला कीर्तिः अवनीतलं पूरयतु।

व्याख्या- हे राजन्!=हे भूपते ! तव= भवतः, प्रजामध्ये= जनतान्तराले जनपदे इति यावत्। वारिदः=मेघः, वारि=वाः आपः स्त्री भूम्निर्वारि इत्यमरः। वर्षतु= क्षरतु वर्षां करोत्वित्यर्थः। दुग्धवत्= क्षीरवत् इत्युपमालङ्कारः। धवला= शुभ्रा, कीर्तिः=यशः, अवनीतलम्=भूतलम्, पूरयतु= व्याप्नोतु। अनुप्रासः पूर्णोपमा च, आवश्यकतानुसारी आशीर्वादो दत्तः। आशिषी लिङ्लोटावित्याशीर्वादार्थे लोट्लकारः।

---

पुरो- महाराज इसके बाद गुरुजनों को प्रणाम कीजिये।

राजा तथा रानी- हाथ जोड़कर प्रणाम करते हैं।

पुरो- ब्राह्मणों के साथ आशीर्वाद देते हैं-

हे राजन्! आपकी प्रजा में (देश में) मेघ पानी बरसायें। और दूध के समान (आपकी) निर्मल कीर्ति सम्पूर्ण भूमण्डल में फैले। (इस प्रकार आशीर्वाद देकर ब्राह्मणों के सहित निकल गया)।

सब लोग- महाराज! अब यह हलोत्सव का कार्य सम्पन्न होता है, आपकी कामना सफल हो, आपके प्रजाप्रेम से हम सब लोग बहुत प्रसन्न हैं, अब हम सबको घर जाने की आज्ञा दीजिये।

राजा- ऐसा ही हो (इस प्रकार प्रजाजन निकल गये)।

**विदूषकः**- अद्य हलोत्सवः सम्पन्नः, तदवश्यमेव मधुरव्यञ्जनानि मिलिष्यन्ति, धन्येयमनावृष्टिः यत्कृपया बुभुक्षितस्य मम भाग्यं प्रफुल्लम्-

**चिरं जीवत्वनावृष्टिः सृष्टिर्जीवतु वा न वा।**
**अहो! इयमनावृष्टिर्मातेव हितकारिणी॥ 30॥**

---

**अन्वयः**- अनावृष्टिः चिरं जीवतु, सृष्टिः जीवतु वा न वा, अहो! इयं माता इव हितकारिणी वर्तत इति शेषः।

**व्याख्या**- अनावृष्टिः= अवर्षा, चिरम्=बहुकालम्, जीवतु=तिष्ठतु, सृष्टिः=प्रजा, जीवतु अथवा न जीवतु। अहो!=हर्षे, इयम्=एषा ओदिति प्रगृह्यसंज्ञकत्वान्न स्वरसन्धिः, अनावृष्टिः, माता= जननीव, हितकारिणी=हितैषिणीति, पूर्णोपमा।

---

## • विदूषक

चमत्कारकैर्व्यङ्ग्यवचनैर्विचित्रं वेषभूषारचनैश्च न केवलं नायकमेव अपितु अन्यानपि जनान् हासयति प्रमोदयति च। विशेषेण दूषयति=नीरसं वातावरणं सरसीकरोतीति विदूषकः। किमपि पुष्पमुद्दिश्य कञ्चिदृतुमुद्दिश्य अपरं च कमप्युद्दिश्य वास्यनामधेयं भवति। कलहानुरागसम्पादनेऽयमतिप्रवीणो जायते, अयं च उदरपूर्त्तये सदैव भोजनमिच्छति। अयं जात्या ब्राह्मणः, शास्त्रप्रवीणोऽपि भवति। विदूषको नायकस्य विनोदकारी सहयोगी भूत्वा तिष्ठति। नाटकानां मध्येऽस्य महत्त्वपूर्ण स्थानं वर्तते, किन्तु उत्तररामचरितवेणीसंहारादौ विदूषकाऽभावेऽपि नाऽरुचिरुत्पद्यते अत एव नाटकेऽस्य महती आवश्यकता न दरीदृश्यते इति सुधियो विभावयन्तु, विदूषकलक्षणम्-

**कुसुमवसन्ताद्यभिधः, कर्मवपुर्वेशः भाषाद्यैः।**
**हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः॥सा.द. ३॥**

---

**विदूषक**- आज तो भाई हलोत्सव का कार्य सम्पन्न हुआ है, इसलिये अवश्य ही मीठे-मीठे माल खाने को मिलेंगे, धन्य है यह अनावृष्टि (सूखा) जिसकी कृपा से मुझ जैसे-भुक्खड़ का भाग्योदय हो गया-

यह मेरी अनावृष्टि सदैव (अजर-अमर) बनी रहे, प्रजा चाहे जीवित रहे या मर जाये, अहह! यह अनावृष्टि तो मेरे लिये माता के समान हितकारिणी है।

तदहं महाराजस्य समीपे गत्वा स्वाभीष्टं साधयामि (पदान्तरे विलोक्य) अहो! वसन्ताभावेऽपि कथमेते रसाला अङ्कुरिताः अकाले अत्यन्तमनिष्टमिदम्। अहं खलु प्रियम्वदो रङ्को ब्राह्मणः अतो नेदमशुभं महाराजाय सूचयिष्यामि, असूचयित्वाऽधर्मभागीति कीदृशं हा! संकटम्। (परिक्रम्य राजानं च वीक्ष्य) जयतु-जयतु स्वामी!

राजा- (विलोक्य) भो भल्लाट! कियता कालेन त्वमन्विष्यसे, समग्रेऽप्युत्सवे न त्वं दृष्टिपथे पथिकायितः।

विदूषकः- अहमिहैवास्मि महाराज! किन्तु जनसम्बाधे न भवता विलोकितः।

राजा- सत्यमेतत् सखे! किं करोमि जलं न वर्षति।

विदूषकः- यदि न वर्षति तदा न वर्षतु, अहं तु भोजनावसरेऽपि जलं न खादामि अतोऽन्नं वर्षतु?

राजा- अहो! जलाभावे कथमन्नम्?

विदूषकः- ताताभावे यथापत्यम्।

राजा- अश्रद्धेयमेतत्, देवार्चनेन जलम्, जलेन चान्नम्।

---

अच्छा अब महाराज के पास जाकर मैं अपना काम बनाऊँ (आगे बढ़कर तथा देखकर) हाय! हाय! बसन्त ऋतु के अभाव में भी ये आम (अकाल में) कैसे मुकुलित (मज्जरीपूर्ण) हो रहे हैं? यह तो बहुत अनिष्ट सूचक है। मैं मधुरभाषी कंगाल ब्राह्मण हूँ, अतः मैं यह अशुभ सूचना महाराज को नहीं सुनाऊँगा, किन्तु सूचना न देकर मैं अधर्म का (कर्त्तव्य का पालन न करने से पाप का) भागी बनूँगा। हाय! यह कैसा धर्म संकट आ धमका (घूमकर तथा आगे राजा को देखकर) जय हो! महाराज की।

राजा- (देखकर) अजी! भल्लाट! कितने समय से तुम ढूँढे जा रहे हो, सारे उत्सव की समाप्ति तक भी तुम दिखाई नहीं दिये।

टिप्पणी-भिलावा के फल या भाले का नाम भल्लाट है। भल्लमटतीति व्युत्पत्ति। कुछ संहिताओं में एक देव विशेष को भल्लाट कहते हैं।

विदूषक-मैं यहीं तो हूँ महाराज! किन्तु जनसम्बाध (भीड-भाड़) में आप मुझे देख नहीं सके।

राजा- मित्र! यह तुमने ठीक कहा। किन्तु क्या करें पानी नहीं बरस रहा है।

विदू०- यदि पानी नहीं बरसता तो न बरसे (कोई परवाह नहीं) क्योंकि मैं तो भोजन करते समय भी पानी नहीं खाता। अतः पानी के स्थान पर भोजन (अन्न) बरसना चाहिये।

राजा- अरे! पानी के बिना अन्न कैसे हो सकता है?

विदू०- जैसे पिता के अभाव में (मर जाने पर भी) सन्तान रहती है।

राजा- यह बात श्रद्धायोग्य (विश्वास योग्य) नहीं है। क्योंकि देवपूजा से पानी बरसता है और पानी से अन्न होता है।

**विदूषकः**- एवं चेत्तर्हि ममेदं दण्डमर्चतु (दण्डं दर्शयित्वा)-

दण्डमूले स्थितो ब्रह्मा, दण्डमध्ये जनार्दनः।
दण्डाग्रे वसते रुद्रो, दण्डे देवास्त्रयः स्थिताः॥ 31॥

**राजा**- सत्यं वदामि, कार्यमेतत् निभालितं मया, फलं दैवाधीनम्।

**विदूषकः**- कथं दैवाधीनं फलम्? अहं दण्डं प्रहृत्य पातयामि फलम्।

**धावकः**- (प्रविश्य) जयतु-जयतु स्वामी!

**राजा**- अहो! कथं त्रस्तोऽसि धावक! किमपि नूतनं वृत्तम्?

**धावकः**- अस्ति देव!

**राजा**- किं तत्!

---

**अन्वयः**- दण्डमूले ब्रह्मा स्थितः, दण्डमध्ये जनार्दनः (स्थितः), दण्डाग्रे रुद्रः वसते। त्रयः देवाः दण्डे स्थिताः।

**व्याख्या**- दण्डमूले=दण्डारम्भे, ब्रह्मा=चतुराननः, स्थितः=विराजते, दण्डमध्ये=दण्डान्तराले, जनार्दनः=विष्णुः विद्यते, दण्डाग्रे=दण्डशिखरे, रुद्रः=हरः वसते=तिष्ठति। त्रयः=त्रिसंख्याकाः, देवाः=अमराः, अमरानिर्जरादेवास्त्रिदशा विवुधाः सुरा इत्यमरः। दण्डे=मम वक्रलगुडे स्थिताः सन्तीति तमेवार्चयत्विति तात्पर्यम्।

---

**विदू०**- यदि ऐसी बात है तो मेरे दण्डं की आराधना कीजिये (इस प्रकार डण्डा दिखाकर)

हमारे इस दण्ड की जड़ (मूल) में ब्रह्मा जी निवास करते हैं और दण्ड के मध्य में विष्णु जी विराजमान रहते हैं तथा दण्ड के आगे (शिखर पर) भूतनाथ जी (महादेव) का डेरा है, अतः बड़े-बड़ें तीनों देवता इस (टेढ़े मेढ़े) दण्ड में रहते हैं, फलतः इसी की पूजा करें।

**राजा**- मैं सच कहता हूँ, मैंने अपने कर्त्तव्य का पालन (हलाकर्षण कार्य) कर दिया है। फल देना दैव के आधीन है।

**विदू०**-फल दैव के अधीन कैसे? मैं अभी डण्डा मारकर फल गिराता हूँ।

**धावक**- (प्रवेश करके) जय हो महाराज की!

**राजा**- अरे धावक! क्यों भयभीत हो? क्या कोई नया वृत्तान्त है?

**धावक**- है महाराज!

**राजा**- वह क्या है?

**धावकः**:- खम्पाजातीयैर्वनमानुषैः उत्तरेण प्रविश्य ग्राम्यजना आक्रान्ता, ते जाल्मा न केवलं धनं लुण्ठयन्ति अपितु नरानपि खादन्ति। ग्रामानग्निसात् कुर्वन्ति, अचेतनान् पशूनर्धदग्धान् भक्षयन्ति। पिपासातुरास्ते नरोरस्तो रुधिरं पिबन्ति। आयुधसज्जितैस्तैः क्रूरैर्ग्रामवासिनो योद्धुं न शक्नुवन्ति। तद्दग्धग्रामाणां ज्वाला अधुनापि न शाम्यतिं। तद्भयाक्रान्ता ग्राम्यजनाः स्त्रीबालैः सह इतस्ततः पलाय्य प्राणरक्षां कुर्वन्ति। इति श्रुत्वा भवन्तः प्रमाणम्।

**राजा**- आः! एवम्।

**मन्त्री**- धिक्! तान् खम्पान्।

**राजा**- यावदहं धर्मकर्मणि व्यस्तः, तावद् वनमानुषैः क्रूरकर्म आरब्धम्। तस्मादहमधुनैव गत्वा तेषां जीवनलीलां समापयामि। (धावकं प्रति) त्वमितो गत्वा सेनापतिं ज्ञापय यत् सज्जितैः सैनिकैः सहाशु अत्र आगच्छ।

**धावकः**:- एष गतोऽहं देव! (इति निर्गतः)

---

**धावक**- राजन्! खम्पजाति के वनमानुषों ने देश में उत्तर की ओर से प्रवेश कर ग्रामीण लोगों पर आक्रमण कर दिया है, वे धूर्त न केवल धन (सामान) को ही लूटते हैं अपितु मनुष्यों को भी खा जाते हैं। गाँवों में आग लगाते और छटपटाते हुये पशुओं का भक्षण कर जाते हैं। जब उन्हें प्यास लगती है तो वे लोगों की छाती का खून पीते हैं। वे क्रूर लोग हथियारों से सुसज्जित हैं। अतः गाँव के (निहत्थे) लोग उनका सामना (मुकाबला) नहीं कर पाते हैं। उनके द्वारा जलाये गाँवों की लपटें अभी तक नहीं बुझ सकी हैं। उनके भय से आतङ्कित ग्रामवासी स्त्रियों और बालकों को लेकर इधर-उधर भागकर प्राणरक्षा कर रहे हैं। आप जैसा उचित समझें वैसा करें।

**राजा**- आह! ऐसी बात है।

**मन्त्री**- धिक्कार है खम्पों को।

**राजा**-जब तक मैं इधर धार्मिक कार्य (हलोत्सव) में लगा रहा, तब तक उधर वनमानुषों ने अत्याचार प्रारम्भ कर दिया। इसलिये मैं अभी जाकर उनकी जीवन लीला समाप्त करता हूँ। (धावक को देखकर) तुम इधर से जाकर (रहस्य बतलाकर) सेनापति से कहो कि सज्जित सैनिकों के साथ शीघ्र ही इधर आयें।

**धावक**- यह मैं चला महाराज! (इस प्रकार निकल गया)।

**राजा**- महादेवि! अहं वनेचरान् हत्वा यावद् आगच्छामि, तावत् भवती वत्सया सहान्तःपुरं प्रविशतु।

**शान्ता**- शीघ्रमागम्यतां तात! चित्रं दर्शयामि।

**मन्त्री**- (दासीं विलोक्य) राजमातरं मार्गं निर्दिश।

**दासी**- इत-इतो भट्टिनी! (इति शान्तया सह राज्ञी दासी च निर्गता)।

**राजा**- चन्द्रचूड़! भवान् गत्वाऽकालग्रस्तानवेक्षताम्, अहं च समस्यां समाधातुं तत्परः।

**मन्त्री**- यथाज्ञापयति भवान् (इति निष्क्रान्तः)।

**राजा**- भल्लाट! यावदहमरीन् हन्तुं सज्जितोऽस्मि तावद्......।

**विदूषकः**- (उत्पत्य दण्डं च भ्रमयित्वा) अहमपि सज्जितोऽस्मि, अनेन कालदण्डेन दासीपुत्रान् खम्पान् कुट्टयामि।

---

**राजा**- महादेवि! मैं वनेचरों को मारकर जब तक लौटता हूँ, तब तक तुम शान्ता के साथ अन्तःपुर को जाओ।

**शान्ता**- पिताजी! शीघ्र लौटना क्योंकि मै चित्र दिखाऊँगी।

**मन्त्री**- (दासी से) राजमाता को अन्तःपुर का मार्ग बताओ।

**दासी**- इधर से आईये भट्टिनी इधर से (इस प्रकार शान्ता के साथ रानी और दासी निकल गये)।

**राजा**- चन्द्रचूड़! आप जाकर अकालग्रस्तों (पीड़ित जनों) की व्यवस्था करें, और मैं प्रस्तुत समस्या का समाधान करने की तैयारी कर रहा हूँ।

**मन्त्री**- जैसी आपकी आज्ञा (इस प्रकार निकल गया)।

**राजा**- भल्लाट जी! जब तक मैं शत्रुओं को मारने की तैयारी कर रहा हूँ तब तक.......।

**विदू**-, (उच्छलकर डण्डा घुमाकर) मैं भी तैयार हूँ, इस कालदण्ड से दासीपुत्र खम्पों को कूट डालूँगा।

### • ॥ खम्प ॥

वनमानुषों की एक विशेषजाति खम्प कहलाती है। इन लोगों की नाक चिपटी होती है, मुँह चौड़ा और आँखें फटी होती हैं, इनके पैर चौड़े और मोटे होते हैं, इनका कद ठिगना होता, शरीर हृष्टपुष्ट होता है। ये बाल और नाखून नहीं कटवाते, सब प्रकार के संस्कारों से रहित होते हैं। सब प्रकार के मांस को खा लेते और मदिरा पीते हैं। ये पशु और आदमी को भी फाड़कर खा लेते हैं। शिकार

**राजा-** चिरयति सेनापतिः।

**विदूषक-** त्यज्यतां सेनापतिः, अहं चलामि भवता सह।

(नेपथ्ये भेरीणां वीराणां विवादाः)

**राजा-** (आकर्ण्य) सिंहनादं कुर्वन्तो वीरा सज्जिता।

**विदूषक-** (दण्डमुद्दम्य) अयं भोः! अयं ममकालदण्डोऽपि सज्जितः।

**राजा-** वयस्य! त्वमन्नशूरो ब्राह्मणः, मर्त्तुं-मारयितुं न जानन्ति ब्राह्मणाः, अतस्त्वं भोजनालयं प्रविश।

**विदूषक-** (सगर्वम्) न-न भोः! नाहं यादृशस्तादृशो ब्राह्मणः।

---

करना इनका मुख्य कर्त्तव्य है। ये चमड़ा के कपड़े पहनते हैं, ये वनचर झुण्ड बनाकर घने जंगलों की बीहड़ पहाड़ों कन्दराओं और दरों में रहते हैं। इनके हथियार बेढङ्गे होते हैं। ये भूत-प्रेतों तथा विचित्र देवी देवताओं के उपासक होते हैं। जादूटोना पर इनका अटलविश्वास होता है। ये लोग बड़ी श्रद्धा से हवन करते और उसमें मांस की आहुतियाँ देते तथा नरबलि भी चढ़ाते हैं। चीन, भूटान के कतिपय स्थानों में ये पाये जाते हैं। कुछ वर्ष पूर्व इन्हीं खम्प लोगों ने धावा बोलकर नेपाल के कई गाँवों को तहस नहस कर दिया था। अनेक नरनारियों को मार डाला था, तब नेपाल नरेश ने सेना भेजकर इन्हें मार भगाया था। कुछ दिनों से इनमें परिवर्तन आने लगा है सरकारी प्रयत्नों से इन्हें सुशिक्षित बनाकर इनमें मानवोचित गुण विकसित किये जा रहे हैं। अब ये कुछ धंधा व्यवहार भी करते देखे जाते हैं।

**राजा-** सेनापति बहुत विलम्ब कर रहे हैं।

**विदूषक-** सेनापति को छोड़िये, आपके साथ चलने को मैं तैयार हूँ।

(नेपथ्य में विगुल बज जाता है और सैनिक गर्जते हैं)।

**राजा-** (सुनकर) देखो ! सिंहनाद करते हुये मेरे सैनिक तैयार हो रहे हैं।

**विदूषक-** (डण्डा उठाकर) हो! हो! यह हमारा कालदण्ड भी तैयार है।

**राजा-** मित्र ! तुम भोजन खाने के बहादुर (भोजन भट्ट) ब्राह्मण हो। ब्राह्मण मरना-मारना (लड़ना-भिड़ना) नहीं जानते। इसलिये तुम भोजनलय में चले जाओ।

**विदूषक-** (घमण्डपूर्वक) नहीं-नहीं, मैं ऐसा-वैसा ब्राह्मण नहीं हूँ।

**मम हुङ्कारमात्रेण, कम्पते भुवनत्रयम्।**
**करे दण्डमिमं दृष्ट्वा, कुक्करोऽपि न तिष्ठति॥ 32॥**

किं बहुना अस्मात् दण्डात् अहं स्वयमेव बिभेमि।

**राजा-** भोः! महाब्राह्मण ! जानामि तव ब्रह्मवर्चसम् तद् विरम गल्पात्।

**विदूषक-** प्रसीद भोः! प्रसीद, महाराज एष गच्छामि (इति नृत्यन्निर्गतः)।

---

**अन्वयः-** मम हुङ्कारमात्रेण भुवनत्रयं कम्पते। इमं दण्डं करे दृष्ट्वा कुक्कुरः अपि न तिष्ठति।

**व्याख्या-** मम्=ब्राह्मणस्य शूरस्य, हुङ्कारमात्रेण=फटकारमात्रेण, भुवनत्रयम्=लोकत्रयम्, कम्पते=वेपते भयादिति शेषः। इमम्=सर्वप्राणहरम्, दण्डम्= वक्रलगुडम्, मम करे=पाणौ, दृष्ट्वा=वीक्ष्य, कुक्कुरः=सारमेयः, अपि न तिष्ठति=स्थातुं न शक्नोति, का शक्तिर्वनेचराणाम् ?

---

मेरी हुङ्कार मात्र से तीनों लोक काँपने लगते हैं, और मेरे हाथ में इस कालदण्ड को देखकर कुत्ता भी नहीं ठहर पाता। अधिक क्या कहूँ। इस डण्डा (सोंटा) से तो मैं खुद ही काँपता हूँ।

**राजा-**अरे! महाब्राह्मण! देख लिया तुम्हारा ब्रह्मबल, यह अवसर गप्पें लगाने का नहीं है।

**विदूषक-** प्रसन्न होइये, महाराज! (इस प्रकार नाचता हुआ निकल गया)।

**• ॥ महाब्राह्मण ॥**

ब्राह्मणवर्ण अपने में स्वयं ही श्रेष्ठ है, उसको श्रेष्ठ बताने के लिये किसी विशेषण की आवश्यकता नहीं, ऐसी स्थिति में यदि ब्राह्मणपद के पूर्व महापद जोड़ दिया जाये तो वह महाब्राह्मण पद गाली की भाँति निन्दनीय हो जाता है। इसलिये कहा गया है कि -

**शङ्खे तैले तथा मांसे, वैद्ये ज्योतिषिके द्विजे।**
**यात्रायां पथि निद्रायां, महच्छब्दो न दीयते।।**

प्रस्तुत प्रकरण में विदूषक की खिल्ली उड़ाने के लिये राजा ने महाब्राह्मण पद का प्रयोग किया है, स्थूल रूप से तो महाब्राह्मण पद से उत्तम ब्राह्मण ही अर्थ निकलता है जो विदूषक को प्रसन्न करने के लिये कहा गया, परन्तु व्यङ्ग्यार्थ गाली रूप में ध्वनित होता है।

**नेपथ्ये-** पलायध्वं-पलायध्वम्, एते दासीपुत्रा खम्पा आक्राम्यन्ति।

**राजा-** (आकर्ण्य) शिव! शिव! एते दासीपुत्राः खम्पा निरपराधजनान् पीडयन्ति। आः! चिरयति सेनापतिः।

**पुनर्नेपथ्ये**

अब्रम्हण्यम् अब्रम्हण्यम्, एषा राक्षसी सेना परापतति।

**रौद्राक्षिरक्तरसनानखलोमदंष्ट्रा,**
**पुष्टप्रचण्डपदपीवरबाहुदण्डा ।**
**शस्त्रास्त्रजुष्ट बहुरुष्ट-कठोर-धूम्रा,**
**धावत्यसौ कटुचमू वनमानुषाणाम्॥ 33॥**

---

**अन्वयः**-रौद्राक्षिरक्तरसना, नखलोमदंष्ट्रा, पुष्टप्रचण्डपदपीवरबाहुदण्डा, शस्त्रास्त्रजुष्टबहुरुष्टकठोरधूम्रा, वनमानुषाणाम् असौ कटुचमू धावति।

**व्याख्या-** रौद्राक्षिरक्तरसना नखलोमदंष्ट्रा=रक्ताः=अरुणाश्च ताः, रसनाः=जिह्वा इति रक्तरसनाः, रौद्राणि=भीषणानि, अक्षीणि=नेत्राणि, रक्तरसनाः नखानि=नखराणि, लोमानि=रोमाणि केशा इत्यर्थः। दंष्ट्राः=दन्ताश्च यस्याः सेति बहुव्रीहिः। पुष्टप्रचण्ड-पदपीवरबाहुदण्डाः=पुष्टाः=दृढाः, प्रचण्डाः=उत्कटाः, पदाः=चरणाः, पदांघ्रिश्चरणोऽस्त्रिया-मित्यमरः। पीवरबाहुदण्डाः=स्थूलभुजकाण्डाश्च यस्याः सेतिबहुव्रीहिः। शस्त्रास्त्रजुष्ट बहुरुष्टकठोरधूम्रा=शस्त्रास्त्रै=आयुधैः, जुष्टा=युक्ता, चासौ बहुरुष्टा=अतिक्रुद्धा, सा चासौ कठोरधूम्रा=अत्यन्तकज्जलवर्णा च या सेति सर्वत्र बहुव्रीहिः। कठोरादौ गोस्त्रियो-रूपसर्जनस्येति ह्रस्वः। वनमानुषाणाम्=वनेचराणां खम्पानामिति तत्त्वम्। असौ=एषा, कटुचमू=क्रूरसेना, धावति=आपतति, अत्र बन्धवैकट्यादोजोगुणः, रूपकानुप्रासावलङ्कारौ, रौद्रो रसः, वसन्ततिलकावृत्तम्।

---

**नेपथ्य में-** भागो! भागो! ये धूर्त खम्प धावा बोल रहे हैं।

**राजा-** (सुनकर) कष्ट की बात है ये दासीपुत्र वनमानुष निरपराध लोगों को पीड़ित कर रहे हैं।

**पुनः नेपथ्य में-** बचाओ, बचाओ यह राक्षसी सेना धावा बोल रही है।

इनकी लाल-लाल जिह्वायें और आँखें, नाखून, बाल तथा दाढ़ें (दाँत) बहुत ही भयानक हैं। इनके पैर हृष्ट-पुष्ट और उत्कट (कर्कश) हैं। इनकी भुजायें (तरुकाण्ड के समान) बड़ी मोटी-मोटी हैं। काले-काले (मतवाले) ये खम्प लोग हथियारों से सुसज्जित होकर क्रोध में भरे हुये हैं, इनका झुण्ड इधर ही, आक्रमण (धावा) बोल रहा है।

राजा- (श्रुतिमभिनीय) आ! तिष्ठत रे क्षपाटा ! कुत्र सेनापतिः ?

नेपथ्ये- रुद्रदेवता जय-जय काली (इति सैनिकाः गर्जन्ति)।

---

## • शिव

शिव शब्द के कई अर्थ होते हैं। यथा शङ्कर, कल्याण और दुःख। यहाँ पर दुःख प्रकट करने के लिये शिव पद का प्रयोग किया गया है और यह अव्यय पद है। शङ्करपरक शिवपद पुल्लिङ्ग तथा कल्याणपरक नपुंसक है।

## • दासीपुत्र

दासीपुत्र यह एक विशेष प्रकार की गाली है, स्थूल दृष्टि से दासी का लड़का भी दास ही होगा, अतः उसे नीच समझना उचित ही है, उसी नीचता का औपचारिक (व्यवहार) रूप से इतर स्थानों (खम्पादियों) में भी प्रयोग होने लगा। इस पद के साथ एक ऐतिहासिक रहस्य भी छिपा है- प्राचीन काल में जब राजाओं का विवाह होता था तो अन्य सामान की भाँति उन्हें दहेज में दासियाँ (क्वारी कन्यायें या विवाहित नारियाँ) भी मिलती थीं, जनक ने रामादि चारों भाईयों को सौ-सौ दासियाँ दीं। देखिये बाल्मिकीय रामायण का बालकाण्ड- (ददौ कन्याशतं तासां दासी-दास-मनुत्तमम्-बा॰रा॰बा॰का॰ 64 अध्याय)

दासी दास दिये बहुतेरे.....तुलसीकृत रामचरितमानस। इसके पश्चात् राजा लोग स्वयं भी किसी की सुन्दर कन्या को भुजिष्या के रूप में खरीद लेते थे। इन दासियों के साथ रानी से छिपकर राजा तो रमण करता ही था साथ ही राजद्वारं के कर्मचारी कञ्चुकी आदि भी आनन्द लूटते रहते थे, इस प्रकार अनिश्चितपति (चोरपति) से उत्पन्न बच्चे को दासी पुत्र (न कि किसी पिता का पुत्र) कहा जाता था। इस व्यभिचारोत्पन्न बालक को निन्दित समझा जाता था, उसी बात (निन्दा) को प्रकट करने हेतु उक्त प्रयोग चल पड़ा।

## • अब्रम्हण्यम्

अब्रम्हण्यम् अवध्यता (बचाने) के लिये इसका प्रयोग होता है। ब्रह्मणि-आत्मनि साधुरिति ब्रह्मण्यम् न ब्रह्मण्यमब्रह्मण्यम् अर्थात् यह कार्य असाधु अनुचित है।

राजा (सुनकर) ठहरो ! निशाचरों! अरे सेनापति कहाँ हैं?

नेपथ्य में-रुद्रदेवता, जय-जय काली, के नारे सैनिक लगाते हैं।

**धावकः**:- (प्रविश्य) देव! सज्जिताः सैनिकाः द्वारदेशे भवन्तं प्रतीक्षन्ते।

**सेनापतिः**:- (प्रविश्य) जयतु-जयतु देव ! द्वारस्था विजयवाहिनी भवन्तं प्रतिपालयति।

**राजा**- मृत्युञ्जय ! नोदतां सेना देशहिताय ?

**सेनापतिः**:- हतास्ते शत्रवः, विजयानन्तरमविलम्बेनैव राजधानीं प्रति निवर्त्तामहे।

**राजा**- (उत्थाय) आः! तिष्ठत रे खम्पापसदाः! (इति सर्वे निर्गताः)।

(नेपथ्ये रणभेरीगर्जनम्)

(ततः प्रविशन्ति खम्पाः)

**खम्पराजः**:- रे रे खम्पकाः ! अस्मिन् जनपदे पदे-पदे ग्रामाः सन्ति, तत् एकैकशः कृत्वा नामशेषं कुरुत। अनेन क्रमेण एष जनपदः शीघ्रमेव अस्माकं निवासयोग्यं काननं भविष्यति। भीता आर्याधमाः ग्रामान् विसृज्य राजधानीं यास्यन्ति, शून्यग्रामेष्वपि अग्निदाहं कुरुध्वम्। पश्चात् कोपाटोपिता वयम् आक्रम्य सराजां राजधानीमपि धूलीकरिष्यामः--

---

**धावक**- (प्रवेश करके) महाराज ! सैनिक तैयार हो गये हैं, वे सब द्वार पर आपकी प्रतीक्षा कर रहे हैं।

**सेनापति**- (प्रवेश करके) महाराज की जय हो द्वार पर तैयार खड़ी विजयवाहिनी (सेना) आप की प्रतीक्षा कर रही है।

**राजा**- मृत्युञ्जय ! देशहित के लिये सेना आगे बढ़ाइये ?

**सेनापति**- आप अपने शत्रुओं को मरा हुआ ही समझेंगे, हम लोग विजय के पश्चात् अविलम्ब ही राजधानी (चम्पानगरी) को लौट रहे हैं।

**राजा** (उठकर) अरे नीच खम्पो! ठहरो (इस प्रकार सब निकल गये)।

(नेपथ्य में बिगुल बजता है)

(तत्पश्चात् खम्पों का प्रवेश होता है)

**खम्पराज**- अरे! अरे खम्पलोगों ! इस क्षेत्र में कदम कदम पर गाँव हैं, अतः एक-एक करके उन्हें मिटा दो। इस कार्यक्रम से यह क्षेत्र शीघ्र ही हमारे रहने योग्य जंगल बन जायेगा। हम लोगों से डरकर आर्य (हिन्दू) लोग गावों को छोड़कर राजधानी (चम्पानगरी) को भाग ही रहे हैं। तुम लोग शून्य गावों में भी आग लगाते रहो। बाद में क्रुद्ध होकर हम लोग आक्रमण करके राजा के सहित राजधानी को भी धूलि में मिला देंगे। अर्थात् रोमपाद के सहित चम्पानगरी को भी मटियामेट कर देंगे।

मारयामो नृपं तत्र, चूर्णयामश्च सैनिकान्।
भक्षयामो वयं बालान्, एवं राज्यं वनं भवेत्॥ 34॥

(हर्षध्वनिं कृत्वा तदेव गायन्ति नृत्यन्ति च सर्वे)

नेपथ्ये- जयति-जयति रणचण्डी काली,
काल भैरवी तनु विकराली।
जयतु रुद्रदेवो बलशाली,
भूतपिशाच भुजङ्गकपाली॥ 35॥

**खम्पराजः**- किमिंद रे चण्डिल!

**चण्डिलः**- एते ग्रामवासिनो भयात् हाहाकारं कुर्वन्तोनुपलायन्ते। तदाशु एतच्छोणितपानाय आक्राम्यत (इत्याक्रमणाय सज्जन्ते)।

(ततः ससेनो राजा प्रविशति)

---

**अन्वयः**- तत्र वयं नृपं मारयामः, सैनिकान् च चूर्णयामः, बालान् भक्षयामः, एवं राज्यं वनं भवेत्।

**व्याख्याः**- तत्र=चम्पायाम्, वयम्=खम्पाः, नृपम्=भूपम्, मारयामः=हनिष्यामः, सैनिकान्=वीरान्, च=अप्यर्थे जनानपि, चूर्णयामः=मर्दयामः, बालान्=शिशून्, कोमलाङ्गत्वात् भक्षयामः=खादिष्यामः, वर्तमानसामीप्ये वर्तमानवद्वेति सूत्रेण भविष्यकालेऽपि लट्। एवम्=क्रमेण, राज्यम्=अङ्गदेशः, वनम्= काननम् भवेत्=स्यात्।

---

राजधानी में घुस कर राजा रोमपाद को मार डालेंगे, उसके सैनिकों की चटनी बना देंगे। बालकों को खा जायेंगे, इस प्रकार यह देश हमारे रहने योग्य घोर जंगल बन जायेगा।

(सभी खम्पा हो हल्ला मचाकर गाते और नाचते हैं)

**नेपथ्य में**- रणचण्डी तथा काली देवी की जय हो, भयङ्कर शरीरवाली कालभैरवी की जय हो। भूत, पिशाच, भुजङ्ग और कपाल (मुण्डमाला) को धारण करने वाले महाबलशाली रुद्र देवता की जय हो।

**खम्पराज**- अरे चण्डिल ! यह होहल्ला कैसा हो रहा है ?

**चण्डिल**- ये गाँव के लोग डर के मारे भाग रहे होंगे, सो जल्दी दौड़कर इनका खून पिया जाय (इस प्रकार आक्रमण की तैयारी करते हैं)।

(तत्पश्चात् सेना के सहित राजा का प्रवेश होता है)

राजा- तिष्ठ रे! तिष्ठ, खम्पाधम ! अधुनैव त्वं खड्गखण्डितो नामशेषो भविष्यसि।

सेनापतिः- रे! रे! लुण्ठका आश्वेव युष्मान् मृत्युरालिङ्गति।

खम्पराजः- (वीक्ष्य) अहह ! एते आर्याधमाः स्वयमेव मर्तुमुपस्थिताः। अतः सर्वे खम्पा एतान् निहत्य क्षुत्पूर्तिं कुर्वन्तु।

सर्वे खम्पाः- वाढम्! वाढम्! मारय मारय (इत्याक्राम्यन्ति)।

सैनिकाः- रुद्रदेवता, जय-जय दुर्गे (इति वदन्तो युध्यन्ति)।

खम्पराजः- सहस्व मम खड्गम् (इति राजानं खड्गेन प्रहरति)।

राजा-(स्वं रक्षन्) रे धूर्त! यावन्ममायुधस्त्वां न हन्ति तावदानखशिखं प्रभुत्वं प्रदर्श्यताम् (इति परशुना खड्गं वृश्चति)।

खम्पराजः- (मुद्गरमादाय)- अरे! सहस्व मुद्गरम (इति प्रहरति)।

---

राजा- अरे खम्पाधम! ठहर जा। तू मेरी तलवार से टुकड़े-टुकड़े होकर कथावशेष रह जायेगा।

सेनापति- अरे! अरे! लुटेरों! तुम लोगों को मौत आलिङ्गन करने वाली है, अर्थात् अब तुम सब मरने वाले हो।

खम्पराज- (देखकर) अहह ! ये नीच आर्य (हिन्दू) स्वयं ही मरने के लिये आ गये हैं, अतः सभी खम्प लोग इनको मार-मार कर अपनी भूख बुझा लें।

खम्प- अच्छा जी! हाँ जी ! मारो-मारो इन्हें। (इस प्रकार टूट पड़ते हैं)।

सैनिक- रुद्रदेवता जय-जय दुर्गे (इस प्रकार गर्जते हुये भिड़ जाते हैं)।

खम्पराज- अरे ! नीच मेरी तलवार का प्रहार सहन कर (इस प्रकार तलवार चलाता है)।

राजा- (अपनी रक्षा करते हुये) अरे धूर्त ! जब तक मेरा हथियार तुझे नहीं मारता तब तक तू नाखून से लेकर चोटी (एड़ी से चोटी) तक की बहादुरी दिखा ले (इस प्रकार परशु से तलवार काटता है)।

खम्पसरदार- (गर्जकर) मुद्गर का प्रहार सहन कर (इस प्रकार घुमाकर मुद्गर मारता है)।

**राजा**–(गदाद्वारा तं छित्त्वा) रे वृथाभिमानिन्! यथेच्छसि तथा कुरु।

**खम्पराजः**–(धनुर्बाणमादाय) एष रे! बाणस्तव रुधिरं पिबति (इति बाणान् वर्षति)।

**राजा**- (खड्गं निष्कास्य) रे! रे! वाचाट ! क्षपाट! विधीयतामाशु यद् विधीयताम् (इति खड्गेन धनुश्छिनत्ति)।

**खम्पराजः**- (गदामादाय) अये ! हतक! इयं विकटगदा ते झुण्डं चूर्णयति (इति गदां चालयति)।

**राजा**- (संगर्ज्य) हं हो पुल्कस! बहुक्रीडितं मया, इदानीं त्वं न भवसि (इति खड्गं चालयति)।

**खम्पराजः**- (त्रिशूलं भ्रमयन्) किं जल्पसि? (इति इतस्ततो धावति)।

**राजा**- (वामकरेण त्रिशूलमाच्छिद्य) हर-हर महादेव! (इति गर्जन् समाक्रम्य तच्छिरः खड्गेनावृश्चत्)।

**सेनापतिः**- अरे रे! खम्पकाः! पश्यत पश्यत, हतो वः स्वामी तदायुधानं विसृज्य आत्मसमर्पणं कुरुत।

---

**राजा**- (गदा से मुद्गर को चकनाचूर कर) रे! डींग मारने वाले, तुझे जो कुछ कर मिले वह शीघ्र कर ले।

**खम्पराज**- (धनुषबाण लेकर) अरे! यह बाण तेरा खून पीने आ रहा है। (इस प्रकार बाण बरसाता है)।

**राजा**- (खड्ग निकालकर) रे रे! बकवाद करने वाले निशाचर! तुझे जो कुछ करने को मिले वह शीघ्र कर ले (इस प्रकार तलवार से धनुष काट देता है)।

**खम्पराज**- (गदा लेकर) अरे ! अधम! इस गदा से तेरे शिर की अभी चटनी बनाता हूँ (इस प्रकार घुमा-घुमाकर गदा का प्रहार करता है)।

**राजा**- (गर्जकर) अरे-अरे ! हत्यारे ! मैं बहुत देर से तेरे साथ खिलवाड़ कर रहा हूँ, अब तू नहीं बच सकता (इस प्रकार तलवार घुमाता है)।

**खम्पराज**- (त्रिशूल घुमाता हुआ) क्यों गर्जता है (इस प्रकार इधर-उधर घूमता है)।

**राजा**- (बायें हाथ से उसके त्रिशूल को दबोचकर) हर-हर महादेव (इस प्रकार गर्जकर उसके शिर को तलवार से काट डालता है)।

**सेनापति**- अरे नीच खम्पो! तुम्हारा सरदार मार डाला गया। इसलिये तुम लोग हथियार डालकर आत्मसमर्पण कर दो।

**खम्पाः**—भो आर्यहतकाः ! यावत् युष्माकं रुधिरं न पिवामः तावत्कुतः सन्तोषः (इति परापतन्ति)।

**सैनिकाः**- अरे! कौणपापसदाः! अस्माकमप्यायुधं युष्माकं प्राणान् पातुं त्वरन्ते (इति मिथस्तुमुलं युध्यन्ति)।

**खम्पाः**—(आयुधाँश्चालयन्तः) हन्यतां, हन्यन्ताम्, नैते जीविता गच्छन्तु।

**सेनापतिः**- हे! हे! रणप्रवीणाः सैनिकाः एतेषां क्षुद्राणां मुण्डेषु मृत्युर्नृत्यति, तस्मादेकैकं निष्पीड्य यमातिथिं कुरुत ?

**सैनिकाः**- तिष्ठ रे ! तिष्ठ रे! घातक! (इति धावतो वन्यान् निगृह्य कुट्टयन्ति)।

**सेनापतिः**- राजन्! विजयते भवान्, हतास्ते शत्रवः (इति विजयवाद्यानि वादयन्ते)।

**सैनिकाः**- रुद्रदेवता दुर्गा काली (इति वदन्त एकैकशो विपोथयन्ति)।

**वनेचरः**- हा हा! स्वामिहीनान् कथमस्मान् प्रहरत (इति पलायितुम् आरब्धाः)।

**सैनिकाः**- तिष्ठ रे! तिष्ठ रे! घातुक! (इति धावतो वन्यान् निगृह्य कुट्टयन्ति)

**सेनापतिः**-राजन! विजयते भवान्! हतास्ते शत्रवः (इति विजयवाचानि वादयन्ते)

---

**खम्प**- अरे नीच आर्यों ! जब तक हम तुम्हारा खून नहीं पी लेते हैं तब तक हमको चैन नहीं है (इस प्रकार सैनिकों पर टूट पड़ते हैं)।

**सैनिक**- अरे धूर्त निशाचरों ! हमारे हथियार तुम्हारे प्राणों को पीने के लिये आतुर हैं (इस प्रकार दोनों पक्षों में भयङ्कर युद्ध होता है)।

**खम्प**—(अस्त्र-शस्त्र चलाते हुये) मारो मारो, ये लोग जिन्दा न लौट पायें।

**सेनापति**- मेरे रणशूर सैनिकों ! इन क्षुद्र वनमानुषों के शिर पर मौत नाच रही है, इसलिये एक एक को कुचलकर यमराज का अतिथि बना दो, अर्थात् मौत के घाट उतार दो।

**सैनिक**- रुद्रदेवता दुर्गा काली (इस प्रकार से गर्जते हुये एक-एक की धज्जियाँ उड़ाने लगते हैं)।

**वनेचर**- हाय! हाय! स्वामी से रहित हम लोगों को क्यों मारते हो ? (इस प्रकार वे खम्प (शैरपा) भागने लगते हैं।

**सैनिक**—अरे! हत्यारो! ठहरो-ठहरो ! (इस प्रकार भागते हुये खम्पों को पकड़कर कूटते हैं)।

**सेनापति**- महाराज! आपकी विजय हो गई है क्योंकि आपके शत्रु मारे गये हैं (इस प्रकार विजय के बाजे बजाये जाते हैं)।

**राजा-** मृत्युञ्जय! यद्येवं तर्हि खम्पदलं संशोध्य राजधानीं प्रति विजयवाहिनी नोद्यताम्?

**सेनापतिः-** यथादिशति भवान् (इति तथा करोति)।

**सर्वे सैनिकाः-** रुद्रदेवता दुर्गाकाली (इति गर्जन्तः सराजा सर्वे निष्क्राम्यन्ति)

(ततो मन्त्री महापौरश्च प्रविशतः)

**मन्त्री-** महाराजेन विनेयं नगरी अरण्यानीव दृश्यते।

**महापौरः-** साधूक्तं भवता, भूषणभूषितापि नारी पत्या विना नह्येव शोभते।

**नेपथ्ये-** रुद्रदेवता दुर्गाकाली (इति गम्भीरनादः)।

**मन्त्री-** (उद्घोषमाकर्ण्य) अहो! विजयवाहिनी गर्जति।

**महापौरः-** स एव सिंहनादः समुज्जृम्भते।

**धावकः-** (प्रविश्य) महाभाग! खम्पान् (शेरपाजनान्) विजित्य तदधिगतं विपुलं धनं चादाय ससेनो महाराजः प्रत्यागच्छति।

---

**राजा-** मृत्युञ्जय ! यदि ऐसी बात है तो मरे हुये खम्पदल का शोधन (तलाशी लेकर) विजय वाहिनी को राजधानी की ओर बढ़ाइये।

**सैनिक-**रुद्रदेवता दुर्गाकाली (इस प्रकार गर्जते हुये सैनिक राजा के सहित निकल गये)।

(तत्पश्चात् मन्त्री और महापौर का प्रवेश होता है)

**मन्त्री-** महाराज के बिना यह नगरी अरण्यानी (घोर जंगल) सी दिखाई देती है।

**महापौर-** आपने सर्वथा ठीक कहा, क्योंकि अलङ्कारों से अलङ्कृत भी नारी पति के बिना नहीं शोभित होती है।

**नेपथ्य में-** रुद्रदेवता दुर्गाकाली (इस प्रकार गर्जना होती है)।

**मन्त्री-** (उद्घोष सुनकर) अहो! विजयवाहिनी जैसी गर्ज रही है।

**महापौर-** उसी (सेना) का ही सिंहनाद हो रहा है।

**धावक-**(प्रवेश कर) महोदय! खम्पों को जीतकर तथा उनसे प्राप्त बहुत सा धन लेकर महाराज सेना के सहित आ रहे हैं।

**मन्त्री-** (ससम्भ्रमम्) महापौर ! त्वर्यतां नगरीशृङ्गाराय, आहूयतां गायकवादवृन्दम्, आकार्यतां पुरोहितवर्गः, निवेद्यतां च महादेवी।

**महापौरः-** एष प्रतिष्ठेऽहम् (इति निर्गतः)।

**मन्त्री-** अहो! अद्वितीयपराक्रमो महाराजः, यदल्पकालेनैव खम्पान् हत्वा प्रत्यागतः।

**धावकः-** अतएव तत्सेना विजयवाहिनीति कथ्यते।

(ततः पुरोहितेन सह सपरिकरो राजा प्रविशति)

**पुरोहितः-** कुशेन मार्जयन् आशीर्वादं वितरति-

**शत्रवस्ते क्षयं यान्तु, हिमर्तौ मशका इव।**
**विरुदश्च प्रवर्धेत, शुक्लपक्षे यथा शशी॥36॥**

---

**अन्वयः-** हिमर्तौ मशकाः इव ते शत्रवः क्षयं यान्तु, शुक्लपक्षे शशी यथा (ते) विरुदः च प्रवर्धेत।

**व्याख्या-** हिमर्त्तौ=शरत्काले, हिम+ऋतु इत्यत्र 'आदगुणः' इति सूत्रेण गुणे रपरत्वे चेति हिमर्त्ताविति रूपं सिद्धम्। मशकाः=दंशाः कीटविशेषाः। इव=यथा, ते= भवतः, शत्रवः=अरयः, क्षयम्=नाशम्, यान्तु=प्राप्नुवन्तु, शुक्लपक्षे=सितपक्षे चन्द्रपक्षे इत्यर्थः। शशी=चन्द्रः, यथा=इव, (ते) विरुदः=कीर्तिः, च=अप्यर्थे, प्रवर्धेत= एधेत, विधौ लिङ् आशिषी वा। पूर्णोपमालङ्कारः।

---

**मन्त्री-** (हड़बड़ाहट के साथ) महापौर ! नगरी को सुसज्जित करने के लिये शीघ्रता कीजिये, गाने बजाने वालों को बुलाइये, और विप्रवर्ग को यहाँ लाइये तथा महारानी को भी सूचित कीजिये।

**महापौर-** यह मैं जाता हूँ (ऐसा कहता हुआ निकल गया)।

**मन्त्री-** आश्चर्य की बात है कि महाराज कितने पराक्रमी हैं, जो कि थोड़े ही समय में खम्पों को मार कर वापस लौट आये।

**धावक-** इसीलिये तो महाराज की सेना को विजयवाहिनी (विजय प्राप्त करने वाली सेना) कहा जाता है।

(तत्पश्चात् पुरोहित और परिवार के सहित राजा का प्रवेश होता है)

**पुरोहित-** कुश से राजा के ऊपर जल छिड़कता हुआ आशीर्वाद देता है- हे राजन्! जिस प्रकार शीतकाल में मच्छर मर जाते हैं, उसी प्रकार आपके शत्रु विनाश को प्राप्त हों, तथा जिस प्रकार से शुक्ल पक्ष का चन्द्रमा दिनो दिन बढ़ता है उसी प्रकार आपकी कीर्ति उत्तरोत्तर (दिन दूनी रात चौगुनी) बढ़ती रहे।

**राजा-** (प्रणम्य) गुरूणामाशीः किं किं न साधयति?

**पुरोहित-** महाभाग ! अनेन नियमेन बहु शोभते (इति निर्गतः)।

**मन्त्री-** महाराज! लोकोत्तरवैभवेन वर्धते भवान्, एते नागरिकाः ते पराक्रममभिनन्दन्ति (इति माल्यापर्णं करोति)।

**नागरिकाः-** चिरञ्जीवतु प्रजानाथ ! सनाथोऽयमङ्गदेशो भवतः पराक्रमेण (इति प्रणमन्तो निर्गताः)।

**राजा-**(उपविश्य) चन्द्रचूड़! प्रजापालनं हि राज्ञः परमं तपः, अनावृष्ट्या च प्रजा उत्तरोत्तरं क्षीयते, नैतन्मम हृदयं सहते। किं बहुना खम्पान् जित्वा तद्धनं लब्ध्वापि नान्तरात्मा प्रसीदति। अनया विपत्त्या जनानामन्तमिव पश्यामि, तस्माद्धेतोः स्थितस्य गतिश्चिन्तनीया।

**मन्त्री-** इदं परमं तत्त्वम्।

---

**राजा-** (प्रणामकर) गुरुजनों का आशीर्वाद क्या-क्या नहीं करता?

**पुरोहित-** महोदय! इस शिष्टाचार (नम्रता) के कारण आप बहुत ही सुशोभित हो रहे हैं (इस प्रकार कहता हुआ निकल गया)।

**मन्त्री-** महाराज! लोकोत्तर ऐश्वर्य से आप की वृद्धि हो रही है, ये नागरिक लोग आपके पराक्रम का अभिनन्दन कर रहे हैं, (इस प्रकार नागरिकों की ओर से राजा को माला पहनाता है)।

**नागरिक-** महाराज! आपकी आयु बड़ी हो, प्रजानाथ आपके पराक्रम से यह अङ्गदेश सनाथ हो रहा है (इस प्रकार प्रणाम करते हुये निकल गये)।

**राजा-** (आसन पर बैठकर) चन्द्रचूड़ ! प्रजा की रक्षा करना राजा की मुख्य तपस्या (कर्त्तव्य) है, किन्तु सूखा के कारण सारी प्रजा का दिनों दिन संहार होता जा रहा है, इस बात को मेरा हृदय कभी भी सहन नहीं कर सकता, अधिक क्या कहें खम्पों को जीतकर और उनसे बहुत सा धन प्राप्त करके भी मेरी अन्तरात्मा में सन्तोष (चैन) नहीं हो रहा है। इस भयङ्कर विपत्ति से तो मैं जनता का अन्त (विनाश) जैसा समझ रहा हूँ। अर्थात् इस सूखा से तो ऐसा लगता है कि मानों समस्त लोग मर जायेंगे। अतएव वर्तमान समस्या का समाधान शीघ्र ही खोजना चाहिये।

**मन्त्री-** यह बात सर्वथा न्यायोचित (सारपूर्ण) है।

नेपथ्ये- अब्रह्मण्यम्, अब्रह्मण्यम्, भीषणोऽयं दुर्भिक्षः, क्षुत्पिपासार्दिताः शुष्यामः।

राजा- (आकर्ण्य) कुतोऽयमार्त्तनादः ?

धावकः- (बहिर्गत्वा पुनः प्रविश्य) महाराज ! दिग्दिगन्तेभ्य आगता क्षुत्तृषार्त्ता जनाः शोकनादं कुर्वन्ति।

राजा- प्रवेशयैतान्।

धावकः- यथाज्ञापयति भवान्! (इति निर्गत्य सह जनैः प्रविशति)।

जनाः- (रिक्तपात्राणि दर्शयित्वा) जयतु-जयतु देव!

राजा- असह्या वेदनेयम् भोः ?

ग्रामणी-(करौ वद्ध्वा) दीनदयालो! इयता कालेन सोढा विपत्तिः, अतः परं सोढुं न शक्यते महाराज! वृष्टिहेतवे नानोपायाः क्रियन्ते-

द्वारेषु वीथीषु लुठन्ति बालाः, नग्नाश्च नार्योऽपि हलं वहन्ति।
कुर्वन्ति मर्त्या मखमन्त्रतन्त्रं, तथापि नेन्द्रः प्रकरोति वृष्टिम्॥37॥

अन्वयः- द्वारेषु वीथीषु बालाः लुठन्ति, नग्नाः अपि नार्यः हलं च वहन्ति, मर्त्याः मखमन्त्रतन्त्रं कुर्वन्ति, तथापि इन्द्रः वृष्टिं न प्रकरोति।

व्याख्या- द्वारेषु=द्वाःसु भवनमुखेषु, वीथीषु=प्रतोलीषु, वालाः=बालकाः, लुठन्ति=उल्लुठन्ति, नग्नाः=निर्वस्त्राः, अपि=च, नार्यः=महिलाः, हलम्=लाङ्गलं च वहन्ति=कर्षन्ति, मर्त्याः=नराः, यज्ञमन्त्रतन्त्रम् कुर्वन्ति तथापि=पुनरपि, इन्द्रः वृष्टिं=वर्षां, न प्रकरोति।

नेपथ्य में- बचाओ! बचाओ! यह भयङ्कर अकाल पड़ रहा है, हम लोग भूख प्यास से सूख (तड़प) रहे हैं।

राजा- (सुनकर) यह आर्त्तनाद कहाँ से हो रहा है ?

धावक- (बाहर जाकर और पुनः आकर) महाराज! दिग् दिगन्त से आये हुये भूखे प्यासे लोग हाहाकार मचा रहे हैं।

राजा- इनको शीघ्र ले आओ।

धावक- महाराज! आपकी जैसी आज्ञा (बाहर जाकर मनुष्यों के साथ प्रवेश करता है)।

जन- (खाली बाल्टियाँ और खाली घड़े दिखाकर) महाराज की जय हो !

राजा- आप लोगों को यह (जलाभाव का) भारी दुःख है।

ग्रामणी- (हाथ जोड़कर) दीनों के रक्षक! इतने समय से हम विपत्ति से जूझ रहे हैं, अब सहन करना असम्भव है। महाराज! वर्षा होने के लिये बहुत से उपाय किये जा रहे हैं-

हे राजन् ! पानी बरसाने के लिये बालक द्वारे-द्वारे और गलियों-गलियों में लोट-पोट हो रहे हैं तथा नंगी होकर नारियाँ हल भी जोतती हैं, सब लोग यज्ञ (छोटा हवन) मन्त्रजप जादूटोना भी करते हैं फिर भी इन्द्रदेव पानी नहीं बरसाते।

**श्रमिकः**:- (मुखाग्रेऽञ्जलिं बद्ध्वा) नाथ! अन्नजलाभावे मम बालका अन्तिमश्वासान् भरन्ति, यतोहि दुष्काले श्रमकार्यं न मिलति। (इत्यश्रुपातं करोति)।

**वणिजकः**:- दीनवन्धो ! एतस्मिन् दुर्भरे काले व्यापाराभावात् वयं कङ्कालदशां प्रपन्नाः (इत्युदरं तुलां च दर्शयति)।

**मीनमारः**:- (वामकरेण प्रणम्य) स्वामिन्! वर्षाभावे पल्वलसरित्सरोवरेषु मत्स्या न मिलन्ति, तेन मे वृत्युच्छेदात् बालकेभ्यो भिक्षापि न केनापि दीयते, शरणं ददातु भोः! (इति जालं बडिशं च दर्शयति)।

(ततः प्रविशति शङ्खपुस्तकधारी चन्दनमण्डितः पण्डितः)

**राजा**- (उत्थाय) प्रणम्यते भगवन्!

**पण्डितः**:- स्वस्ति ते भूयात् ! राजन्! सर्वभक्षकोऽयं दुर्भिक्षः, येन न कोऽपि कथां शृणोति, न यज्ञं तनोति, न शिशूनां संस्कारं करोति, कर्मकाण्डहीना विप्रा

---

**मजदूर**—(मुख के आगे अञ्जली बाँधकर) नाथ! रोटी और पानी के बिना हमारे बच्चे अन्तिम साँसे ले रहे हैं, क्योंकि दुष्काल में काम करने को नहीं मिलता (आँसू गिराने लगता है)।

**वनियाँ**- दीनबन्धु ! इस हत्यारे समय में व्यापार (लेन देन) ठप्प हो गया है, अतः भूख प्यास से सूखकर हम ठठरी मात्र रह गये हैं (इस प्रकार पेट और तराजू दिखाता है)

**मछुवारा**- (बायें हाथ से नमस्ते करके) मालिक ! पानी न बरसने से नदियाँ और ताल तलैयाँ सब सूख गये हैं, बाबूजी ! शिकार (मछलियाँ) न मिलने से हमारा धंधा चौपट हो गया है। इस सत्यानाशी समय में मेरे बच्चों को कोई भीख भी नहीं डालता, अतः रक्षा कीजिये (इस प्रकार मछली फँसाने का जाल और वंशी मछली धोने की लकड़ी) दिखाता है।

(तत्पश्चात् शङ्ख और पुस्तक लिये तथा चन्दन लगाये हुये एक ब्राह्मण प्रवेश करता है)।

**राजा** (उठकर) भगवन्! आपको प्रणाम है।

**पण्डित**- आपका कल्याण हो। राजन्! सबका भक्षण करने वाला यह अकाल पड़ रहा है, जिससे न कोई कथा वार्ता सुनता और न ही कोई यज्ञ करवाता, यहाँ तक कि बालकों के संस्कार (मुण्डनादि) भी नहीं कराये जा रहे हैं। अनुष्ठानादि न

अकार्यमपि आरभन्ते, तस्मात् धैर्येण उपायश्चिन्त्यम्। यद्यपि बहवो विप्राः क्षुत्तृड्भ्यामन्धत्वं पञ्चत्वं च गतास्तथापि विपत्तिकाले धैर्यं न त्याज्यम्।

**राजा-** (उपविश्य) अलं बहु वक्तव्येन, श्रुतं यच्छ्रोतव्यम्।

**मन्त्री-** असह्यसमयोऽयमुपागतः।

**राजा-** चन्द्रचूड़! प्राप्तकालमाचरेत्, न कश्चित् विमुखो यातु। तस्मात् कोषाऽऽगारादेभ्यो धान्यं-धनं च वितीर्यताम्।

**मन्त्री** (जनान्तिकं) देव! कोशाद्बारम्बारं धनं वितीर्णम् अतः.........(इति संकुचति)

**राजा-** अलं संकोचेन। यदि कोशो रिच्यते, तदा अस्त्युपायान्तरम्।

**मन्त्री-** अस्ति चिन्ताविषयः।

**सेनापतिः-** प्रतिहतममङ्गलम्।

---

मिलने से ब्राह्मण न करने योग्य भी कार्य (चोरी) करने लगे हैं। इसलिये इसका समाधान धैर्य पूर्वक ढूँढना चाहिये। यह बात सच है कि बहुत से ब्राह्मण भूख प्यास के मारे अन्धे हो गये और बहुत से मर भी चुके हैं, फिर भी धैर्य नहीं छोड़ना चाहिये।

**राजा-** (बैठकर) अब बहुत बोलने से क्या लाभ, जो मुझे सुनना चाहिये वह सुन लिया।

**मन्त्री-** यह बहुत ही असह्य (कठिन) समय आ गया है।

**राजा-** चन्द्रचूड़ ! समय के अनुसार कार्य करना चाहिये। कोई भी प्राणी विमुख न लौटे। इसलिये इन आगन्तुकों के लिये खजाने से धन-धान्य बाँट दो।

**मन्त्री-** (आगन्तुकों से छिपाकर) राजन् ! बार-बार धन बाँटने से खजाना... ........(संकोच करता है)। जनान्तिक लक्षण इस प्रकार है:- अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् (दर्पणः)।

**राजा-** संकोच करना व्यर्थ है। यदि खजाना खाली हो गया है, तो दूसरा उपाय सोचना चाहिये।

**मन्त्री-** यह तो सोचने का विषय बन गया है।

**राजा-** मृत्युञ्जय ! अधिगतं समाधानम्, खम्पेभ्यः प्राप्ता सम्पत्तिरेभ्यो दीनाजनेभ्यो दीयताम्, सचलकूपप्रबन्धोऽत्यावश्यकः, पीड़ितानां सेवा गरीयसी तपस्या।

**सेनापतिः-** यथादिशति भवान्! (इति जनैः सह निर्गतः)।

**राजा-** चन्द्रचूड़! प्रचण्डोऽयं दुर्भिक्षकालः, अस्मादधिकं न सहिष्यते प्रजा। सञ्चितं धनं पूर्णमेव वितीर्णम्। तस्मात्कोशागारस्याऽवलम्बनं निर्मूलम्। कञ्चन् राजानमाक्रम्य धनमर्जनीयमित्यपि न सङ्गच्छते, यतोहि निरपराधे जने आक्रमणं नीतिविरुद्धम्। याञ्चा खलु मरणप्यतिशेते। एवं गम्भीरं विचारयन्नपि शुभलक्षणं न पश्यामि। विषयताटस्थ्यं चात्महननमिव पापाधायकम्। विवशाः जनाः मामाशासन्ते। एतस्मिन्नुल्वणकालेऽपि प्रजा शासनरेखां न मुञ्चति, इति तस्याश्चरित्रस्य परिपक्वतागौरवम्।

**मन्त्री-** अथ किम्! सर्वेषां कर्मणां चरित्रमेव मूलम्, किं बहुना लोकानां प्राणप्रतिष्ठा चरित्र एव वर्तते।

---

**सेनापति-** अमङ्गल दूर हो।

**राजा-** मृत्युञ्जय ! समस्या का समाधान मिल गया, वनमानुषों को जीतकर जो धन प्राप्त हुआ है, उसे इन पीड़ितों के लिये बाँट दो, साथ ही सचल कूपों का प्रबन्ध भी अत्यावश्यक है, अर्थात् स्थान-स्थान पर पानी भी बाँटा जाये। क्योंकि पीड़ितों की सेवा करना सर्वोत्तम तपस्या है।

**सेनापति-** आप की जैसी आज्ञा (इस प्रकार लोगों के साथ निकल गया।)

**राजा-** चन्द्रचूड़! यह बड़ा भयङ्कर दुर्भिक्ष पड़ रहा है। प्रजाजन इससे अधिक कष्ट सहन नहीं कर सकते। इकट्ठा धन तो पहले ही बाँट दिया गया। अब खजाने का भरोसा करना व्यर्थ है। किसी राजा पर आक्रमण करके धनार्जन किया जाये तो वह उचित नहीं, क्योंकि किसी निर्दोष व्यक्ति पर आक्रमण करना न्याय विरुद्ध (घोर अन्याय) माना गया है। यदि किसी राजा से धन माँगा जाये तो भी ठीक नहीं क्योंकि माँगना तो मृत्यु से भी बढ़कर है। इस प्रकार गम्भीरता से विचार करने पर भी कोई शुभ लक्षण (प्रशस्त उपाय) नहीं दिखाई देता। यदि इस समय विषय (प्रजा के दुःख समाधान) से मुख मोड़ लें, तो आत्महत्या के समान घोर पाप लगेगा। पीड़ित लोग विवश होकर मुझ पर ही आशा लगाये हुये हैं। इस विकट सकंट के समय में भी जो प्रजा मर्यादा (शासनसिद्धान्तों) का त्याग नहीं कर रही, अर्थात् लूटपाट नहीं कर रही है, वह उसके दृढ़ चरित्र (ठोस संयम व अनुशासनबद्धता) का अक्षुण्ण महत्त्व है।

**मन्त्री-** आपने ठीक कहा, क्योंकि सभी कर्मों (व्यवहारों) का मूल चरित्र ही तो है। महाराज ! अधिक क्या कहें-मानव मात्र की प्राण-प्रतिष्ठा (जीवनचर्या या अन्तरात्मा) चरित्र में ही विराजमान है-

**सैव जीवति लोकेऽस्मिंश्चरित्रं यस्य जीवति।**
**जीवन्नपि मृतः सैव, चरित्रं यस्य नश्यति॥ 37॥**

**राजा-** यद्यप्यहं स्पशैः प्रजास्थितिं वेद्मि तथापि राजाचारेण पर्यटंय अकालक्षेत्रं दिदृक्षे। निष्फलोपायोऽपि नरः कर्मविरतो मा भूत्।

**मन्त्री-** साधुरयं प्रस्तावः।

**राजा-**कालातिक्रमेण जनाः भूपतावुपेक्षाभावं शङ्कन्ते। तस्मात् देशे आपत्काल-मुद्घोष्य प्रातः प्रस्थानाय रात्रावेव विधानमुपकल्प्यताम्।

**मन्त्री-** अधुनैव मन्त्रिमण्डलं संसूच्य यात्राप्रबन्धं निर्वहामि।

---

**अन्वयः-** अस्मिन् लोके स एव जीवति यस्य चरित्रं जीवति। यस्य चरित्रं नश्यति, सः जीवन् अपि मृतः एव।

**व्याख्या-** अस्मिन् लोके=संसारे, स एव=पुरुषः, जीवति=प्राणिति, यस्य चरित्रम्=आचरणम्, जीवति=प्रोज्ज्वलते, नश्छव्यप्रशान् इति नस्य रुत्वं, सत्वं, श्चुत्वादिकं च। यस्य चरित्रं नश्यति=पतति, सः=नरः, जीवन्=श्वसन् अपि मृतः=निष्प्राण एव सैवेत्युभयत्र सोऽचिलोपे चेत्पादपूरणमिति सुलोपो वृद्धिश्च।

---

इस संसार में वही मनुष्य जीवित है जिसका चरित्र (आचरण) पवित्र है, जिसका चरित्र भ्रष्ट (गिर गया) हो गया है, वह पुरुष जीवित होते हुये भी मृतक (मुर्दा) है। अर्थात् चरित्र ही जीवन का सार है।

**राजा-** यद्यपि मैं गुप्तचरों के द्वारा प्रजा की सारी स्थिति को समझता हूँ, फिर भी राजा का कर्त्तव्य होने के कारण मैं देश में भ्रमण करके ही भुखमरी का निरीक्षण करना चाहता हूँ। उपायों के निष्फल (सार्थक न) होने पर भी कर्मविरत (मुखमोड़ना) नहीं होना चाहिये।

**मन्त्री-** महाराज ! आपका यह प्रस्ताव (प्रोग्राम) बहुत अच्छा है।

**राजा-** ऐसे समय में अधिक विलम्ब होने पर लोग यह सन्देह करने लगते हैं कि राजा प्रजारक्षण में दत्तचित्त नहीं है, अतएव देश में आपत्तिकाल की घोषणा करके प्रातः ही प्रस्थान हेतु रात्रि में तैयारी कर ली जाये।

**मन्त्री-** महाराज! इसी समय मन्त्रिमण्डल को सूचित कर यात्रा का प्रबन्ध करता हूँ।

**कञ्चुकी-** (प्रविश्य) महाराज! भट्टिनी भणति यच्छत्रून् जित्वा प्रत्यागतः आर्यपुत्रः कदान्तःपुरमायाति, राजकुमारी च तात तातेति वदति।

**राजा-** चन्द्रचूड़ ! नूनमयं रविरपि विश्रमितुमस्ताचलं भजति, तद् वयमपि अभ्यन्तरे प्रविशेम। (इति सर्वैःसहोत्थितः)।

**कञ्चुकी-** इत-इतो देव।

(इति परिक्रम्य सर्वे निष्क्रान्ताः)

॥इति तृतीयोऽङ्कः॥

---

**कञ्चुकी** (प्रवेश करके) महाराज! महारानी कह रही हैं, कि शत्रुओं को जीतकर वापस लौटे हुये महाराज अन्तःपुर में कब पधारेंगे, इसी प्रकार राजकुमारी (शान्ता) भी आपको देखने के लिये पिताजी-पिताजी कह रही है।

**राजा-** चन्द्रचूड़ ! निश्चित ही यह सूर्य भगवान् भी (रात समझकर) विश्राम करने के लिये अस्ताचल की ओर जा रहे हैं, अतः हम लोग भी अब भीतर चलें (इस प्रकार सबके साथ उठ खड़ा हुआ)।

**कञ्चुकी-** महाराज ! इधर से आइये, इधर से आइये।

(इस प्रकार घूमकर सब निकल जाते हैं)

॥तृतीय अङ्क समाप्त॥

# ॥चतुर्थोऽङ्कः॥

(ततो ग्राम्यक्षेत्रेषु सपरिकरो राजा प्रविशति)

**राजा-** (परितो वीक्ष्य) शिव! शिव! अनेन प्रचण्डदुर्भिक्षेण जर्जरीकृतं ग्राम्यजीवनम्। रोगग्रस्ता नीरवाः इतस्ततो मन्दं-मन्दं रिङ्गन्ति। क्षुत्पिपासातुरा शिशवो मातरं पितरं चाहूय देहलीषु लुठन्ति। शिशूनामार्तनादमसहमानाः कुञ्चितो दशः पितरो विमुखी भवन्ति। (अग्रे विलोक्य) अहह! एते वृद्धाः जलाशया जलशयोपर्युपविश्य निश्शब्दं रुदन्ति। (पदान्तरे) मलिनवसना एता भद्रनार्यः कूपात् रिक्तपात्राणि निष्कास्य तदुपरि विलम्ब्य भूयो-भूयो विलपन्ति। (अग्रे गत्वा) वत! वत! एते तृषार्त्ताः पथिकाः शुष्कतालुभ्यो वक्तुमपारयन्तो मुखाग्रेऽञ्जलिं निधाय जनान् जलं याचन्ति, जनाश्च शून्यघटादीन् दर्शयित्वा जलाभावं प्रकटयन्ति।

---

## ॥चौथा अङ्क॥

(तत्पश्चात् ग्रामीण क्षेत्रों में परिवार के सहित राजा का प्रवेश होता है)

**राजा-** (चारों ओर देखकर) अत्यन्त दुःख की बात है कि इस प्रचण्ड दुर्भिक्ष ने ग्रामीणों का रहन-सहन चौपट कर दिया है। रोग से व्याकुल लोग मौन होकर इधर-उधर धीरे-धीरे रिंगँ रहे हैं। भूख प्यास से दुःखी बालक माता-पिता को पुकार कर दरवाजे पर छटपटा रहे हैं। बालकों का करुण विलाप न सहने के कारण माता-पिता मुखमोड़ कर अलग चले जाते हैं। (आगे बढ़कर) हाय! हाय! ये बूढ़े लोग पानी की आशा से तालाब के तटपर बैठकर सिसकियाँ भर कर रो रहे हैं। (आगे बढ़कर) अरे ! ये चिथड़े लपेटे हुई बेचारी महिलायें कुआँ से (पानी सूख जाने के कारण) खाली बर्तन (घट, बाल्टियाँ) निकाल कर तथा उसके तट पर बैठकर करुण विलाप कर रही हैं। (आगे चलकर) हा! हा! प्यास से व्याकुल ये पथिक गला सूख जाने से बोलने में असमर्थ होकर केवल मुख के आगे अञ्जलि बाँध कर लोगों से पानी माँग रहे हैं किन्तु वे लोग खाली घटों तथा बाल्टियों को दिखाकर जलाभाव (पानी न होने) की सूचना दे रहे हैं।

**मन्त्री-** सत्यमेव हृदयविदारकमिदं दृश्यम्! मारिता अनेन दुर्भिक्षेण ग्राम्याः।

**राजा-** (अग्रे विलोक्य) अये ! क एते करुणक्रन्दनं कुर्वन्तः पाणिभिः मां प्रणमन्ति ?

**मन्त्री-** सन्ति क्षेत्रिण एते देव!

**राजा-** किमेते कथयन्ति ?

**मन्त्री-** एषां बहवो बालकाः क्षुत्पिपासाभ्यां भूमौ लुठित्वा पञ्चत्वं प्राप्ताः, तत्सर्वं शोकावरुद्धकण्ठेन निवेदयन्ति।

**राजा-** सचलेभ्यः कूपकोशेभ्यो जलमन्नं च वितीर्यतामेभ्यः।

**मन्त्री-** यथादिशति भवान् (इति तथा करोति)।

**राजा-** किमेते पशवः कुर्वन्ति ?

**मन्त्री-** अत्र तृषाकुलाः पशवो जलतृष्णया बारम्बारं तडागं प्रतिगमनागमनं कुर्वन्ति, अन्ततश्चोदभ्रान्तनेत्राः केचन भूपृष्ठे पतित्वा सारवं म्रियन्ते, केचिच्च धावित्वा कूपमुखे मुखानि निक्षिप्य अश्रुविन्दून पातयन्ति। एतच्च गोवृन्दं क्षुत्तृड्भ्यां

---

**मन्त्री-** वास्तव में यइ दृश्य बहुत ही मर्मविदारक है। इस राक्षस रूपी दुर्भिक्ष ने गाँव के लोगों को तो खा ही डाला।

**राजा-**(आगे बढ़कर) अरे! ये करुण विलाप करते हुये कौन लोग हैं जो मुझे हाथों से प्रणाम कर रहे हैं।

**मन्त्री-** महाराज ! ये सब कृषक लोग हैं।

**राजा-** तो ये सब क्या कर रहे हैं ?

**मन्त्री-** इनके बहुत से बच्चे भूख प्यास के मारे पृथ्वी पर छटपटाकर मर गये। इस सारी बात (वेदना) को रूँधे गले से बतला रहे हैं।

**राजा-** सचलकूप और कोषागार से इन सबको रासन पानी बाँट दीजिये।

**मन्त्री-** आपका जैसा आदेश (इस प्रकार सबको रासन पानी बँटवाता है)।

**राजा-** (आगे बढ़कर) ये पशु क्या कर रहे हैं ?

**मन्त्री-** महाराज! यहाँ पर प्यासे पशु पानी की लालसा से तालाब की ओर बार-बार जाते तथा वहाँ पानी न मिलने के कारण वापस लौट आते हैं। अन्त में

पीड़ितं कङ्कालपञ्जरं बहच्छुष्कवृक्षच्छायामाश्रयति, कतिपये च भूमौ विशीर्णा-नितान्तकाष्ठानि चर्वन्ति। जलतृणाभावे मूत्रं पुरीषं चैते नोत्सृजन्ति।

**राजा-** इहापि तृणजलान्यर्पय।

**मन्त्री-** एवमस्तु, गोसेवा सर्वदेवसेवा, यतोहि गोशरीरस्य प्रतिरोम्णि देवाः वसन्ति (इति बुसं जलं वितरति)।

**राजा-** (अग्रे गत्वा) वत ! वत ! महागभीरोऽयं जलाशयः किन्तु वार्यभावात् शून्याकाश इव प्रतीयते-

**जलाशयो निर्जलतामुपेतः, कथावशेषाणि च नीरजानि।**
**जलेचराः दर्दुरकूर्ममीनाः, भूमौ विलीनाः स्वयमेव दीना॥ 38॥**

---

**अन्वयः-** जलाशयः निर्जलताम् उपेतः, नीरजानि च कथावशेषाणि, दर्दुरकूर्ममीनाः दीना जलेचराः स्वयम् एव भूमौ विलीनाः।

**व्याख्या-** जलाशयः=तडागः, निर्जलताम्=वारिहीनताम्, अनावृष्टिवशादिति यावत्। उपेतः= प्राप्तः, नीरजानि=कमलानि, च कथावशेषाणि=कथाःअवशेषाः येषां तानि चर्चाविषयाणीत्यर्थः, जातानि इति शेषः। दर्दुरकूर्ममीनाः=दुर्दुराश्च कूर्माश्च मीनाश्चेति त्रिपदबहुव्रीहिः भेककच्छपमत्स्या इत्यर्थः। दीनाः=विवशाः, जलेचराः जले चरन्तीति विग्रहे उपपदमतिङिति समासे, चरेष्टः इति ट प्रत्यये, तत्पुरुषे कृति बहुलमिति ङेरलुक् वारिचरा इत्यर्थः, स्वयमेव भूमौ=शुष्कपङ्के, विलीनाः=मृताः।

---

आँखें तिलमिलाते हुये उनमें कोई तो भूमि पर गिरकर चिल्लाते (भौं-भौं करते) हुये मर जाते हैं, और कोई दौड़कर कुआँ में मुँह लटकाये हुये (पानी की आशा में) आँसू बहा रहे हैं। यह देखिये गायों का झुण्ड भूख-प्यास से पीड़ित होकर हड्डियों की ठठरियाँ (ढाँचा) वहन करता हुआ सूखे पेड़ों की छाया का आश्रय (सहारा) ले रहा है। कुछ गायें टूटकर भूमि पर गिरी हुई सूखी लकड़ियों को चबा रही हैं, चारा और पानी न मिलने से ये गोबर और पेशाब भी नहीं करती हैं।

**राजा-** इनको भी चारा और पानी चाहिये।

**मन्त्री-** ऐसा भी होना चाहिये। गो सेवा तो सभी देवताओं की सेवा मानी जाती है, क्योंकि गौमाता के रोम-रोम में देवता निवास करते हैं (इस प्रकार सभी गायों को भूसा और पानी दिलवाता है)।

**राजा-** (आगे बढ़कर) खेद है कि बहुत गहरा होने पर भी तालाब, पानी सूख जाने से आकाश की भाँति सूना दिखाई दे रहा है।

यह तालाब सर्वथा सूख गया है, अतः इसके सारे कमल समाप्त हो गये हैं, बेचारे मेंढक, कच्छप और मछलियाँ आदि जल जन्तु स्वयं ही भूमि मे (मरकर) विलीन हो गये हैं। (आगे बढ़कर) यह बिखरा हुआ जैसा क्या दिखाई दे रहा है?

(पदान्तरे किमेतद् विशीर्णं वर्तते?)

**मन्त्री-** अयं ब्रह्मपुरनामको ग्रामः। अत्र सर्वे ब्राह्मणाः एवावसन्, भूकम्पसम्पाते सर्वे गृहास्तथा पतिताः यथा एकं दयालुं ब्राह्मणं त्यक्त्वा शेषाः प्राणान्तमगुः। देव! तस्य ग्रामस्य विकीर्णा एते ध्वंसावशेषा अत्यन्तं भीतिं जनयन्ति।

**राजा-** स ब्राह्मणः कुत्र वर्तते?

**मन्त्री-** एवं श्रूयते यत् देशवासिनां विनाशलीलां विलोक्य जातवैराग्यो मौनं साधयित्वा स तपस्तप्तुं बदरीवनं जगाम।

**राजा-** धन्यः सः, इदमेव परमं कर्त्तव्यं ब्राह्मणस्य (पदान्तरे) अये! कथन्नात्र कोऽपि दृश्यते?

**मन्त्री-** इयं मानवरहिता वसतिरिति तत्त्वं नावैमि।

**राजा-** मन्येऽहमत्रत्या जना जलव्यपायव्यथिताः बालान् पशूँश्चादाय सजलप्रदेशं

---

**मन्त्री-** यह ब्रह्मपुर नामक ग्राम है। इस ग्राम में सब ब्राह्मण ही रहते थे, भूकम्प की चपेट में ये सारे घर इस प्रकार ढह पड़े कि एक दयालु ब्राह्मण छोड़कर सभी ब्राह्मण मर गये, महाराज! उसी विनष्ट ग्राम के फैले हुये खण्डहर अत्यन्त डरावने लग रहे हैं।

**राजा-** वह ब्राह्मण अब कहाँ है?

**मन्त्री-**ऐसा सुना जाता है कि देशवासियों की इस प्रकार की विनाशलीला देखकर उसके हृदय में बड़ा वैराग्य पैदा हो गया, इसलिये वह मौन व्रत धारण करके तपस्या करने हेतु उत्तराखण्ड में बदरिकाश्रम (बदरीनाथ) की ओर चला गया।

**राजा-** धन्य है उस ब्राह्मण को। ब्राह्मण का यही (तपस्या करना) परम कर्त्तव्य है। (आगे चलकर) अरे ! यहाँ पर कोई दिखाई क्यों नहीं दे रहा है?

**मन्त्री-** यह मानव रहित बस्ती क्यों हुई है? इसका कारण समझ में नहीं आता।

**राजा-** मुझे तो ऐसा लगता है कि पानी के बिना व्याकुल होकर यहाँ के लोग बालबच्चों और पशुओं को लेकर किसी सजल स्थान को भाग गये हैं। मनुष्यों

प्रस्थिताः। जनरहितमिदं स्थानं भूतप्रेतसेवितं श्मशानमिव प्रवेशानर्हमस्ति। विकट-संकटे जन्मस्थानं मरणस्थानमिव त्यज्यते-

जननीं जन्मभूमिं च, नरः आपत्सु मुञ्चति।
कोटियोजनदूरेऽपि, गत्वा रक्षति जीवनम्॥ 38॥

**मन्त्री-** राजा अक्षरशः सत्यं देव!

**राजा-** (पदान्तरे) किमिदं दृश्यते?

**मन्त्री-** एतानि शुष्कसस्यानि कम्पन्ते क्षेत्रेषु। निःसाराणि च मत्वा कृषका न लुनन्ति, पशवश्च विदारयन्ति।

**राजा-** नन्वत्र सिञ्चनोपाया न प्रसारिताः?

---

**अन्वयः-** नरः आपत्सु जननीम्, जन्मभूमिं च मुञ्चति, कोटियोजनदूरे अपि गत्वा जीवनं रक्षति।

**व्याख्या-** नरः=मानवः, आपत्सु=विपत्तिषु, जननीम्=मातरम्, जन्मभूमिम्=जन्मस्थानम्, च=समुच्चये, मुञ्चति=त्यजति, कोटियोजनदूरे=अतिदूरदेशे, अपि=किन्नाम अनतिदूरे, अपि=च, गत्वा= पलाय्य, जीवनम्=प्राणान्, रक्षति=पालयति, अर्थात् संसारे आत्मरक्षणं प्रथमं चरणम्।

---

(प्राणियों) से रहित यह सूना स्थान (गाँव) भूत प्रेतों से व्याप्त श्मशान के समान प्रवेश योग्य नहीं है। ठीक है कि घनघोर विपत्ति पड़ने पर लोग जन्मस्थान को मरण स्थान (श्मशान) के समान छोड़ देते हैं-

घोर विपत्ति पड़ने पर मनुष्य जननी और जन्मभूमि को भी छोड़ देता है तथा करोड़ों योजन दूर (चारकोश का एक योजन होता है) भी जाकर अपने प्राणों की रक्षा करता है, अर्थात् प्राणों की रक्षा सर्वोपरि मानी गई है।

**मन्त्री-** महाराज! आपका कथन सर्वथा सत्य है।

**राजा-** (आगे चलकर) यह क्या दिखाई दे रहा है?

**मन्त्री-** सूखा के कारण ये सूखी हुई फसलें खेतों में हवा लू लगने के कारण काँप रही हैं। इसको निःसार (दाना रहित) समझ कर किसान नहीं काट रहे हैं। इसीलिये पशुगण इसको तहस-नहस कर रहे हैं, अर्थात् खा रहे हैं।

**राजा-** क्या यहाँ पर सिंचाई साधनों का प्रसार (बन्दोबस्त) नहीं कराया?

**मन्त्री-** कथन्न प्रसारिताः ? एकैकक्षेत्रे एकैकपातालकूपं निखातं सज्जते, किन्तु तीव्रानावृष्ट्या रुक्षं रसातलं जलं न वमति, गभीराः खनितास्तडागा अपि रिक्तोदकः सन्ति।

**राजा-** अहो ! घोरविपत्तावुपाया न फलन्ति-

**असाध्यानां हि रोगाणां, चिकित्सा निष्फला यथा।**
**तथा घोरविपत्तीनां, नास्ति कापि प्रतिक्रिया॥ 39॥**

(पदान्तरे) ते नरास्तरुमूलानि कथं रुन्धन्ति ?

**मन्त्री-** अस्ति किमपि गूढ़ं कारणम्।

**राजा-** शब्दायस्व ननु।

---

**अन्वयः-** यथा असाध्यानां रोगाणां हि चिकित्सा निष्फला (भवति) तथा घोरविपत्तीनाम् कापि प्रतिक्रिया नास्ति।

**व्याख्या-** यथा= येन प्रकारेण, असाध्यानाम्=कुष्ठादीनाम्, रोगाणाम्=आमयानाम्, हि=निश्चयेन, चिकित्सा=औषधोपचारः, निष्फला=वृथा भवति। तथा=तेन प्रकारेण, घोरविपत्तीनाम्=विकटसंकटानाम्, कापि=काचिदपि, प्रतिक्रिया=प्रत्युपायः, न अस्ति=न भवति। अत्र दृष्टान्तोऽलङ्कारः।

---

**मन्त्री-** क्यों नहीं कराया ? एक एक खेत में एक एक पातालकूप (बौरिङ्गकुआँ) खोदकर तैयार किया गया, किन्तु इस घोर अनावृष्टि के कारण सूखा हुआ पाताल (रसातल) पानी नहीं उगल रहा है। खोदकर बहुत गहरे किये गये तालाब भी खाली पेट (जलहीन) पड़े हुये हैं।

**राजा-** महान् खेद है कि विकट विपत्ति पड़ने पर कोई भी उपाय सफल नहीं होता—

जिस प्रकार असाध्य रोगों पर की हुई सारी चिकित्सा निष्फल हो जाती है, अर्थात् उनका कोई उपचार नहीं हो पाता। उसी प्रकार घोर विपत्तियों को दूर करने के लिये कोई उपाय नहीं है, अर्थात् सभी उपाय विफल हो जाते हैं।

(आगे बढ़कर) वे आदमी पेड़ों को क्यों घेर रहे हैं ?

**मन्त्री-** कोई ठोस कारण होना चाहिये।

**राजा-** अजी! उन्हें बुलाइये।

**मन्त्री (करमुत्थाप्य) अये ! भो! इहागच्छत।**

**जनाः- (प्रविश्य) नमस्ते आर्य!**

**मन्त्री- कथमत्र यूयं शुष्कवृक्षेषु व्यासक्ताः।**

**जनाः- (करौ बद्ध्वा) क्षुत्पीड़िता हतभाग्या वयमन्नाऽभावात्तरुवल्कलान्युत्कृत्योत्कृत्य तच्चूर्णेनोदरं पूरयामः।**

**राजा- (अपरान् प्रति) किं यूयं जन्मान्धाः ?**

**अन्धाः- नहि, नहि, आर्य!**

**राजा- किं तर्हि ?**

**अन्धाः- नाथ! प्रागेव क्षुधया तृषया बाधिता वयम् परं (इति रुदन्ति)**

**राजा- शनैश्शनैरुच्यताम्।**

**अन्धाः- (अश्रूणि प्रमृज्य) किन्तु विकरालभूचालोपद्रवे साम्रेडं तडित्पातैर्बज्रनिर्घोषैश्चास्मासु केचनान्धाः, केचन बधिराः, केचनचाङ्गभङ्गाः रोगग्रस्ता वाभूवन्।**

---

**मन्त्री- (हाथ उठाकर) अरे ! भाई ! तुम लोग इधर आओ।**

**जन- (प्रवेश करके) नमस्ते आर्य!**

**मन्त्री- तुम लोग इन सूखे पेड़ों में क्यों भिड़ (चिपक) रहे हो ?**

**जन- (हाथ जोड़कर) हम सब अभागे लोग भूख से बहुत ही व्याकुल हैं, किन्तु अन्न न होने के कारण इन सूखे वृक्षों का वल्कल (छाल) उखाड़-उखाड़ कर उसके चूर्ण (पीसकर बने बुरादा) से पेट भर रहे हैं।**

**राजा- (दूसरे लोगों से) क्या तुम लोग जन्म से ही अन्धे हो ?**

**अन्धजन- नहीं-नहीं बाबूजी!**

**राजा- तो फिर ?**

**अन्धजन- महाराज! हम लोग भूख प्यास से तो पहले से ही जर्जर हो रहे थे, अर्थात् कमर टूट चुकी थी किन्तु..........(ऐसा कहकर रोने लगते हैं)**

**राजा- धीरे-धीरे कहिये।**

**अन्धजन-(आँसू पोंछकर) किन्तु इस विकट भूकम्प में बार-बार बिजलियाँ गिरने, बादल कड़कने से हम लोगों में किसी की आँखें फूट गईं, कोई बहरे हो गये और किसी के हाथ पैर टेढ़े-मेढ़े हो गये, कई रोगी हो गये।**

**राजा-** एवं तर्हि युष्माकं तरुत्वगेव जीविका?

**अन्धाः-** बाढ़ं महाराज! यदा-कदा शुष्कमार्द्रं वा गोमयं यदि मिलति, पशुमूत्रं वा लभ्यतेऽथवामिषं तदा तेनापि.........(इत्यर्धोक्तो रूदन्ति)।

**राजा-** नापत्तिकाले मर्यादा तिष्ठति, उषस्तिरत्र दिक्-

**सत्यं शौचं धृतिर्धर्मो, बुद्धिरिन्द्रियनिग्रहः।**
**विपत्तौ नहि तिष्ठन्ति, व्याघ्रीं दृष्ट्वा मृगा इव॥40॥**

---

**अन्वयः-**व्याघ्रीं दृष्ट्वा मृगाः इव विपत्तौ सत्यं, शौचं, धृति, धर्मः, बुद्धिः, इन्द्रियनिग्रहः नहि तिष्ठन्ति।

**व्याख्या-** व्याघ्रीम्=सिंहीम्, दृष्ट्वा=विलोक्य, मृगाः=शशादिजन्तवः, इव विपत्तौ=सङ्कटकाले, सत्यम्=ऋतम्, शौचम्=पवित्रता, धृतिः=धैर्यम्, धर्मः=मर्यादा, शास्त्रविहित-कर्मानुष्ठानमिति निष्कर्षः। बुद्धिः=खाद्याखाद्यादि विचारणा। इन्द्रियनिग्रहः=जितेन्द्रियता, नहि=कदापि न, तिष्ठन्ति=पलयन्त इत्यर्थः। अत्र पूर्णोपमा।

---

**राजा-** तब क्या तुम लोग पेड़ों की छाल ही खा-खा कर जीवित रहते हो?

**अन्धजन-** हाँ महाराज ! यदा-कदा यदि सूखा या गीला गोबर मिल जाता या पशुओं का मांस मूत्र मिल जाता है तो उससे भी......(आधी ही बात कह कर रोने लगते हैं)।

**राजा-** ठीक है, उषस्ति ऋषि प्रमाण हैं कि आपत्तिकाल में मर्यादा नहीं ठहरती-

जैसे सिंहिनी को देखकर मृग (वन्यजन्तु) भाग जाते हैं, वैसे ही घोर विपत्ति के आने पर सत्यता, पवित्रता, धीरता, धर्म, बुद्धि और जितेन्द्रियता आदि (संयम) गुण पलायन कर जाते हैं। अर्थात् विपत्तिकाल में मनुष्य मर्यादाओं को तोड़कर स्वेच्छाचरण करने लगता है।

## • ॥ उषस्ति ॥

एक बार कुरुदेश में अकाल पड़ा, भुखमरी फैल गई। चक्र के पुत्र उषस्ति ऋषि जो बड़े धार्मिक विचारों के थे, कहीं जा रहे थे। भूख के मारे उनके प्राण निकलने लगे। उन्होंने हाथी हाँकने वाले एक पीलवान को उर्द खाते देखा और उससे उर्द माँगे। पीलवान ने कहा कि ये तो मेरे जूठे हो चुके हैं आप कैसे खायेंगे? किन्तु उषस्ति द्वारा आग्रह करने पर पीलवान ने जूठे उर्द दे दिये। उषस्ति ने उन्हीं

**मन्त्री-** राजन् ! विपत्तिर्मानवतां लुम्पति।

**अन्धः-** भवान् को महाशयः ?

**मन्त्री-** (राजानं सङ्केत्य) अस्याङ्गदेशस्य रक्षिता महाराजः, प्रजादुःखवारणाय सपरिकरो वः सन्मुखे विराजते।

**मानवाः-** (पादयोः पतित्वा) दीरक्षक! भवतीश्वरस्तिष्ठति तद् भवानेवास्माकं गतिः, प्राणहारिणीयं विपत् किं क्रियतामस्माभिः ?

**राजा-** चन्द्रचूड़ ! एतेषामपि व्यवस्था विधीयताम् ?

**मन्त्री-** यदादिशति भवान्! (इति जलान्नवस्त्राणि ददाति)।

**राजा-** (अग्रे गत्वा) एतच्छुष्कं वनं प्रवातप्रहारैर्मर्मरध्वनिं करोति, पश्य, क्षुत्क्षामकण्ठा विवृतचञ्चवो विहगाः कुलायेभ्योऽधोमुखाः पतन्ति—

---

उच्छिष्ट उर्दों को खा लिया। जब पीलवान ने उन्हें पीने हेतु पानी भी देना चाहा तो उषस्ति ने पानी को जूठा बताकर लेने से मना कर दिया और कहा कि पानी तो जहाँ कहीं भी मिल सकता है, उसके बिना प्राण नहीं जा रहे हैं, किन्तु अन्न तो सर्वत्र सुलभ नहीं, इसके बिना मेरे प्राण जा रहे थे। इत्यादि कह कर चलते बने। इसी को आपद्धर्म कहा गया है, आपत्तिकाले मर्यादा नास्ति।

**मन्त्री-** विपत्ति मानवता को लुप्त कर देती है।

**अन्ध-** आप कौन महोदय हैं ?

**मन्त्री-** (राजा की ओर संकेत कर) इस अङ्गदेश की रक्षा करने वाले राजा (रोमपाद) परिकर के सहित तुम्हारे सामने विराजमान हैं, ये प्रजा का कष्ट दूर करने के लिये आये हैं।

**मनुष्य-** (राजा के चरणों पर गिरकर) दीनदाता! आपमें साक्षात् भगवान् निवास करते हैं, यह बहुत ही बड़ी विपत्ति की घड़ी है। अब हम लोग क्या करें।

**राजा-** चन्द्रचूड़! इनकी भी व्यवस्था कीजिये ?

**मन्त्री-** आपका जैसा आदेश है (इस प्रकार पानी अनाज और कपड़े बाँटता है)।

**राजा-** (आगे बढ़कर) यह तो सूखा हुआ वन है, प्रचण्ड हवा के थपेड़ों की चोटें खाकर वन मर्मर शब्द कर रहा है। देखो ! भूख के कारण शुष्क कण्ठ होकर चोंच फैलाये हुये ये पक्षी घोसलों से नीचे औंधे मुँह गिर रहे हैं।

**शुष्यन्ति बल्लयो विटपैः समेताः, न पत्रपुष्पाणि फलानि शाखाः।**
**कुरुङ्गमानङ्गविहङ्गभृङ्गा, न कापि कुर्वन्ति च शब्दलेशम्॥ 41॥**

**मन्त्री-** सर्वथा भयानकमेतदरण्यम्।

**राजा-** (पदान्तरे) अरे! कुतोऽयं सन्तप्तवातो देहं दहति?

**मन्त्री-** पश्यतु महाराज! अयं सन्मुखे दावानलो लग्नः, प्रचण्डवातसङ्घट्टिता एते वनवेणवः स्फुलिङ्गानुत्सृजन्ति, तेनायमग्निकाण्डः समुदीप्तः। चटचटाध्वनि कुर्वतीयं ज्वलनज्वाला तावदूवनं धक्ष्यति, यावदशेषवनं निःशेषं न भवति। निर्धूमज्वालाभिरालीढमिदं गगनं रक्तमिव वर्षति। दिशः सर्वाः प्रदीप्ता इव प्रतीयन्ते, ततश्च हि नोऽङ्गानि तपन्तीव लगन्ति।

---

**अन्वयः-** विटपैः समेता : वल्लयः शुष्यन्ति, पत्रपुष्पाणि फलानि शाखाः न (सन्ति) कुरङ्गविहङ्गभृङ्गाः च कापि शब्दलेशम् न कुर्वन्ति।

**व्याख्या-** विटपैः=भूरुहैः, समेताः=युक्ता, आलिङ्गिताः वा वल्लयः=लताः, वल्लीतुव्रततिर्लतेत्यमरः। शुष्यन्ति=शुष्काः सन्ति। पत्रपुष्पाणि=दलकुसुमानि, फलानि=खर्जूरादिफलानि, शाखाः=प्रकाण्डाः, च न सन्ति। कुरङ्गाः=हरिणाः, मातङ्गाः=गजाश्च, विहङ्गाः=खगाश्च, भृङ्गाः=द्विरेफाश्चेति द्वन्द्वसमासः। मातङ्गश्वपचे गजे इति मेदिनी, शोकोक्तौ चनाप्रयुक्तदोषः। क्वापि=कुत्रापि, शब्दलेशम्=ध्वनिलवम् सूक्ष्ममपि रवमिति भावः, न कुर्वन्ति=न शब्दायन्त इत्युपजातिः। अनुप्राशसस्य छटा।

---

देखो! वृक्षों पर फैली हुई लतायें वृक्षों के सहित सूख गई हैं। पत्ता, फूल, फल और डालियों के चिन्ह (नाम निशान) भी नहीं रहे। हरिण, हाथी, पक्षी और भौंरों का कहीं थोड़ा भी शब्द (यातायात) नहीं हो रहा है।

**मन्त्री-** यह वन अत्यन्त भयङ्कर लग रहा है।

**राजा-** (आगे बढ़कर) अरे! शरीर को भूनती (तपाती) हुई यह गर्म-गर्म हवा कहाँ से आ रही है।

**मन्त्री-** देखिये महाराज! यह सामने वन में आग लगी हुई है। विकट हवा की टकराहट से रगड़ते हुये इन वनवाँसों से चिनगारियाँ निकलने लगती हैं, जिनसे यह अग्नि भड़क (अग्नि दुर्घटना हो) गई है। चटचट ध्वनि करती हुई यह वनवन्हि की ज्वाला तब तक वन को जलाती रहेगी, जब तक सारा वन समाप्त (भस्म) नहीं हो जाता, धूमरहित लपटों से व्याप्त यह गगनमण्डल मानो खून की वर्षा कर रहा है।

**राजा-** शिव! शिव!! धैर्यविदारकमिदं वातावरणम्, किमधिकम्, यावद् दृष्टिः प्रसार्यते तावत् पिङ्गलवर्णाः ज्वलनज्वालाः ललनभीषणाः दृश्यन्ते। अहो! दूरत एव दिग्दाहो देहं ताम्यति। बहवोऽत्र वन्यजन्तवो ज्वलन्ति येषां पूतिगन्धिर्दिशासु प्रसृत्य सर्वान् क्षोभयति, (पदान्तरे) नूनमत्र गजादयो विशेषप्राणिनोऽग्नौ पचन्ति, उत्कटगन्धादत्र स्थातुं न शक्यते। तदन्यत्र गच्छामः (इत्यन्यत्र गत्वा) अये! किमिदं नदीशरीरम्?

**मन्त्री-** बाढं देव! इयं नदी वर्तते।

**राजा-** एवं चेज्जलं कुत्र?

**मन्त्री-** अनावृष्टिवशान्निर्झराणां व्यपाये इयमपि शरीरशेषा (धूलिशेषा) सम्पन्ना। मूलाभावे सहाया न प्रभवन्ति!

**राजा-** किमभिधानमस्याः?

**मन्त्री-** कृष्णाख्येयं देव!

---

मानों चारों दिशाओं में आग लग रही है। इसीलिये हम लोगों के हाथ पैर जलते हुये जैसे लग रहे हैं।

**राजा-** शिव! शिव! यह तो धैर्यविदारक वातावरण है। अधिक क्या कहें जहाँ तक आँखें पहुँचती हैं, वहाँ तक पीली-पीली लपलपाती हुई भीषण लपटें दिखाई पड़ती हैं। अहो ! धधकती आग की आँच (उष्णता) दूर से ही शरीर को झुलसा (भून) रही है, यहाँ पर बहुत से जंगली जानवर जल रहे हैं, जिनकी दुर्गन्धि दिशाओं में फैल रही है, (आगे बढ़कर) यहाँ तो निश्चित ही कोई हाथी आदि बड़ा जन्तु आग में पक (जल) रहा है, जिसके सुलगने से यहाँ विकट दुर्गन्ध फैल रही है, जिसके कारण यहाँ पर ठहरना कठिन है, अतएव अब अन्यत्र चलना चाहिये, (आगे बढ़कर) अहो! यह क्या नदी का शरीर (ढाँचा) है?

**मन्त्री-** हाँ महाराज! यह नदी है।

**राजा-** तो इसका पानी कहाँ गया?

**मन्त्री-** राजन् ! जब विकट सूखा के कारण झरना सूख गये, तो यह नदी भी धूलि मात्र रह गई, अर्थात् रेता पत्थर ही बच गये हैं, क्योंकि मौलिक स्वत्व न होने पर सहांयकों का (झरनों का) कुछ सामर्थ्य सफल नहीं होता।

**राजा-** इस नदी का क्या नाम है?

**मन्त्री-** राजन्! इसे कृष्णा नदी कहते हैं।

**राजा**- आबालवृद्धप्रसिद्धेयं, पृथूदरा पिपासाकुलेयम्-

नीराशयागतमृतैः पशुभिः प्रकीर्णाः,
शुष्कोदराऽवट- भयङ्करशून्यतीरा।
कृष्णा प्रसार्यवदनं गगनं सतृष्णा,
दीनेव याचति जलं सिकताश्मशेषा॥ 42॥

**मन्त्री**- जलाऽभावान्नामशेषास्ति।

**राजा**- (परिक्रम्य विलोक्य च) अहो! पर्वतो वनस्पतीनामभावे भीषणपिशाचवत् दृष्टिं त्रासयति, तदन्यत्र गन्तव्यम्।

---

**अन्वयः**- नीराशया आगतमृतैः पशुभिः प्रकीर्णा शुष्कोदराऽवटभयङ्करशून्यतीरा सिकताश्मशेषा सतृष्णा कृष्णा वदनं प्रसार्य दीना इव गगनं जलं याचति।

**व्याख्या**- नीराशया=जलेच्छया, आगतमृतै= पूर्वमागताः पश्चात् मृतास्तैः पूर्वकालैकेत्यादि सूत्रेण तत्पुरुषः आयातप्रेतैरित्यर्थः। पशुभिः=जन्तुभिः, प्रकीर्णा=प्रपूर्णा, शुष्कोदराऽवटभयङ्करशून्यतीरा=शुष्कं च तदुदरमिव अवटः=गर्तः, तेन भयङ्करम्=भीषणम्, शून्यतीरम्=निर्जनतटं यस्याः सेति बहुब्रीहिः। सिकताश्मशेषा=बालुकाप्रस्तरावशेषा, सतृष्णा=पिपासातुरा, कृष्णा=कृष्णाख्यानदी, वदनं=गर्तरूपमुखं, प्रसार्य=विस्फार्य, दीना= विपन्ना इव, गगनं=अम्बरं, अत्र अकथितं चेति द्वितीया, जलम्=पानीयम्, याचति=भिक्षते उपमालङ्कारः।

---

**राजा**- हाँ ठीक है। यह नदी आबालवृद्ध प्रसिद्ध है, भारी गर्त वाली यह नदी तृषार्त है—पानी पीने की आशा से आकर (पानी न मिलने से) मरे हुये पशुओं से यह नदी भरी पड़ी है। उदर के समान इसका सूखा हुआ गड्ढा और सुनसान किनारा बड़ा ही भयङ्कर लग रहा है। पानी सूख जाने से इसमें बालू और पत्थर ही शेष रहे हुये हैं। प्यास से व्याकुल होकर यह कृष्णा नदी गड्ढारूपी विशाल मुँह फैलाकर दीनवत् आकाश से पानी माँग रही है।

**मन्त्री**- जल के अभाव के कारण इसका नाममात्र ही नदी है।

**राजा**- (घूमकर और देखकर) अहो ! वनस्पतियों के सूख जाने के कारण यह नग्न पहाड़ भयङ्कर पिशाच की भाँति आँखों में भय पैदा कर रहा है। इसलिये अब अन्यत्र चलना चाहिये।

मन्त्री- यथादिशति भवान्! (इत्युभौ भ्रमतः)।

राजा- चन्द्रचूड़ ! किमियमपि नदी ?

मन्त्री- गोदावरीयं महाराज ? जलाऽभावात्परिचेतुं न शक्यते।

राजा- (पदे गत्वा) अत्र विश्रामार्थं छायापि नास्ति, अतोऽन्यत्र गन्तव्यम् (स्तोकं गत्वा) पश्य! विघटितमूला एते विशाला तरवो भूमौ लुठन्ति।

मन्त्री- स्वामिन् ! पृथुलपरिणाहा एते महावृक्षा उत्पातवेपिता भूमौ स्वपन्ति।

राजा- असह्यविपत्तौ दृढ़मूलं अकिंचित्करं भवति-

**सुबद्धमूलापि विपत्तिकाले, करोति शक्तिर्न सहायकार्यम्।**
**पतन्ति भूमौ गिरयोऽपि शीघ्रं, प्रचण्डभूकम्पविकम्पनेन॥ 43॥**

---

अन्वयः- विपत्तिकाले सुबद्धमूला अपि शक्तिः सहायकार्यम् न करोति। प्रचण्डभूकम्पविकम्पनेन गिरयः अपि भूमौ शीघ्रं पतन्ति।

व्याख्या- विपत्तिकाले=सङ्कटसमये, सुबद्धमूला=सुबद्धं मूलं यस्याः सेति बहुव्रीहिः, दृढ़मूलेति यावत्। अपि=किन्नाम् शिथिलमूलत्वे, शक्तिः=बलम्, सहायकार्यम्=सहयोगम्, न करोति=न रक्षतीत्यर्थः। अर्थान्तरन्यासेन स्वोक्तिं दृढ़यति कविः, यतोहि प्रचण्डभूकम्पविकम्पनेन=प्रचण्डश्चासौ भूकम्प इति प्रचण्डभूकम्पः, तस्य विकम्पनेनेति कर्मधारयगर्भकस्तत्पुरुषः। प्रबलभूचालसञ्चालनेनेति सारः। गिरयः=भूधरा; अपि का कथा वृक्षाणाम् भूमौ=क्वौ, शीघ्रम्=द्रुतम्, पतन्ति=धराशायिनो भवन्ति। उपेन्द्रवज्रा वृत्तम्।

---

मन्त्री- आपकी जैसी आज्ञा (इस प्रकार दोनों आगे बढ़ते हैं)।

राजा- चन्द्रचूड़ ! क्या यह भी नदी है ?

मन्त्री- महाराज! यह गोदावरी नदी है, किन्तु पानी सूख जाने से यह पहचानी नहीं जाती कि यह गोदावरी नदी है।

राजा- (एक कदम चलकर) यहाँ पर तो विश्राम करने के लिये छाया भी कहीं नहीं दिखती, अतः दूसरी ओर चलें (थोड़ा चलकर) देखो! जड़ों से उखड़े हुये ये पेड़ पृथ्वी पर पड़े हैं।

मन्त्री- महाराज! झञ्झावात से हिलाये हुये ये वृहदाकार वाले पेड़ धराशायी बन गये।

राजा- असह्य विपत्ति आने पर मजबूत जड़ (दृढ़मूल) भी अकिञ्चित्कर (निरर्थक) हो जाता है-

(अग्रे गत्वा) एतानि प्रोत्तुङ्गशैलशिखराणि दावाग्निदग्धत्वान्नग्नानि भूत्वा कालिमानं भजन्ति।

**मन्त्री-** सत्यमेतत् ! प्रतप्ता एते गण्डशैलाः पश्यतो जनान् दूरत एव दहन्ति, ज्वालाविदीर्णा पाषाणखण्डा दूरदूरं विशीर्णा सन्ति।

**राजा-** अत्रापि न विश्रामस्थली पश्यामि तदन्यतो गन्तव्यम्।

**रक्षकौ-** इत इतो देव! (इति सर्वे परिक्राम्यन्ति)।

**मन्त्री-** महती खल्वनर्थ परम्परा, एते शर्करिला वाता वेगेन चलितुमारब्धाः, उच्चावचं चैतद् धरातलम्। धूलिधूसरितैर्नेत्रैःपन्थाः न द्रष्टुं पार्यते तच्छीघ्रमेवान्यत्र प्रस्थातव्यम्।

**राजा-**अवितथमाह भवान्! (इति सर्वे त्वरां नाटयन्ति)

**रक्षकः-** न जाने कुत्र शरणं लभ्यते ?

**अपरः-** यत्र समतलं स्यात्।

---

घोर संकट पड़ने पर धनजनादि की प्रबल शक्ति भी सहायता करने में सक्षम नहीं हो पाती। ठीक ही है कि प्रचण्ड भूकम्प से हिलकर बड़े-बड़े पहाड़ भी धराशायी हो जाते हैं। (आगे बढ़कर) आग से जल जाने के कारण पर्वत की ये उच्च शिखरें काली काली हो गई हैं।

**मन्त्री-** महाराज ! आपका कथन सर्वथा सत्य है। ये सन्तप्त शिलाएँ दर्शकों को दूर से जलाने लगती हैं। आग की लपटों से चटके हुये ये पाषाण खण्ड दूर-दूर तक फैले पड़े हैं।

**राजा-** यहाँ पर भी विश्राम योग्य स्थान नहीं है। अतएव अन्यत्र चलना चाहिये।

**रक्षक-** इधर से चलिये महाराज! (इस प्रकार सब घूमते हैं)

**मन्त्री-** यह अत्यन्त अनर्थ की बात है, कि ये कंकड़ धूलि से मिश्रित हवायें चलने लगी हैं, और यह ऊबड़-खाबड़ (ऊँची-नीची) भूमि है। आँखों में धूलि भर जाने से कुछ भी दिखाई नहीं देता, अतः शीघ्र ही अन्यत्र चला जाये।

**राजा-** आप सर्वथा उचित कह रहे हैं। (इस प्रकार शीघ्रता करते हैं)।

**रक्षक-** विश्राम हेतु न जाने कहाँ ठिकाना मिलेगा ?

**दूसरा-** जहाँ पर बराबर भूमि होगी वहाँ पर विश्राम होगा।

**मन्त्री-** राजन्! विश्वसंहाराय कुपितोऽयं भूतविकारः।

**राजा-** अपरिहार्या दुर्भाग्यलीला। अत्र छायापि न नरस्य दृश्यते, कं किं पृच्छेयम्-

वर्षन्ति भास्करकरा ज्वलिता फुलिङ्गान्,
भूः सर्वतस्तपति लौहकटाहतुल्या।
देहं दहन्ति मरुतो जड़जङ्गमानाम्,
नीरं स्वयं कलति भूरिनृषा तृषापि॥ 44॥

(नेपथ्ये मर्मरध्वनिः)

**मन्त्री-** (श्रुत्वा) अहह! ततो हर्हरायमाणः शब्दः श्रूयते, तन्नूनं केनचित् सपत्रतरुणा भाव्यम्। अतस्तत एवोपसर्पणीयम् (इति सर्वे पर्यटन्ति)।

---

**अन्वयः-** भास्करकराः ज्वलितस्फुलिङ्गान् वर्षन्ति, भूः सर्वतः लौहकटाहतुल्या, मरुतः जड़जङ्गमानां देहं दहन्ति, भूरितृषा स्वयं तृषापि नीरं कलति।

**व्याख्या-** भास्करकराः=रविकिरणाः, ज्वलितस्फुलिङ्गान्=प्रदीप्ताग्निकणान्, वर्षन्ति=पातयन्ति, भूः=कुः, सर्वतः=परितः, लौहकटाहतुल्या=लौहकटाहेन=अयः पात्रेण तुल्या, उपमानानि सामान्यवचनैरिति समासः। तपति=दहति, मरुतः=वायवः, जड़जङ्गमानाम्=चेतनाचेतनानाम्, देहम्=शरीरम्, दहन्ति=तपन्ति, भूरितृषा=अति पिपासया स्वयम्=नान्यः, तृषा=पिपासा, प्रथमान्तमेतत्पदम्। अपि=का कथा अन्येषाम्? नीरम्=पानीयम् कलति=अन्वेष्टि। उपमातिशयोक्त्युत्प्रेक्षाणां संसृष्टिः। वसन्ततिलकावृत्तम्।

---

**मन्त्री-** राजन्! सारे संसार को चौपट करने के लिये यह भूत विकार (आँधी भूकम्पादि) क्रुद्ध हुआ है।

**राजा-** अवश्यम्भावी है दुर्भाग्य का खेल, यहाँ पर मनुष्य की छाया भी दिखाई नहीं देती है, भला किससे क्या पूछा जाये-सूर्य नारायण की किरणें चिनगारियाँ बरसा रही हैं। पृथ्वी तो चारों ओर लोहे के कड़ाह के समान तप रही है। अत्युष्ण हवायें मानों जड़ चेतन (सभी) के शरीरों को जलाकर खाक कर डालेंगी। प्यास से अत्यन्त व्याकुल होकर मानो प्यास स्वयं ही पानी ढूँढ (माँग) रही है।

(नेपथ्य में मर्मरध्वनि होती है)

**मन्त्री-** (सुनकर) अहह! उधर से हर्हर शब्द सुनाई दे रहा है अतः इधर कोई हराभरा वृक्ष अवश्य होगा, अब उधर ही चलना चाहिये (सब लोग उधर ही चलते हैं)।

**राजा-** (दृष्ट्वा) अहो ! आसादिता सघना छाया, यदयं वृहदाकारो वटवृक्ष आतपत्रायते। तस्मादिहैव विश्रम्यताम्।

**मन्त्री-** अस्य अधस्तलमपि प्राङ्गणमिव समतलम्।

**राजा-** तत्कुत्राहं विश्रमेयम्?

**रक्षकौ-** इत-इतो देव!

**राजा-** ओ३म! (इत्यासन उपविश्य) कथमस्मिन् वर्षापायेऽपि नायं वटपादपः शुष्यति?(इति वृक्षं पश्यति)।

**मन्त्री-** देव ! वटवृक्षे विलक्षणं क्षीरं विलसति, पल्लवाः स्थूलाः, शाखा विस्तृताः, मूलपञ्जरं चातिगम्भीरम्, तत्राप्यस्य प्रतिशाखं प्रलम्बजटाः भूदरे प्रविश्य मूलतरुं पुष्णन्ति, हरिश्शय्याचायम् तेन नायं शुष्यति, पत्रशातनमपि नान्यैर्वृक्षैः सह भवति।

---

**राजा-** (देखकर) हर्ष की बात है कि सघन छाया मिल गई, क्योंकि यह विशाल आकार वाला बरगद का वृक्ष, आतपत्र (छत्र वा तम्बू) की भाँति तना हुआ खड़ा है, अतः यहीं पर विश्राम करना चाहिये।

**मन्त्री-** इस वृक्ष के नीचे की भूमि भी आँगन के समान समतल (बराबर) है।

**राजा-** अच्छा तो मैं कहाँ पर विश्राम करूँ?

**रक्षक-** महाराज ! इधर आईये।

**राजा-** हाँ ठीक है (आसन पर बैठकर) क्या कारण है कि इतना भारी सूखा पड़ने पर भी यह वटवृक्ष सूखता नहीं है? (इस प्रकार वृक्ष को देखता है)।

**मन्त्री-** महाराज! वटवृक्ष के दूध में अपूर्वशक्ति होती है पत्ते भी मोटे-मोटे होते हैं तथा शाखायें विस्तृत होती हैं, उस पर भी प्रतिशाखा पर लटकने वाली जटायें भूमि के भीतर घुसकर मूलतरु (प्रधानजड़) का पालन करती रहती हैं। इसी के पत्ते पर बालमुकुन्द सोये थे, इसीलिये यह वृक्ष जल्दी सूखता नहीं। अन्य वृक्षों की अपेक्षा इसका पतझड़ देर में होता है।

## • ॥ वटवृक्ष ॥

जब मार्कंडेय ने जलप्लावन देखा था तो उसमें वटवृक्ष के पत्तापर लेटे हुये एक छोटे शिशु को उन्होंने देखा, स्तुति का एक श्लोक-

करारविन्देन पदारविन्दं, मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं, बालं मुकुन्दं शिरसा नमामि।।

**रक्षकः**- अतएवास्य विस्तृताऽऽभोगः सुदूरभूतलमावृणोति।

**द्वितीयः**- ननु सघनच्छायमिमं कथं न कोऽप्याश्रयति?

**प्रथमः**- साधूक्तं त्वया, ममापीदृशी शङ्का।

**राजा**- चन्द्रचूड़! एषा मध्यान्हवेला वर्तते। प्रचण्डचण्डांशुप्रखरैः करैरङ्गारचूर्णमिवाभ्युक्षति, रजोवाहिन उष्णोष्णवाताः शरीरं ग्लापयन्ति, दूरदूरमपि प्राणी न वीक्ष्यते। केवलं तरुपञ्जराणां कटु-कम्पनमेव कर्णमुद्वेजयति, तृणरेणुरूषिताश्चक्रवातशिखा गगनमण्डलं ढौकन्ते। छायाश्रितोऽहं परितो भीषणं वातावरणं पश्यामि (दूरं विलोक्य) विकृतदर्शना मुखानि व्यादाय क एते धावन्ति? (सर्वे पश्यन्ति)

**मन्त्री**-व्याकुला जना शीतलं स्थानमन्विष्यन्ति तर्कयामीति।

---

गीता में भगवान् ने अपने को साक्षात् अश्वत्थ (वटवृक्ष) बताया है- अश्वत्थः सर्ववृक्षाणाम्......। वटवृक्ष का कभी नाश नहीं होता, इसको अव्यय अविनाशी कहा गया- अश्वत्थं प्राहुरव्ययम्। इसके दूध से अनेक रोग दूर होते हैं, इस वृक्ष की शाखाओं से जटायें निकल कर भूमि में घुस जाती हैं, जिनसे अनेक उपवृक्ष (वट) वन जाते है। धार्मिक लोग इसकी पूजा अब भी खूब करते हैं, वटसावित्री वृक्ष एक ऐसी ही आस्था है।

**रक्षक**- अतएव इसका विस्तृत आभोग (फैलाव) दूर तक भूमि को ढाँक रहा है।

**द्वितीय**- अजी! इतना हराभरा तथा छायादार होने पर भी यहाँ कोई क्यों नहीं रहता?

**प्रथम**- भाई तुमने ठीक बात कही, मेरे मन में भी ऐसी ही जिज्ञासा थी।

**राजा**- चन्द्रचूड़ ! यह विकट दोपहरी का समय है। यह प्रचण्डसूर्य तीव्र किरणों (हाथों) से मानों अङ्गारों का चूर्ण बरसा रहा है। धूलि उड़ाकर चलने वाली ये हवायें शरीर को सुखा रही हैं। यहाँ दूर-दूर तक जीवजन्तु दिखाई नहीं देते। केवल सूखे वृक्षों का पञ्जर (ढाँचा) ही काँपकाँप कर कर्णकटु शब्द कर रहा है। कूड़ा और धूलि को लेकर उठे हुये इन चक्रवातों (डण्डूरों) ने गगन मण्डल को ढाँक लिया है। छाया में बैठा हुआ मैं चारों ओर का भीषण (सूनसान) वातावरण भली भाँति देख रहा हूँ। (दूर देखकर) अरे ! मुख फैलाकर ये बेढङ्गे लोग कौन दौड़ रहे हैं? (सब लोग उधर ही देखने लगते हैं)।

**मन्त्री**- महाराज! ये धूप से व्याकुल लोग शीतल स्थान को खोज रहे होंगे, ऐसा मेरा अनुमान है।

**राजा-** आश्वाकारयैतान्!

**रक्षकः-**(हस्तमुद्यम्य) अरे ! भोः! इहागम्यताम्। एष राजा वत्सलो महाराजो वो दिदृक्षते (अग्रे गत्वा) अये भ्रातरः! शृणुत! शृणुत! अत्र सान्द्रच्छाया, इह विश्राम्यत। हुम्! कथम् अश्रुत्वैव पलायिताः।

**राजा-** (रक्षकं वर्जयन्) तिष्ठ भोः! विपत्तिघूर्णिताः हिताहितं न पश्यन्ति-

हिताऽहितं न पश्यन्ति, न शृण्वन्ति शुभाऽशुभम्।
विक्षिप्ता इव मुह्यन्ति, निमग्नाः शोकसागरे॥ 45॥

**मन्त्री-** यथार्थमेतत्। अतो विश्रामः कर्तव्यः (इति सर्वे विश्राम्यन्ति)।

(नेपथ्ये कड़कड़ा ध्वनिः)

---

**अन्वयः-** शोकसागरे निमग्नाः (जनाः) हिताऽहितं न पश्यन्ति, शुभाऽशुभं न शृण्वन्ति, विक्षिप्ताः इव मुह्यन्ति।

**व्याख्या-** शोकसागरे=शोक एव सागरस्तस्मिन्निति रूपकालङ्कारः दुःखसिन्धौ, निमग्नाः=पतिताः (जनाः), हिताऽहतिम्=लाभाऽलाभम्, न पश्यन्ति= न विवेचयन्ति, शुभाऽशुभम्=मङ्गलाऽमङ्गलम्, न शृण्वन्ति=नाकर्णयन्ति, विक्षिप्ता इव=किंकर्त्तव्यमूढ़ा इव मुह्यन्ति=मुग्धा भवन्ति। हिताहितं लाभालाभमित्यत्रद्वन्दसमास, एकवद्भावश्च, उपमालङ्कारः।

---

**राजा-** इनको शीघ्र ही इधर बुलाइये ?

**रक्षक-** (हाथ उठाकर) अजी ! इधर आइये। यह प्रजापालक महाराज तुम लोगों को देखना चाहते हैं (आगे बढ़कर) अरे भाई ! सुनो ! सुनो ! यहाँ पर सघन छाया है, यहाँ आकर विश्राम कर लो। अरे ! मेरी बात बिना सुने ही तुम लोग भागे जा रहे हो।

**राजा-** (रक्षक को मना करते हुये) रहने दो। मत बुलाओ। विपत्सागर में डूबते हुये लोग लाभ हानि नहीं समझते-

विपत्ति रूपी सागर में डूबते हुये लोग लाभ हानि और अच्छा बुरा कुछ नहीं समझ पाते, केवल पागलों की भाँति किङ्कर्त्तव्यविमूढ़ (स्तब्ध) रह जाते हैं।

**मन्त्री-** यह बात सर्वथा सत्य है। इसलिये विश्राम करना चाहिये। (इस प्रकार सब लोग विश्राम करने लगते हैं)।

(नेपथ्य में कड़कड़ शब्द होता है)

राजा- कुतोऽयं निर्मानुषे प्रचण्डघोषः? (सर्व इतस्ततः पश्यन्ति)

मन्त्री- किमितस्ततः पादपाः पतन्ति?

रक्षकौ- (उत्थायेतस्ततः पश्यन्तौ) स्पष्टं न ज्ञायते कारणम्।

राजा- प्राणिमात्राऽभावे किमिदमललम् अललं भवति?

(पुनर्नेपथ्ये स एव ध्वनिः)

सर्वे- (सातङ्कम्) किमयं न्यग्रोधपादप एव पतति, तदन्यत्र गन्तव्यम्।

नेपथ्ये- रे! रे! पलाय्य कुत्र यास्यथ, सपरिकरं त्वामधुनैव भक्षयामः।

राजा- अहो! मामेवाक्षिपत्ययम्, तदवश्यमेवात्र पिशाचस्तिष्ठति।

रक्षकौ- पूर्वमेवावाभ्यां शङ्कितम्।

---

राजा- इस सूनसान (निर्जन) में यह प्रचण्ड शब्द कहाँ से हो रहा है? (सब इधर उधर देखते हैं)।

मन्त्री- क्या इधर-उधर के पेड़ (हवा से) फट रहे हैं?

रक्षक- (उठकर तथा इधर-उधर देखते हुये) कोई स्पष्ट कारण नहीं ज्ञात हो रहा है।

राजा- रहने दो, हो गया। तुम दोनों विश्राम करो (इस प्रकार सब लोग पुनः विश्राम करने लगते हैं)।

(नेपथ्य में फिर से अललम्-अललम् शब्द होता है)

राजा- इस निर्जन स्थान में कोई प्राणी तो है नहीं, फिर यह अललम्-अललम् शब्द कैसे हो रहा है?

(फिर नेपथ्य में वही ध्वनि होती है)

सब लोग- (आतङ्कित होकर) क्या यह वट वृक्ष ही फट रहा है, अतः अन्यत्र दौड़ चलना चाहिये।

नेपथ्य में- अरे! अरे! भागकर कहाँ जाओगे। अभी-अभी तुझे परिवार (नौकर चाकर) के सहित खा रहा हूँ।

राजा- अरे! यह शब्द तो मेरे ऊपर ही आक्षेप कर रहा है। अतः यहाँ पर कोई पिशाच अवश्य रहता है।

रक्षक- हम दोनों ने पहले ही ऐसी शङ्का की थी।

राजा- एवं चेद्दीयतां मे खड्गः ?

रक्षकः- खड्गं ददाति।

राजा- (खड्गमाकृष्य) रे! रे! पिशाचाधम! सम्प्रत्येव त्वां यमालयं प्राहिणोमि (इति खड्गमुत्तोलयति)।

नेपथ्ये

अद्य त्वां सेवकैः सार्धं, सभार्यो भक्षयाम्यहम्।
ततस्ते निखिलं राज्यं, धूलिशेषं करोम्यहम्॥ 46॥

मन्त्री- नूनं मायावी राक्षसो राक्षस्या सह न्यग्रोधशिखरे प्रच्छन्नस्तिष्ठति (इति सर्वे विभ्यति)।

राजा- एवं चेद्दीयतां मे धनुर्बाणश्च।

रक्षकः- धनुर्वाणौ ददाति।

---

अन्वयः- अद्य सभार्यः अहं सेवकैः सार्धं त्वां भक्षयामि, ततः अहं ते निखिलं राज्यं धूलिशेषं करोमि।

व्याख्या- अद्य=इदानीम्, सभार्यः=राक्षसी सहितः राक्षसः, सेवकैः=भृत्यैः, सार्धम्=सह, सहयुक्तेऽप्रधाने इति सूत्रेण सेवक पदे तृतीया, त्वाम्=रोमपादम्, भक्षयामि=खादामि, ततः=पश्चात्, अहं=राक्षसः राक्षसवचनत्वात् अहमिति द्विरुक्तिर्न दोषः। ते=तव, निखिलम् राज्यम्=समस्त देशम्, धूलिशेषम्=प्राणिरहितम् निर्जनमिति यावत् करोमि।

---

राजा- ऐसी बात है तो मेरी तलवार लाओ।

रक्षक- तलवार देता है।

राजा- (म्यान से तलवार खींचकर) रे! रे! पिशाच! अभी तुझे यमालय में भेजता हूँ, अर्थात् मौत के घाट उतारता हूँ। (इस प्रकार तलवार उठाता है)।

नेपथ्य में- मैं अपनी भार्या (राक्षसी=चुड़ैल) से युक्त होकर तुझे नौकर चाकर के सहित अभी खा रहा हूँ। उसके बाद तेरा सारा राज्य (चौपटकर) धूलि में मिला दूँगा।

मन्त्री-निश्चित ही कोई मायावी राक्षस राक्षसी के साथ इस वटवृक्ष की शिखर (चोटी) पर छिपा हुआ है (सब लोग भयभीत होते हैं)।

राजा- यदि ऐसी बात है, तो मेरा धनुष बाण लाओ।

रक्षक- धनुष और बाण देता है।

**राजा-** (गृहीत्वा सन्धाय) अहो ! क्षपाट ! अधुना त्वं सा च न भवति-

**एष आग्नेयवाणोऽमुं, रक्षयित्वा वनस्पतिम्।**
**केवलं राक्षसीं त्वां च, भस्मीभूतं करिष्यति।। 47।।**

(इति प्रहर्त्तुमिच्छति)

(ततः प्रविशति राक्षसो राक्षसी च)

**राक्षसः-** अलमलं राजन्!

**राक्षसी-** बाणं संहर, संहर, प्रभो!

**राजा-** (बाणं संहृत्य) कस्त्वं वृक्षवासी ?

**राक्षसः-** राजन् ! अहं दुर्भिक्षो नाम राक्षसः, मम भार्या च इयमनावृष्टिर्हि राक्षसी। यत्र-यत्रेयं याति तत्र तत्राहमनुसरामि। सम्प्रतीयं तव देशे तिष्ठति।

---

**अन्वयः-** एषः आग्नेयबाणः अमुम् वनस्पतिम् रक्षयित्वा, केवलम् राक्षसीम् त्वाम् च भस्मीभूतम् करिष्यति।

**व्याख्या-** एषः=अयम्, आग्नेयबाणः=पावकशरः, अग्निर्देवतास्येत्यर्थे अग्नेर्ढक् इति सूत्रेण ढगेयादेशश्च। अमुम्=दृश्यमानम्, वनस्पतिम्=वटवृक्षम्, रक्षयित्वा=त्यक्त्वेत्यर्थः, केवलम्=एकम् यथा स्यात्तथा राक्षसीम्=निशाचरीम्, त्वाम्=निशाचरं च, भस्मीभूतम्= भूतिमात्रम् अभस्म भस्म सम्पादितमिति च्विप्रत्यये टिलोपे दीर्घे च, करिष्यति=विधास्यति।

---

**राजा-** (लेकर और धनुष पर बाण चढ़ाकर) अरे ! निशाचर! अब तू और वह (राक्षसी) दोनों ही नहीं रहोगे-

यह मेरा अग्निबाण इस वटवृक्ष को सुरक्षित रखता हुआ केवल राक्षसी के सहित तुझे भस्म कर देगा (इस प्रकार बाण चलाना चाहता है)।

(तत्पश्चात् राक्षस और राक्षसी का प्रवेश होता है)

**राक्षस-** बस, बस राजन्! बाण मत चलाइये।

**राक्षसी-** महाराज! धनुष से बाण उतारिये, उतारिये।

**राजा-** (बाण सिमेट कर) बोलो! पेड़ पर रहने वाले तुम कौन हो ?

**राक्षस-** राजन्! मैं दुर्भिक्ष नामक राक्षस हूँ और इस मेरी भार्या (राक्षसी) का नाम अनावृष्टि है, यह मेरी प्रियतमा जहाँ-जहाँ जाती (डेरा डालती) है, वहीं-वहीं मैं भी इसका अनुसरण करता हूँ। इस समय पर यह आपके देश में डेरा डाले हुये है।

**राजा**- कस्यादेशान्मम देशे तिष्ठति? अधुनैव युवां व्याहन्मि (इति करवालमुत्तोलयति)।

**राक्षसः**- (शिरो नमयित्वा) ब्रह्मशापात्ते राज्ये राजन् निवसामि, न खलु ममापराधः।

**राजा**- वृथा लपसि रे ! नाहं केनापि शप्तः कदाचित्।

**दुर्भिक्षः**- विस्मृतं भवता।

**राजा**- एवं चेत्तर्हि कथं न वदसि त्वमेव?

**दुर्भिक्षः**- श्रूयताम् राजन्! एकदा मृगयामटन् भवान् प्रमादात् जाजलिपालितं मृगं हतवान्। क्रुद्धो जाजलिः "तव राज्यमनावृष्ट्या नश्येत्" इति तुभ्यमशपत्। ततस्त्वत् छन्दसा तुष्टः स ऋष्यशृङ्गागमावधिकं शापं कृतवान्।

**राजा**- (स्मृत्वा) आम् विज्ञातम्। जाजलिकोपोऽत्रकारणम्, किन्तु ध्यायतोऽपि न मे स्मृतिपथमारूढम्।

---

**राजा**- अरे! तू किसके आदेश से मेरे देश में ठहरा है, अभी मैं तुम दोनों को मारता हूँ (इस प्रकार तलवार उठाता है)।

**राक्षस**- (सिर झुकाकर) हे राजन्! ब्रह्मशाप के कारण आपके राज्य में निवास कर रहा हूँ। मेरा कोई अपराध नहीं है।

**राजा**- तू वृथा बकवाद करता है। मुझे कभी भी किसी ने शाप नहीं दिया।

**दुर्भिक्ष**- आप भूल गये हैं।

**राजा**- यदि ऐसी बात है तो तू ही क्यों नहीं बतलाता?

**दुर्भिक्ष**- सुनिये राजन्! एक बार शिकार खेलते हुये आपने भूल से जाजलि मुनि का पालतू मृग मार डाला। तब कुपित होकर जाजलि मुनि ने आपको शाप दिया कि तेरा राज्य अनावृष्टि (सूखा) से नष्ट-भ्रष्ट हो जाये, तत्पश्चात् आपके द्वारा अनुनय विनय करने पर शाप में कटौती करते हुये मुनि ने कहा कि जब तू अपने देश में ऋष्यशृङ्ग (विभाण्डक के पुत्र) को ले आयेगा, तब यह शाप निवृत्त हो जायेगा।

**राजा**- (स्मरण करके) हाँ, समझ लिया, जाजलिमुनि का कोप ही इस अनावृष्टि का कारण है। किन्तु सोचने पर भी इसका स्मरण नहीं हो सका।

**अनावृष्टिः-** हुम्! राजकार्यव्यग्रतया तदत्यन्तं विस्मृतम्।

**राजा-** सत्यं वदसि नक्तञ्चरी!

**अनावृष्टिः-** तस्मात्तन्निर्दिष्टाहं भवद्देशे निवसामि। अत्रोपयुक्ते निर्जने महोच्छ्रायं न्यग्रोधपादपमहं वसतिं कृतवती। राजन्! अस्माद्दक्षिणतोऽस्ति महाश्मशानम्, तत्र ममानुचराः रोग-चौर-दरिद्रान्नृत-कम्प-क्षुत्तृऽन्ध-झञ्झादय उत्पाता वसन्ति, ते च मम सङ्केतेन तव देशे संक्राम्यन्ति। विवृतवदनास्त इदानीमेव सशवाः प्रेतवनं पलायिताः। क्षणानन्तरं ममाहारार्थं रुधिरभाण्डानि वसामिषकण्डोलानि चानेष्यन्ति।

**दुर्भिक्षः-** तदलं कोपेन। नहि मुनिवचनमन्यथा कर्त्तुं शक्यते। ब्रह्मप्रसादाच्च न मे मृत्युः।

**राजा-** प्रागेवोक्तमस्माभिः यद्राजदोषमन्तरेण न प्रजापीड़ा। विधिविडम्बनादेतद्रहस्यं स्मृतिपथात्परिभ्रष्टम्।

---

**अनावृष्टि-** हूँ जी! राजकाज में व्यस्त रहने के कारण आप उस शाप की बात को सर्वथा भूल गये।

**राजा-** यह चुड़ैल सच बोल रही है।

**अनावृष्टि-** इसलिये उस शाप से प्रेरित होकर मैं आपके देश में डेरा डाले हूँ, इस एकान्त स्थान को उपयुक्त समझकर इस उत्तुङ्ग वटवृक्ष पर मैं निवास कर रही हूँ। राजन्! इस स्थान से दक्षिण दिशा की ओर महाश्मशान (मुर्दाभक्षण करने का अड्डा) है, वहाँ पर हमारे अनुचर रोग, चोर, दरिद्र, झूठ, भूकम्प, भूख, प्यास, अन्धक, आँधी, तूफान, भूत, प्रेत, पिशाच, रङ्क, कूष्माण्ड, डाकिनी, बैताल आदि उत्पात रहते हैं। वे सब मेरे सङ्केत से आपके देश में उत्पात करते रहते हैं। वे सब अभी-अभी मुख फैलाये (फाड़े) हुये तथा (कन्धों पर) मुर्दा लादे हुये श्मशान की ओर गये हैं। कुछ देर बाद वे सब (भूत प्रेत) हमारे खाने-पीने के लिये हड्डियों (मनुष्यों की खोपड़ियों) में रुधिर (खून) भरकर और कण्डियों (मनुष्यों की या पशुओं की खालों में) चर्बी तथा मांस भरकर यहाँ पर लायेंगे।

**दुर्भिक्ष-** हे राजन्! इसलिये कोप करना व्यर्थ है, क्योंकि मुनि का शाप मिथ्या नहीं हो सकता। ब्रह्मा के द्वारा वरदान दिये जाने के कारण मुझे कोई मार भी नहीं सकता।

**राजा-** मैंने तो पहले ही कहा था कि राजा के दोष के बिना प्रजा पीड़ित नहीं हो सकती यह भाग्य की विडम्बना ही रही कि यह शाप का रहस्य स्मृति से उतर गया।

**मन्त्री-** राजन्! नात्र कस्यापि दोषः, भवितव्यता क्रीडेयम्-

**राजा-** साधु ते वचनम्-

**नूनं बलवती लोके, दृश्यते भवितव्यता।**
**यद्वशेन सुधां त्यक्त्वा, विषं पिवति मानवः॥ 47॥**

तस्मादितो गत्वा विप्रसभायां मन्त्रणा कर्त्तव्या, एतदर्थम् वेदपारगाः विप्राः पूर्वमेवाऽऽमन्त्रिताः सन्ति, सम्प्रति हि मध्यान्हवेला अवसन्ना; मुकुलितकरो भगवान् भास्करोऽपि पश्चिमाशामुखं चुम्बति। मानुषरहितं भीषणमिदं स्थानम्, क्षणे-क्षणे व्यसनम्। परितश्चाऽमानुषाणां चङ्क्रमणम्, तस्मादत्राऽस्माकमवस्थानं न शोभनम्।

---

**अन्वयः-** लोके भवितव्यता नूनं बलवती दृश्यते, यद्वशेन मानवः सुधां त्यक्त्वा विषं पिवति।

**व्याख्या-** लोके=संसारे, भवितव्यता=भविष्णुता, नूनम्= ध्रुवम्, बलवती=बलिष्ठा, दृश्यते=विलोक्यते। यद्वशेन=यस्याः प्रेरणया, मानवः=जनः, सुधाम्=पीयूषम्, त्यक्त्वा=हित्वा, विषम्=गरलम्, पिवति=सेवते। कर्त्तव्यमकर्त्तव्यं च भवितव्यताधीनमित्यर्थः अन्यथा कथं पालितमृगमहनिष्यम्।

---

**मन्त्री-** राजन् ! इसमें किसी का दोष नहीं है, यह तो केवल भवितव्यता (होनी) का ही खेल है।

**राजा-** तुम्हारी बात सर्वथा सत्य है-

संसार में होनहार (भावी) बहुत प्रबल होती है, जिसके कारण मनुष्य अमृत को छोड़कर जहर पीने लगता है।

इसलिये इधर से जाकर ब्राह्मणों की सभा में मन्त्रणा करनी है। इस कार्य के लिये वेदवित् ब्राह्मणों को पहले ही आमन्त्रित कर रखा है। इस समय मध्यान्हवेला (दोपहरी) समाप्त हो चुकी है। किरणों को समेटते हुये भगवान् सूर्य भी पश्चिम दिशा की ओर (छिपने) जा रहे हैं। मानव रहित यह स्थान बड़ा ही भयङ्कर है। क्षण-क्षण में आपत्तियाँ आने की सम्भावना है। चारों ओर अमानव प्राणियों (भूतप्रेतों) की दौड़-धूप हो रही है। इसलिये अब हम लोगों का यहाँ ठहरना उचित प्रतीत नहीं होता।

**मन्त्री-** ऋषिपुत्रमानेतुं त्वरापि कर्त्तव्या। तदितः प्रस्थानमेव वरम्। दूरे च तिष्ठति राजधानी।

**नेपथ्ये-** कुत्र स रोमपादः ? येन स्वयं रात्रौ क्लेशिताः स्वयं च विलुप्तः ?

**राजा-** कुत्रेयं कोपगर्जना ?

**दुर्भिक्षः-**(सहसा प्रविश्य) राजन्! त्वयाहूता विप्राः ब्रह्मसभायां कुप्यन्ति। तद्यदि आसूर्यास्त तत्र नोपष्ठिते तदा विप्रास्तुभ्यं शापं दत्वा प्रयास्यन्ति, तस्मादाशु गम्यताम्।

**राजा-** हन्ता भोः! द्वितीयोऽयं बज्रपातः।

**दुर्भिक्षः-** कीदृशः ?

**राजा-** पिशाचराज! त्रिंशद्योजनदूरस्था मे राजधानी, अस्तप्रायं दिनम्, उच्चावचोऽयं पन्थाः, तत्कथमधुनैव सा प्राप्तव्या ?

**दुर्भिक्षः-** एवं चेद्भवन्तः सम्भूय तिष्ठन्तु, अहं च शतहस्तचतुरस्रेण अनेन शवच्छदेन युष्मानावृणोमि ततो लप्स्यते राजधानी (इति शवपटं दर्शयति)।

---

**मन्त्री-** ऋषिपुत्र (शृङ्गी) को राज्य में लाने के लिये शीघ्रता करनी भी अत्यावश्यक है। अतः अब यहाँ से प्रस्थान करना ही समीचीन होगा। राजधानी (चम्पानगरी) भी यहाँ से बहुत दूर है।

**नेपथ्य में-** वह रोमपाद कहाँ है ? जिसने हम लोगों को रात्रि में बुलाकर क्लेशित (परेशान) किया और स्वयं विलुप्त (गायब) है।

**राजा-** यह क्रुद्धगर्जना कहाँ हो रही है ?

**दुर्भिक्ष-** (सहसा प्रवेश कर) राजन्! तुम्हारे द्वारा बुलाये गये सभी ब्राह्मण ब्रह्मसभा में उपस्थित होकर कुपित हो रहे हैं। अब यदि आप सूर्यास्त तक वहाँ उपस्थित नहीं होते, तब वे क्रुद्ध ब्राह्मण आपको शाप देकर वापस चले जायेंगे। अतः आप शीघ्र ही वहाँ जाइये।

**राजा-** अहो ! यह मेरे ऊपर दूसरा वज्र प्रहार है।

**दुर्भिक्ष-** कैसा ?

**राजा-** पिशाचराज! यहाँ से तीस योजन (एक सौ बीस कोस) दूरी पर मेरी राजधानी (चम्पानगरी) है, दिन भी समाप्तप्राय है, और मार्ग भी बहुत उबड़-खाबड़ है। अतः इसी समय राजधानी कैसे मिल सकती है ?

**दुर्भिक्ष-** यदि ऐसी बात है तो आप सब लोग इकट्ठे होकर (झुंड बनाकर) बैठ जायें, और मैं इस सौ हाथ लम्बे-चौड़े कफन से सबको ढाँकता हूँ। तब सब लोग राजधानी में पहुँच जाओगे (इस प्रकार कफन दिखलाता है)।

**रक्षकः**- (अपवार्य) विजय! नूनमयमनेन छलेन खादिष्यति।

**विजयः**- जय भ्रातः! अनिवार्योऽयं मृत्युकालः।

**राजा**- (मन्त्रिणं वीक्ष्य) किं विवक्षति भवान्?

**मन्त्री**- (अपवार्य) राजन्! अत्र दुर्भिक्षभयम्, तत्र शापभयम्, उभयोः प्रथमं प्रतिविधेयं नान्तिमम्। तस्मात् यथैष वदति तथैव क्रियताम्।

**राजा**- राक्षसराज! मित्रस्य तव वचोऽपरिहार्यम्। वयमत्र नेत्राणि पिधाय समवेताः (इति सर्वे सम्भूय तिष्ठन्ति)।

**दुर्भिक्षः**- श~~च्छदं प्रसार्य सर्वानाच्छाद्य निष्क्रान्तः।

**सर्वे**- (नेत्राण्युन्मील्य) अहो! इयं राजधानी, इदं सभामण्डपम्।

**राजा**- अहो! राक्षसेऽप्यलौकिकप्रभावः, येन क्षणादेव वयमत्र प्रापिताः।

---

**रक्षक**- (आड़ करके) भैया विजय! यह राक्षस इस जालसाजी से निश्चित ही हम सबको खा लेगा।

**विजय**- जय भाई! वस्तुतः यह मौत की घड़ी आ पहुँची है।

**राजा**- (मन्त्री की ओर देखकर) इस परिस्थिति में आप क्या कहना चाहते हैं।

**मन्त्री**- (आड़ करके) राजन! इधर दुर्भिक्ष का भय है, उधर शाप का भय है, दोनों में पहले का तो (राक्षस से लड़कर) निवारण भी किया जा सकता है, अन्तिम (विप्रशाप) का समाधान नहीं है। इसलिये यह भूत जो भी कहता है वही करना चाहिये।

**राजा**- राक्षसों के सम्राट्! आप जैसे मित्र की बात का अपलाप (खण्डन) नहीं किया जा सकता है। लो, हम सब लोग आँखें मूँद कर यहाँ पर (झुण्ड के रूप में) इकट्ठे हैं (इस प्रकार नेत्र बन्दकर झुंड बनाकर बैठ जाते हैं)।

**दुर्भिक्ष**- कफन को फैलाकर उससे सबको ढँककर निकल गया।

**सब लोग**- (आँखें खोलकर आश्चर्यपूर्वक) अजी! यह तो राजधानी है, और यह सभागार है।

**राजा**- अहो! राक्षस होते हुये भी इसका इतना विलक्षण प्रभाव कि जिसने हम लोगों को क्षण मात्र में यहाँ (चम्पानगरी) में भेज दिया।

**मन्त्री-** श्मशानवासिनामघोरसिद्धयः प्रपद्यन्ते।

**विप्राः-** (राजानं विलोक्योत्थाय च) दीर्घजीवी राजन् ! यत् कीर्तित एव भवानुपस्थितः।

**राजा-** (प्रणम्योपविश्य च) भूदेवाः! एतदर्थं भवन्त आयासं प्रापिताः यत् प्राणहारिणीयमनावृष्टिर्वर्तते, कृताश्चोपायाः सफलाः न भवन्ति, तन्निवारणाय कमप्यमोघमुपायमुपदिशन्तु गुरवः। प्रजानिरीक्षणावसरे निर्जने श्मशाने वटवासिनैकेन पिशाचेन स्मारितम् यत् यावदङ्गदेशे विभाण्डकसुत ऋष्यशृङ्गो नायाति तावन्न सुभिक्षम् इति तमानेतुमामूलचूलं प्रयत्नं तन्वन्तु।

(सर्वे विप्राः परस्परं मुखं पश्यन्ति)

**मुदगलः-** राजन् ! सत्यमाह भवान्! किन्तु इह संसारे सर्वेषां प्रेष्ठाः प्राणाः सन्ति। इयमवनिश्च राजन्यैः पाल्यते। दीनस्वभावा ब्राह्मणा हि विषयवासनां विहाय शान्तेष्वाश्रमेषु तपोमयं जीवनं यापयन्ति। बालब्रह्मचारी कोपमूर्तिः स ऋषिः कुत्रानुसन्धेयः

---

**मन्त्री-** श्मशान में रहने वाले ऐसे लोगों (भूत प्रेतों) को अघोर सिद्धियाँ (शङ्कर जी द्वारा प्रदत्त शक्तियाँ) प्राप्त हुई रहती हैं।

**विप्र-** (राजा को देख और उठकर) अहो ! आप बड़े दीर्घजीवी हैं, जोकि नाम लेते ही आप उपस्थित हो गये।

**राजा-** (प्रणाम कर तथा बैठकर) ब्रह्मदेवो ! मैंने आप लोगों को यहाँ बुलाकर इसलिये कष्ट दिया है कि इस समय सर्वनाश करने वाला यह दुर्भिक्ष पड़ रहा है, इस दिशा में किये गये उपाय निष्फल हो गये। गुरुजनों! इस अकाल को दूर करने का कोई सार्थक (अकाट्य) उपाय बताने की कृपा करें। जब मैं देश में पर्यटन (दौरा) कर रहा था तब निर्जन श्मशान में एक वटवासी पिशाच ने मुझसे कहा कि जब तक तुम्हारे देश में विभाण्डक के पुत्र शृङ्गी ऋषि नहीं आते तब तक दुर्भिक्ष दूर नहीं हो सकता है। इसलिए उन्हें ढूँढकर यहाँ लाने का आप लोग प्रयत्न करें।

(सभी ब्राह्मण एक दूसरे का मुँह ताकने लगते हैं)

**मुद्गल-** राजन् ! यह बात आप की सर्वथा ठीक है, किन्तु इस संसार में सबसे प्रिय प्राण माने जाते हैं। इस पृथ्वी का पालन तो राजा (क्षत्रिय) लोग ही करते चले आ रहे हैं। दीन स्वभाव वाले ब्राह्मण लोग तो विषयवासना को तिलाञ्जलि देकर शान्त आश्रमों में तपोमय जीवन व्यतीत करते हैं। बालब्रह्मचारी कोपमूर्ति उस ऋषि को हम लोग कैसे ढूँढ सकते और कैसे यहाँ ला सकते हैं?

कथञ्चास्माभिरानेयः ? कः प्राणधारी ज्वलनज्ज्वालामालिङ्गति तपसः परं नान्यत् वयं विद्मः।

तपःशूरा द्विजाः प्रोक्ता, रणशूराश्च बाहुजाः।
तथा वैश्यास्तुलाशूराः, सेवाशूराश्च पादजाः॥ 48॥

**अन्ये विप्राः**-सत्यम्, सत्यम्, सर्वथा सत्यं वदन्ति मुद्गलपादाः ध्रुवं सोऽस्माञ्छापं दत्वा मारयिष्यति।

**राजा**-क्षत्रियैरभिरक्षिते निरापदि स्थाने तपस्यन्ति ब्रह्मचिन्तनं च कुर्वन्ति ब्राह्मणाः। ततश्च क्षात्रतेजोऽनादृत्य कथं तपश्शराणामनामयम्। देशरक्षा परं तपः।अतः देशस्य स्वस्य च योगक्षेमं पश्यन्तो भवन्तो यथायोग्यमाचरन्तु (गर्गमुखमालोक्य) का सम्मतिरत्र गुरुजनानाम् ?

---

**अन्वयः**- द्विजाः तपः शूराः प्रोक्ताः, बाहुजाः च रणशूराः तथा वैश्याः तुलाशूराः, पादजाः च सेवाशूराः प्रोक्ता शास्त्रकारैरितिशेषः।

**व्याख्या**- द्विजाः=ब्राह्मणाः, तपःशूराः=तपस्यामल्लाः, प्रोक्ता=उक्ताः, बाहुजाः=क्षत्रियाः, बाहूराजन्यः कृत इति वेदवाक्यात्। च=नु, रणशूराः=सङ्ग्रामवीराः, तथा=तद्वत् वैश्याः= वणिजः, तुलाशूराः=क्रयविक्रयव्यवहारभट्टाः, पादजाः=चतुर्थवर्णाः, पद्भ्यां शूद्रोऽजायतेति वेदवाक्यात् च सेवाशूराः=सेवाचतुराः, प्रोक्ताः शास्त्रकारैरितिशेषः।

---

ऐसा कौन समझदार प्राणधारी होगा, जो आग की प्रचण्डलपट का आलिङ्गन करे ? हम लोग तो तपस्या के अतिरिक्त और कुछ नहीं जानते-

ब्राह्मण लोग तपस्या करने में शूरवीर होते हैं, क्षत्रियलोग लड़ाई-भिड़ाई कर रक्षा करने में प्रचण्ड होते हैं। वैश्य लोग व्यापार (तराजू कृषि आदि का कार्य) करने में सिद्धहस्त होते हैं तथा शूद्र लोग सेवा कार्य करने में परम प्रवीण होते हैं। ऐसा आप्तपुरुषों ने कहा है।। 48।।

**अन्य ब्राह्मण**-सत्य है, सत्य है, पूज्यपाद श्री मुद्गल जी जो कुछ कह रहे हैं वह सर्वथा सत्य है क्योंकि वह तेजस्वी ऋषि शाप देकर हम लोगों को भस्म कर देगा।

**राजा**- क्षत्रियों के द्वारा सुरक्षित एवं निर्विघ्नस्थानों में बैठकर ब्राह्मण ब्रह्म का चिन्तन कर पाते हैं, तो क्या क्षात्रतेज (मुझ क्षत्रिय राजा) को ठुकराकर तपः शूर ब्राह्मण निर्विघ्न तपस्या कर सकते हैं ? दूसरी बात यह है कि देश की रक्षा करना सबसे बड़ी समस्या है, अर्थात् देशरक्षा सर्वोपरि तप है। अतएव देश का और अपना

**गर्गः**- किमत्र भयम्! विप्रैः सङ्गत्य भवतो गुप्तचरा एतत्कार्यं निष्पादयन्तु।

**सर्वे**- स्वीकार्यम्, स्वीकार्यम् प्रथमोऽयं कल्पः।

---

ननु तपसि शूरास्तपःशूरा इत्यादिप्रयोगेषु केन सूत्रेण समास इति चेत् पात्रेसमितादयश्चेति सूत्रेण विधीयताम्। नैते प्रयोगाः पात्रेसमितादिगणे पठितास्तदा कथं तेन समास इति न वाच्यम्, समितादिगणस्याकृतिगणत्वस्वीकारात्। न च क्षेपे (निन्दार्थकत्त्वे) गम्यमान एव तत्सूत्रं प्रवर्तते यथा गेहे शूर इत्यादौ, प्रकृतप्रयोगेषु तपः शूरादिषु च क्षेप्यार्थस्याऽसम्भवात् दोषो वज्रलेप एवेति वाच्यम्? आकृतिगणत्वात् निपातनत्वाच्च क्षेपपदस्यानुवृत्तेः परित्यागात्। ननु गणपठितानां सर्वेषां पात्रेसमितादिशब्दानां क्षेप्यार्थस्य गम्यमानत्वात् तत्त्वच्छब्दद्वारक निन्द्यार्थप्रतिपादनस्याऽनपलपितत्वाच्च कथङ्कारं धूलिप्रक्षेपेण क्षेपपदानुवृत्तेः परित्याग इति चेत्तर्हि सप्तमी शौण्डैरिति सूत्रेण समासविधानान्न दोषलेशः।

ननु प्रकृतप्रयोगाणां शौण्डादिगणपाठाऽभावात् तद्गणस्य चाकृतिगणविरहाच्च कथं तेनापि समास इति चेच्छृणु

सप्तमी शौण्डैरित्यत्र सप्तमीति योगविभागकरणेन समासश्च विधानान्न कश्चिद्दोषः।

ननु सप्तमीति योगविभागस्य भाष्ये कुत्राप्यदृष्टत्वात्कथं योगविभाग इति चेन्न? काशिकादौ तल्लाभात्।

ननु भाष्यविरुद्धत्वात् विनिगमकत्वाऽभावाच्च काशिकाकारकृतो योगविभागो न प्रामाणिक इति चेत्तर्हि तपसः=तपस्यायाः शूरा इत्यधिकरणस्थाने षष्ठीं प्रकल्प्य षष्ठीति सूत्रेण तत्पुरुषः समासो विधेय इत्यलं विस्तरेण।

---

हित समझकर आप लोग जैसा उचित समझें वैसा करें। (गर्ग की ओर देखकर) क्यों जी! आप जैसे महापुरुषों (गुरुजनों) की इसमे क्या सम्मति है?

**गर्ग**- इसमें भय की क्या बात है, फिर भी ब्राह्मणों से मिलजुल कर आपके गुप्तचर इस कार्य को सम्पन्न कर सकते हैं।

**सभी विप्र**- स्वीकार है, स्वीकार है, यह उत्तम प्रक्रिया (निर्णय) है।

**राजा**- किमतः परम्?

**राजा**- पूजनीया भूसुराः! यदर्थं भवन्तः क्लेशिताः तत्सर्वं गर्गाचार्येण उपदिष्टम्। अत एव स्वस्वकर्त्तव्यपालनाय साधयन्तु भवन्तः, अहं च स्वकर्त्तव्यं निर्वहामि।

**ब्राह्मणाः**- स्वस्ति महाराजाय (इति वन्दतो निष्क्रान्ताः)।

**राजा**- धावक! गुप्तचरीभिः सह नायकं आहूयताम्।

**धावकः**- एष गच्छामि (इति निष्क्रान्तः)।

**नेपथ्ये**- घण्टानादः।

**रक्षकः**- (श्रुत्वा) विश्रामसूचकोऽयं घण्टानादो देव! दशवादिनी चेयं रात्रिवेला। जनाः शेरते।

**राजा**- धिङ् मूर्ख! यदि प्रजा शेते शेताम्, राजा न शेते।

---

**राजा**- तब क्या सभा का विसर्जन करना चाहिये।

**गर्ग**- इससे अधिक क्या, अर्थात् सभा का विसर्जन ही करना चाहिये।

**राजा**- विप्रदेवों! आप सर्वथा पूजनीय हैं, आप सबको जिस लिये यहाँ आने का क्लेश दिया है उसका समाधान श्रीगर्गाचार्य द्वारा सम्पन्न हुआ, अतः अब आप अपना-अपना कर्त्तव्य पालन करने हेतु प्रस्थान करें। मैं अब बचे हुये अपने कर्त्तव्य का निर्वाह करता हूँ।

**ब्राह्मण**- महाराज का कल्याण हो (इस प्रकार आशीर्वाद देते हुए सभी ब्राह्मण निकल जाते हैं)।

**राजा**- धावक! गुप्तचरियों के साथ मायापति को बुलाओ।

**धावक**- यह मैं जा रहा हूँ (इस प्रकार निकल गया)।

**नेपथ्य में**- घण्टानाद होता है।

**रक्षक**- (सुनकर) महाराज! विश्राम की सूचना देने वाला घण्टानाद हो रहा है। रात्रि के ठीक दस बज रहे हैं। लोग सोने लगे हैं।

**राजा**- धिक् मूर्ख! यदि प्रजा सो रही है तो सोती रहे राजा तो नहीं सोता है:-

**सदा जागर्ति भूपालः, प्रजा जागर्तु वा न वा।**
**यो न जागर्ति तद्राज्यमरण्यमिव जायते॥ 49॥**

**मन्त्री-** अनुरूपमेव भवतोक्तम्, रक्षातुरः किमपि न गणयतिः-

**कदा दिनं कदा रात्रिः, कदा दुःखं कदा सुखम्।**
**यो न जानाति भूपालः, स नूनं लोकरक्षकः॥ 50॥**

(ततः प्रविशति चरीभिः सह नायकः)

---

**अन्वयः-** भूपालः सदा जागर्ति, प्रजा जागर्तु न वा जागर्तु। यः न जागर्ति तद्राज्यम् अरण्यम् इव जायते।

**व्याख्या-** भूपालः=भूपः, सदा=निरन्तरम्, जागर्ति=प्रबुध्यते, प्रजा=जनता, जागर्तु=प्रबुध्यताम्, न वा=शेतां वेत्यर्थः। यः=भूपालः, न=नैव, जागर्ति=राजकर्त्तव्यं सावधानतया न पश्यतीत्यर्थः, तद्राज्यम्=तस्य देशः, अरण्यम्=काननम्, अटव्यरण्यं विपिनं गहनं काननं वनमित्यमरः। इव=तुल्यम्, जायते=विनश्यतीति तात्पर्यम्। धर्मलुप्तोपमा।

**अन्वयः-** यः भूपालः कदा दिनं कदा रात्रिः कदा दुःखं कदा सुखं (इति) न जानाति, स नूनं लोकरक्षकः अस्तीति शेषः।

**व्याख्या-** यः=कश्चिच्चतुरः, भूपालः=नरेन्द्रः, कदा=कस्मिन् काले, दिनम्=दिवसः, कदा रात्रिः=निशा, शयनकाल इत्यर्थः। कदा दुखम्=कष्टम्, कदा सुखम्=आनन्दः, (इति) न=नहि, जानाति=नानुभवति, सः=अनवरत सेवारतो राजा, नूनम्=ध्रुवम्, लोकरक्षकः=प्रजापालकः, भवतीति यावत्। प्रजापालनतरो राजा रक्षातिरिक्तं न किमपि गणयतीति सारार्थः।

---

प्रजा चाहे जागती रहे या सोती रहे, राजा तो सर्वदा जागता ही रहता है। जो राजा सर्वदा जागृत (जागरूक सावधान) नहीं रहता, उसका देश चौपट होकर जंगल बन जाता है।

**मन्त्री-** यह कथन आपके लिये सर्वथा अनुरूप हैः-

जो राजा कब दिन निकला और कब रात हुई तथा कब दुःख हुआ कब सुख हुआ इत्यादि बातों की परवाह नहीं करता, केवल प्रजा पर ही ध्यान देता है वह राजा वास्तव में प्रजा का रक्षक (भूपाल) होता है।

(तत्पश्चात् गुप्तचरियों के साथ नायक का प्रवेश होता है)

**नायकः**:- जयत-जयतु देव!

**राजा**- मायापते ! नायमवसर उपचारस्य।

**नायकः**:- यद्येवं तर्हि देव ! आज्ञाप्यताम् ?

**राजा**- देशकाल-पात्र-परिस्थितीनामनुरोधेन त्वया सहैताश्चर्यः कान्तारेष्वन्विष्य विभाण्डकसुतमृष्यशृङ्गं यथा तथानयन्तु। अखण्डे ब्रह्मवर्चसेऽचलः सोऽस्त्रीपुंसवेदी लोकव्यवहारं नावगच्छति, तमानेतुमानखशिखं बुद्धिवैभवं प्रयोजयन्तु। द्विजोत्तमाश्चात्र परोपकारे सहायाः सन्ति।

**चरी**- स्वामिन् ! प्रशान्तसागरवत् निर्विकाराः अपि तापसा क्षोभकाले वड़वानलं वमन्ति। सर्वंसहा अपि ते नारीमुखं न सहन्ते। कूटनीतिरपि कुटिले कृतार्था भवति, अन्यत्र प्रयुक्ता तु सा प्रयोक्तारं हन्तीति नैतस्मिन् विषये वयमवला आत्महितं पश्यामः।

---

**नायक**- महाराज की जय हो!

**राजा**- मायापति ! यह अवसर चाटुकारिता (चम्चागिरी) करने का नहीं है।

**नायक**- तो क्या करें ? आज्ञा दीजिये महाराज !

**राजा**- देशकाल पात्र और परिस्थिति के अनुरोध (प्रेरणा) से ये गणिकायें तुम्हारे साथ घोर वनों में जाकर विभाण्डक के पुत्र शृङ्गी ऋषि की खोज करें। ये उन्हें किसी प्रकार वश में करके यहाँ लाये। वे बचपन से ही अखण्ड ब्रह्मचर्य में तल्लीन (अडिग) होकर रहते हैं। वे संसार के व्यवहारों में इतने अनभिज्ञ हैं कि उन्हें स्त्री-पुरुष का अन्तर (भेदलिङ्ग चिन्हादि) का भी ज्ञान नहीं है। उनको यहाँ राजधानी में लाने हेतु नख-शिख (एड़ी से लेकर चोटी) तक का बुद्धिबल लगा देना चाहिये। इस परोपकार के कार्य में ब्राह्मण देवता भी तुम्हारी सहायता करेंगे।

**चरी**- स्वामिन्! तपस्वी लोग सागर के समान शान्त (शीतल) और निर्विकार अवश्य रहते हैं किन्तु क्षुब्ध होने पर बड़वानल उगलने लगते हैं। ये तेजस्वी (तपस्वी) सब कुछ सहन करने पर भी नारी के मुख को नहीं सहन करते हैं, अर्थात् नारी द्वारा विघ्न देखकर रौद्ररूप धारण कर लेते हैं। कुटिल पुरुष के प्रति प्रयुक्त कूटनीति सफल हो जाती है, किन्तु अन्यत्र (साधु पुरुष के प्रति) प्रयुक्त (की गई) कूटनीति तो प्रयोग करने वाले को ही मार डालती है। अतः इस कार्य को करने में हम सब अबलायें (वेश्यायें) अपने प्राणों को सुरक्षित नहीं समझ रही हैं।

राजा- (भृकुटिमुत्ताम्य) अहो मन्दा ! नूनं विनाशकाले बुद्धिभ्रंश्यति। पात्रे समिताः यूयं देशहितमुपेक्ष्य प्राणभयादलीकं पाठं पाठयथ। यथार्थेयं लोकश्रुतिः "भयं सर्वत्रं पूज्यते" इति यत्र देशे भुज्यते पीयते तुष्यते, तत्रौदासीन्यं भजतां युष्माकं देशद्रुहामबलाजनानां करोम्यनुशासनम् (इति खड्गमादत्ते) चर्यः (चरणयोःपतित्वा) भर्त्तः। न वयं कर्त्तव्यं प्रत्युदासीनाः।

चर्यः- (हस्तौ बद्ध्वा) स्वामिन् ! अपेक्षितमुपकरणं न पश्यामः ?

राजा- (खड्गं संहृत्य) मायापते ! सर्वमुपकरणं भाण्डारादासाद्यताम्।

नायकः- यथादिशति भवान् ! मनसा वाचा कर्मणा च कर्त्तव्यं पूरयितुं वयं साधयामः (इति चरीभिः सह निष्क्रान्तः)।

नेपथ्ये- हु हू हू ! भु भू भू ! घु ग् घू घू ! सावधान !!

राजा- कुतोऽयं भयावहध्वनिः ?

---

राजा-(भृकुटी तानकर) अरी नीच गणिकाओ ! निश्चित ही विनाश काल में बुद्धि भ्रष्ट हो जाती है। तुम सब स्वार्थ की बात जानती हो, इसलिये प्राणों का भय दिखाकर मुझे उलटा पाठ पढ़ा रही हो। तुम्हें देश का कोई ध्यान (परवाह) नहीं है। यह लोकोक्ति सर्वथा सत्य है-कि सर्वत्र ही भय की पूजा होती है अर्थात् भय (दण्ड) के कारण ही सब लोग अपने-अपने कर्त्तव्य का पालन करते हैं। जिस देश में तुम लोग खा रही पी रही और निवास कर रही हो, उसी देश की उपेक्षा करने वाली तुम देशद्रोही अबलाओं पर अब मैं शासन करता हूँ (इस प्रकार तलवार पकड़ता है।)

चरियाँ- (पैरों पर गिरकर) महाराज ! हम लोग कर्त्तव्य के प्रति उदासीन नहीं हैं।

राजा- तो फिर क्या ?

गणिकायें- (हाथ जोड़कर) महाराज ! आवश्यक सामग्री हमारे पास नहीं है।

राजा- (तलवार रखकर) मायापति ! सारी सामग्री भण्डार (स्टाक) से ले लो।

नायक- आपकी जैसी आज्ञा। हम लोग मन वचन और कर्म से कर्त्तव्य पूरा करने के लिये जा रहे हैं। (इस प्रकार गुप्तचरियों के साथ निकल गया)।

नेपथ्य में- शृगालों, कुत्तों और उल्लुओं तथा प्रहरियों के शब्द सुनाई देते हैं।

राजा- यह भयावह ध्वनि कहाँ से हो रही है ?

**मन्त्री-** देव ! एते शृगालाः, कुक्कराः, घूकाश्च विरुवन्ति, मध्ये-मध्ये यामिकाश्च शब्दायन्ते।

**राजा-** ननु कियती रात्रिवेला ?

**मन्त्री-** (बहिरालोक्य) शिरसि तिष्ठत्ययं सप्तर्षिसंघः, सञ्चारशून्याश्च राजमार्गाः, नीडपूर्णास्तरूपल्लवा अपि चुपिताः सन्ति। अतोऽर्धरात्रिरिति निश्चिनोमि।

**राजा-** एवं चेद् विश्रामाय गन्तव्यम् (इत्युत्तिष्ठति)।

**रक्षकौ-** इत-इतो देव ! (इति सर्वे निष्क्रान्ताः)।

॥ इति चतुर्थोऽङ्कः॥

॥अङ्कावतारः॥

(ततः प्रविशति साधुवेषो गुप्तचरः)

**नायकः-** अहो ! दण्डकारण्यं कणे-कणे निर्मथितम्। तत्र दावानलादपि भगवता वयं रक्षिताः, तत्र कुत्रापि शृङ्गधरं नरमनासाद्यभिल्लवचनादत्र हिमाचले समायाताः।

---

**मन्त्री-** महाराज ! ये सियार, कुत्ते और उल्लू रो रहे हैं, बीच-बीच में पहरेदार भी चिल्ला (जगा) रहे हैं।

**राजा-** रात कितनी हो रही है ?

**मन्त्री-** (बाहर देखकर) महाराज ! सप्तऋषियों का यह तारामण्डल ठीक शिर पर (ऊपर आकाश में) विराजमान है। लोगों का सड़कों पर चलना फिरना बिल्कुल बन्द हो गया है। चिड़ियों के घोंसलों से युक्त पेड़ भी मानों ध्यानावस्थित तपस्वी की भाँति चुप्पी साधे हुये हैं। अतः ठीक आधी रात हो चुकी है।

**राजा-** यदि ऐसी बात है तो विश्राम हेतु चलना चाहिये। इस प्रकार (उठ खड़ा होता है।)

**रक्षक-** इधर से चलिये महाराज इधर से।

(इस प्रकार सब निकल जाते हैं)

॥अङ्कावतार॥

(तत्पश्चात् साधुवेष में गुप्तचर का प्रवेश होता है)

**गुप्तचर-** अहो ! दण्डकारण्य का हमने कण-कण छान (मथ) डाला, वहाँ जंगल में लगी हुई आग से भगवान् ने हमारी रक्षा की। वहाँ कहीं भी सींगधारी

(पर्यट्य) हन्त! अत्र उच्चावचभूभागेषु गिरिकन्दरकाननेषु च शृङ्गिणं विचिन्वन्तं मां सिंहो भूल्लको वा खादिष्यति, भुजङ्गो वा दक्ष्यति, स्खलित्वा वा मरिष्यामि। क्षणे-क्षणे मृत्युभयम्। चिन्ताजर्जरितस्य न मे क्षुधा, न पिपासा, न निद्रा। शीतातपार्त्ताश्चर्यः सततं मह्यम् क्रोशन्ति। अत्र निर्मानुषे कं पृच्छेयम्? कुत्र धावेयम? किं च कुर्याम्? आः का गतिः!

राजभयात्प्रतिगन्तुमपि न शक्यते- हा धिक्-

---

तपस्वी को न प्राप्तकर भील (कंजड़) की बात को मानते हुये हम लोग यहाँ हिमाचल (प्रदेश) में आये हैं। (घूमकर) हाय ! यहाँ ऊँचे नीचे पर्वतीय भागों पर चढ़ते-उतरते चोटियों, कन्दराओं और वनों में शृङ्गी ऋषि को ढूँढते हुये हमको सिंह या भालू चबा लेगा या सर्प डस लेगा अथवा फिसल कर हम मर जायेंगे। यहाँ तो क्षण-क्षण में मौत का डर है। इसी चिन्ता से जर्जर होने के कारण न हमें भूख लगती, न प्यास और न ही नींद लगती है। ठण्डी और धूप से व्याकुल कोमलांगी गणिकाएँ निरन्तर मेरे ऊपर झुँझलाती रहती हैं। इस निर्जन (सूनसान) जंगल में किससे पूछूँ, कहाँ-कहाँ दौड़ धूप करूँ तथा अब क्या उपाय करूँ? हाय अब क्या गति है?

राजा के भय से हम वापस भी नहीं लौट सकते- हाय धिक्कार है!-

## • दण्डकारण्य

सूर्यवंशी राजा इक्ष्वाकु के छोटे पुत्र का नाम दण्डक था। यह दण्डक बड़े ही सच्चरित्र और धर्मात्मा थे। ये विन्ध्याचल के पास राज्य करते थे। एक बार बसन्त ऋतु के समय ये वनविहार हेतु शुक्राचार्य मुनि के आश्रम के निकट पहुँचे, वहाँ एक सुन्दरी को देखकर उस पर आसक्त हो गये, उसके मना करने पर भी इन्होंने उससे बलात्कार किया। जब वह रोती हुई अपने पिता शुक्राचार्यजी के पास गई तो सब वृत्तान्त सुनकर शुक्रमुनि ने दण्डक को शाप दिया कि तेरे राज्य में सात दिनों तक तप्तरेत (धूलि) की ऐसी वृष्टि हो, जिससे तेरा राज्य चौपट होकर एक भयंकर जंगल बन जाये। शाप से अरण्य बने हुये इस दण्डकराज्य को दण्डकारण्य कहा गया। यह कथा वाल्मीकीय रामायण में मिलती है। पद्म पुराण में भी इसका उल्लेख है।

## • हिमाचल

पञ्जाब से ऊपर भाग में पहाड़ों पर बसा हुआ प्रदेश, हिमाचल प्रदेश कहलाता

**सरलं दिवि सेतुबन्धनं, सरलं वारिणि काव्यलेखनम्।**
**सरलं च खपुष्पगुम्फनं, कठिनं हा! भुवि राजसेवनम्॥ 51॥**

(इतीतस्ततः पश्यति)

**वटुः-** (प्रविश्य) नमामि भगवन् !

---

**अन्वयः-** दिवि सेतुबन्धनं सरलं, वारिणि काव्यलेखनं सरलं, खपुष्पगुम्फनं च सरलं (किन्तु) हा! भुवि राजसेवनं कठिनम्।

**व्याख्या-** दिवि=आकाशे, सेतुबन्धनम्=आलिरचनम्, सरलम्=सुकरम्, वारिणि=तोये आपः स्त्रीभूम्निवार्वारीत्यमरः जलोपरीत्यर्थः। काव्यलेखनम्=काव्यरचनम्, सरलम्=सुशकम्, खपुष्पगुम्फनम्=गगनकुसुमग्रथनम् अर्थात् आकाशपुष्पाणां माल्य-निर्माणमिति यावत्। च=अप्यर्थे, सरलम्=सुघटम् (किन्तु) हा=खेदे, भुवि=भूतले, राजसेवनम्=नृपसेवा, कठिनम्=कठोरं, न सरलमिति तात्पर्यम्। अत्र वियोगिनी छन्दः, तल्लक्षणं यथा-विषमे ससजा गुरुः समे समरालोऽथ गुरुर्वियोगिनी। राजसेवनस्य कठिनत्वसमर्थना- दर्थान्तरन्यासोऽलङ्कारः।

---

है। नाहन सिरमौर से आगे दुर्गमघाटी पर परशुराम के पिता जमदग्नि का आश्रम (टीला) था। यहीं से रेणुका और मार्कण्डेय नदियाँ निकलती हैं। यहीं पर एक गुफा है, जनश्रुति है कि इसी गुफा में बैठकर मार्कण्डेय ने महाप्रलय के दर्शन किये थे।

गुप्तचरों को यह पता नहीं था कि शृङ्गी ऋषि का आश्रम कहाँ है, इसीलिये सबसे पहले उन्होंने दण्डकारण्य "जो आन्ध्र प्रदेश का एक भाग है" से शृङ्गी ऋषि की खोज आरम्भ की, चप्पा-चप्पा छान डाला, बाबा जी नहीं मिले, एक स्थान पर जंगल में भयङ्कर आग लग गई, जिसमें ये लोग फँस गये, किन्तु सौभाग्य से जैसे-तैसे बचने में सफल हो गये। जब ये लोग अत्यन्त निराश थे तभी घूमता हुआ एक भिल्ल मिला। उसकी ऊटपटाङ्ग (अस्पष्ट) बातों से ये लोग यह समझ बैठे की सींगधारी पुरुष हिमाचल प्रदेश में रहता है और वहीं मिलेगा। इसी आधार पर ये लोग दण्डकारण्य से चलकर हिमाचल आये हुये हैं। चरियाँ लता मण्डप में विश्राम कर रही हैं, नायक ऋषि को खोज रहा है।

आकाश पर सेतु (पुल) बाँध लेना सरल है और पानी के ऊपर काव्य लिखना सरल है तथा आकाश के फूलों की माला गूँथना भी सरल है, किन्तु इस भूतल पर राजा की सेवा (नौकरी) करना बहुत कठिन है। (इस प्रकार इधर-उधर देखता है)।

**वटु-** (प्रवेश करके) भगवन्! मैं प्रणाम करता हूँ।

**नायकः**:- स्वस्ति भूयात् वत्स ! एतस्मिन्निर्जनारण्ये कथमेकाकी विचरति?

**वटुः**:- (पाणिमुत्थाप्य) भगवन्! अस्मिन्नुत्तुङ्गशृङ्गे जमदग्निसुतस्य श्रीपरशुरामस्य तपःस्थली, स च राजन्यकुलं हत्वा दीर्घसत्रमारभते। तत्र विविधतापसाचार्याणामामन्त्रणाय नियुक्तोऽहं प्रत्याश्रमं प्रतिष्ठे।

**नायकः**:- इदानीं कुत्र गम्यते?

**वटुः**:- श्रुतो भवता हेमकूटगिरिः?

**नायकः**:- अये वत्स ! को न जानाति तां तपो भूमिम्, यस्याः महिमा सर्वत्र गीयते, किन्तु दूरे वर्तते स गिरिः।

**वटुः**:- वाढम् ! अतिदूरवर्ती सः किन्तु गुरोराज्ञा गरीयसी।

**नायकः**:- कस्तत्रामन्त्रणीयः?

**वटुः**:- तत्र कौशिकीतीरे निर्जनारण्ये तपश्चरन्तं विभाण्डकमामन्त्रयितुं करोमि

---

**नायक**- वत्स ! (ब्रह्मचारी जी) तुम्हारा कल्याण हो। इस निर्जन वन में तुम अकेले किसलिये घूम रहे हो?

**वटु**- (हाथ उठाकर) भगवन् ! इस पर्वत की ऊँची शिखर पर जमदग्नि के पुत्र श्री परशुराम जी की तपोभूमि है। शत्रुओं (क्षत्रियों) को मारने के पश्चात् वे एक दीर्घसत्र (बहुत समय तक चलने वाला यज्ञ विशेष) आरम्भ कर रहे हैं। उस सत्र में विविध तपस्वी आचार्यों को आमन्त्रित करने के लिये मुझे नियुक्त किया है। अतः मैं प्रत्येक आश्रम में जा-जा कर निमन्त्रण देता हूँ।

**नायक**- इस समय कहाँ जा रहे हो बच्चा?

**वटु**- भगवन्! आपने हेमकूट पर्वत का नाम सुना होगा?

**नायक**- अजी! बच्चा! उस हेमकूट की तपोभूमि को कौन नहीं जानता? जिसकी महिमा सर्वत्र गाई जाती है, किन्तु वह पर्वत तो बहुत दूर है।

**वटु**- हाँ भगवन् ! वह पर्वत बहुत दूर है, किन्तु गुरुजी (भार्गव) की आज्ञा गौरवशाली है, अर्थात् उसका तो पालन करना है।

**नायक**- वहाँ पर किस तपस्वी को आमन्त्रित करना है?

**वटु**- वहाँ कौशिकी नदी के किनारे निर्जन वन में तपस्या करते हुये विभाण्डक मुनि के लिये निमन्त्रण देने (बुलाने) हेतु प्रस्थान कर रहा हूँ। बीच-बीच के आश्रमों

प्रस्थानम्। मध्ये-मध्ये चाश्रमेषु तापसानामन्त्रयन् विश्रमँश्च दूराध्वानमति वाहयामि।

**नायकः**:- (स्वगतम्) अहो ! सिद्धं रोमपादस्य समीहितम्। (प्रकाशम्) साधीयाँस्ते पुरोगमः।

**वटुः**:- भवतः का परिचितिः ?

**नायकः**:- (स्वगतम्) विघ्नपूर्णा भवन्ति सिद्धयः तदासमाप्तिकम् यथानुकूल-माचरामि। (प्रकाशम्) वटुकवर्य ! अहं भगवतो द्रुमिलस्य शिष्यः, वैराग्योदयात्तीर्थाटनाय निर्गतः।

**वटुः**:- कृतार्थोऽहं तव दर्शनात्, सम्प्रति त्वरा वशाच्छुश्रूषायां तटस्थोऽयं जनः क्षन्तव्यः।

**नायकः**:- वत्स ! तव शिष्टाचारेणैव प्रफुल्लितो ममान्तरात्मा, तस्मात् साध्यतां स्वकार्यम्। सुखयतु ते प्रयाणम्।

---

में भी तपस्वियों को निमन्त्रण देता हुआ और विश्राम करता हुआ इतने लम्बे मार्ग को पार कर ही लूँगा।

**नायक**- (मन में) अहह! रोमपाद का कार्य सिद्ध हो गया। (स्पष्ट बोलता है) आपका पुरोगम (प्रोग्राम) बहुत अच्छा है।

**वटु**- महात्मन् ! आपका क्या परिचय है?

**नायक**- (मन में) सभी सफलतायें विघ्नों से भरी रहती है, अर्थात् प्रत्येक कार्य में बाधा पड़ सकती है, अतः कार्य की सफलता तक सिद्धि के अनुकूल ही (गुप्त) व्यवहार करना चाहिये। (स्पष्ट बोलता है) हे वरेण्य ब्रह्मचारिन्! मैं महात्मा द्रुमिलाचार्य का शिष्य हूँ। मुझमें अचानक भारी वैराग्य उत्पन्न हो गया, जिसके कारण मैं तीर्थों का भ्रमण करने हेतु निकल पड़ा।

**वटुक**- भगवन् ! आपके दर्शनों से मैं कृतकृत्य हो गया हूँ।

इस समय शीघ्रता के कारण मैं जो आपकी सेवा करने में तटस्थता (उदासीनता) दिखा रहा हूँ उसे आप क्षमा करें।

**नायक**- वत्स ! तुम्हारे नम्र व्यवहार से ही मेरी आत्मा बहुत प्रफुल्लित हो गई है, अब अपने कर्त्तव्य साधन में लग जायें, आपकी यात्रा कल्याणकारी हो।

**वटुः-** फलिता भवन्तु भवदाशिषः (इति प्रणमन्निर्गतः)।

**नायकः-** अहो! लब्धं पुनर्जन्म। अङ्कुरिता आशालता। तदिदानीं हिमाञ्चल-प्रदेशादवतरामि। (अग्रे गत्वा) इयं मार्कण्डेया नदी। अस्याश्चोत्तरतटे कुञ्जपुञ्ज-निलीनो मे सहायो वेश्यावर्गो विश्राम्यति। तमादाय हेमकूटं प्रति साधयामि (इति भ्रमन्निर्गच्छति)।

**॥इत्यङ्कावतारः॥**

---

**वटुक-** आपके आशीर्वाद सफल हों। (इस प्रकार प्रणाम करता हुआ निकल गया)।

**नायक-** अहह ! पुनर्जन्म हो गया आशा लता अङ्कुरित हो गई। अब इस हिमाञ्चल प्रदेश से नीचे उतरना चाहिये। (आगे बढ़कर) यह मार्कण्डेया नदी बह रही है, इसके उत्तरी किनारे पर कुञ्जपुञ्ज (लतामण्डप) में छिपा हुआ मेरा सहायक वेश्यावर्ग विश्राम कर रहा है। अब उस गणिका वर्ग को साथ लेकर मैं यहाँ से हेमकूट पर्वत की ओर चलूँ। (इस प्रकार घूम-घाम कर निकल गया)।

## अङ्कावतार

अङ्क के अन्त में एक छोटा सा ऐसा प्रकरण जोड़ दिया जाता है कि जिससे अग्रिम अङ्क के कथानक की सूची मिल जाये, यहाँ पर हेमकूट पर विभाण्डक को स्थिति की सूचना दी गई अतः इस प्रकरण को अङ्कावतार कहते हैं:

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः।।

॥अङ्कावतार समाप्त॥

**॥चतुर्थ अङ्क समाप्त॥**

# ॥पञ्चमोऽङ्कः॥

(ततः प्रविशति राजा विदूषकश्च)

**राजा-** सखे ! शृङ्गिणमानेतुं वनं प्रेषिताश्चरा यदि समये नायाति, तदा का गतिः ?

**विदूषकः-** का गतिः ? उभयत्र मरणम्।

**राजा-** कथमिव।

**विदूषकः-**मिलितः स गुप्तचरान् धक्ष्यति इति तत्र मरणम्। अमिलितः यद्यत्रापि मरणम्।

**राजा-** कस्मिन् वने तपति स इत्यपि न ज्ञायते ?

**विदूषकः-** ज्ञायते चेत् तर्हि कस्य प्राणा अप्रियाः यस्तं कोपाऽनलमालिङ्गतु।

---

## ॥पञ्चम अङ्क॥

(तत्पश्चात् राजा और विदूषक का प्रवेश होता है)

**राजा-** सखे ! शृङ्गी ऋषि को बुलाने के लिये भेजे गये गुप्तचर यदि निश्चित समय पर न आ सके तो सबकी क्या दशा होगी ?

**विदूषक-** क्या गति होगी ? दोनों ओर मरण होगा।

**राजा-** वह कैसे ?

**विदू.-** यदि वह तपसी मिल गया तो कोपाग्नि (शाप द्वारा) से गुप्तचरों को सदा के लिये गुप्त (भस्म) कर देगा। यदि नहीं मिला तो दुर्भिक्ष के कारण यहाँ भी नरसंहार समझिये। इस प्रकार दोनों ओर मरण ही मरण है।

**राजा-** वह तपस्वी किस वन में कहाँ पर तपस्या कर रहा है, यह भी पता नहीं ?

**विदू.-** यदि पता भी चल जाये तो किसको अपने प्राण अप्रिय हैं जो उस कोपानल (महातेजस्वी) को छेड़े अर्थात् उसको छेड़ना वन्हि ज्वाला आलिङ्गन करना है।

राजा- अश्रद्धेयमेतत्। बहुजनहितायाऽप्रियमपि प्रियं भवति।

विदूषकः- प्रवादमात्रमेतत्। बहूनुपेक्ष्यात्मानं सततं रक्षति।

राजा- भोः द्विजपुङ्गव ! तर्कवादोऽन्यः यथार्थवादश्चान्यः।

विदूषकः- प्रसीदतु प्रसीदतु देव! साधूक्तं भवता।

राजा- त्वां तावदेकं पृच्छामि।

विदूषकः- शृणोमि। कथ्यताम्।

राजा- यदि स ब्रह्मचारी न लभ्येत, तदाऽस्या अनावृष्टेः कः प्रतीकारः?

विदूषकः-अस्ति सरलः प्रतीकारः?

राजा- कस्तावत्?

विदूषकः- शृणोतु देवः-

---

राजा- यह बात श्रद्धायोग्य नहीं है, क्योंकि बहुत से लोगों का हित करने के लिये तो लोग अप्रियकार्य भी प्रियकार्य की भाँति कर डालते हैं। अर्थात् परोपकार हेतु लोग अपना बलिदान भी कर डालते हैं।

विदू- यह तो केवल थोथी कहावत मात्र है, वस्तुतः बहुतों की परवाह न करके आदमी सदैव अपनी रक्षा करता है।

राजा- अरे ! ब्राह्मणों में श्रेष्ठ ! (ब्राह्मणों में सांड़) वाद-विवाद और वस्तु है और वास्तविकता और वस्तु है।

विदू.- महाराज! प्रसन्न हो जाइये। आपका कथन ही यथार्थ है।

राजा- अच्छा मैं तुमसे एक बात पूँछता हूँ।

विदू.- हाँ सुनता हूँ, कहिये।

राजा- यदि वह ब्रह्मचारी गुप्तचरों को नहीं मिलता है तो इस अनावृष्टि (सूखा) का क्या उपाय है?

विदू.- बहुत सरल (सस्ता) एक उपाय है।

राजा- वह कौन सा?

विदू.- सुनिये महाराज-

**सागरे पावकं दद्यात्, तद्देशे पातयेन्नभः।**
**तद्देशे च प्रजातिष्ठेन्न वृष्टिः किं करिष्यति॥52॥**

**राजा-** (विहस्य) अहो! मतिशौण्ड त्वामिदं पृच्छामि यत् बहूनि सन्ति वनानि, न जाने कस्मिन् वने निगूढस्तिष्ठति मुनिपुत्रः ?

**विदूषकः-** सरलमस्य समाधानम्।

**राजा-** कीदृशम् ?

**विदूषकः-** सर्वेषु वनेषु दद्यादग्निम्।

**राजा-** तदा किं स्यात् ?

---

**अन्वयः-** सागरे पावकं दद्यात्, तद्देशे नभः पातयेत्, तद्देशे च प्रजा तिष्ठेत्, नवृष्टिः किं करिष्यति।

**व्याख्या-** सागरे=समुद्रजले, पावकम्=वन्हिम्, दद्यात्=सागरजलं वन्हिना दाहयेत, इति तात्पर्यम्। तद्देशे=सागरस्य रिक्तस्थाने, नभः=गगनम्, पातयेत्=स्थापयेत्, तद्देशे=रिक्तनभःस्थाने, च=पुनः, प्रजा=अङ्गदेशस्य जनता, तिष्ठेत्=वसेत्, नवृष्टिः= अवृष्टिः, न वृष्टिरित्यत्र वृष्टिपदेन सह शुद्ध न वर्णस्य समासः नत्वनुबन्धविशिष्टस्य नञ्वर्णस्य तेन नलोपो नञ् इति न नलोप, ञकारानुबन्धस्यैव नकारस्य लोपविधानात्। किं करिष्यति=न किमीपीति भावः। विदूषकवचनत्वादसम्भवोक्तिर्न दुष्यति।

---

समुद्र के पानी में आग लगा देनी चाहिये, जब वह (पानी का) स्थान खाली हो जाये तो उस स्थान पर आकाश को (उतारकर) रख देना चाहिये, जब आकाश की जगह (स्थान) खाली हो जाये तो उस स्थान पर अङ्गदेश की सारी प्रजा बसा देनी चाहिये। ऐसा करने से यह अभागी अनावृष्टि हमारा क्या बिगाड़ सकेगी ? क्योंकि अनावृष्टि से पृथ्वी ही प्रभावित होती है।

**राजा-**(हँसकर) हे बुद्धिमल्ल ! मैं पूछता हूँ कि वन तो बहुत से हैं न जाने किस वन में छिपकर वह मुनि तपस्या करता होगा ?

**विदू॰-** इस समस्या का समाधान तो बहुत सरल है।

**राजा-** वह किस प्रकार ?

**विदू॰-** सभी वनों (जंगलों) में आग लगा देनी चाहिये।

**राजा-** इससे क्या होगा ?

विदूषकः- तदा भीत्वा बहिर्निर्गतः स्वयं मिलिष्यति।

राजा- धन्योऽसि भल्लाटकः!

विदूषकः- मम दण्डोऽपि धन्यः (इति दण्डं दर्शयति)।

राजा- सखे ! सत्यं मम सन्मुखे बलवती समस्या अवग्रहं पश्यतो ममैकादशवर्षाणि व्यतीतानि। प्रजायाः पालयतो मे कोशोऽपि समाप्तः। पुनश्च कृषकाणां किं प्रतिविधेयम्। वनं व्रजामीति कर्त्तव्यवैमुख्यान्महती कातरता, नास्ति साधनमिति कथनं मृत्योरप्यधिकतरम्। अधिकृताः विनापि वृत्तिं ममान्तिकं नहि मुञ्चन्ति। किं बहुना? प्रजाचिन्तयाहं शान्ताया विवाहमपि न रचयामि तदिदं घोरं सङ्कटम्।

विदूषकः- (दण्डमुद्यम्य) अहं दण्डप्रतापेन सत्यं-सत्यं वदामि यत् आगमिष्यति साधुः सः, द्वयं कार्यं भविष्यति।

राजा- सत्यं भवतु, ब्राह्मणवचः।

---

विदू.- तब डरकर बाहर निकालने पर स्वयं ही वह (तपसी) मिल जायेगा।

राजा- भल्लाटक ! तुम धन्य हो।

विदू.- मेरे दण्ड को भी धन्यवाद है (इस प्रकार डण्डा दिखाता है)।

राजा- मित्र ! सचमुच मेरे सामने बहुत बड़ी समस्या है। इस प्रजा का पालन-पोषण करते हुये मेरा खजाना भी समाप्त हो गया है। अब बिचारे किसानों के लिये क्या उपाय करें जिससे उनका दुःख दूर हो सके। मैं सन्यास लेकर वन को जाऊँ तो ठीक नहीं, क्योंकि कर्त्तव्य से पलायन करना भारी कायरता (अर्कमण्यता) मानी जाती है। अब मेरे पास रक्षा का कोई साधन नहीं हैं-ऐसा कहना तो मृत्यु से भी बढ़कर निन्दनीय होगा। मेरे आधीन रहने वाले सचिव दासादि जन तो बिना वेतन के भी मेरा सहयोग (सेवाकर्म) नहीं छोड़ रहे हैं। अधिक क्या कहूँ प्रजा की चिन्ता के कारण मैं अपनी पुत्री शान्ता का विवाह भी नहीं कर पा रहा हूँ। अतः यह बहुत भयङ्कर संकट सामने खड़ा है।

विदू.- (लट्ठ उठाकर) मैं इस लट्ठराज की अनुकम्पा से सत्यवचन बोल रहा हूँ कि वह साधूबाबा अवश्य आयेगा, और दोनों कार्य (बरसा तथा विवाह) भी साथ-साथ होंगे।

राजा- ब्राह्मण का वचन सत्य हो।

**विदूषकः**- नाहं यादृशस्तादृशो ब्राह्मणः।

अहं तु त्रिलोकगामी, त्रिकालदर्शी, त्रिवेदवेदी, त्रिगुणातीतोऽन्तर्यामी, अश्राद्धभोजी ब्राह्मणोऽस्मि-

**नटीतुल्या नरीनर्ति, जिह्वाग्रे मे सरस्वती।**
**न मे तत्त्वं भवान् वेत्ति, स्वयं चापि न वेद्म्यहम्॥53॥**

**राजा**- अक्षरशः सत्यम्।

**धावकः**- (प्रविश्य) महाराज ! चौरमादाय सभिक्षुकौ रक्षिणौ द्वारदेशे तिष्ठतः।

**राजा**- त्वरितं प्रवेशय।

**धावकः**- प्रवेश्य निर्गतः।

---

**अन्वयः**- मे जिह्वाग्रे सरस्वती नटीतुल्या नरीनर्ति। मे तत्त्वं भवान् न वेत्ति, अहं स्वयं अपि च न वेद्मि।

**व्याख्या**- मे=मम, भल्लाटस्य, जिह्वाग्रे=रसनाग्रभागे, सरस्वती=शारदा देवी, नटीतुल्या=नर्तकीव, नरीनर्ति=पुनः-पुनरतिशयेन वा नृत्यति। यङ्लुकिरूपम् वाग्देवी मम वशम्वदेति सारः। मे तत्त्वम्=महत्त्वम्, भवान्=रोमपादः, न वेत्ति=न जानातीति नाश्चर्यम्, किन्तु मम महत्त्वम् अहं स्वयमेव न जानामीति विशेषाश्चर्यम्, अन्यस्य तु का चर्चा पूर्णोपमालङ्कारः।

---

**विदूषक**- मैं ऐसा वैसा ब्राह्मण नहीं हूँ-

मैं तो तीनों लोकों में गमन करने वाला, तीनों कालों की बात जानने वाला, तीनों वेदों को समझने वाला, तीनों गुणों से निर्लेप रहने वाला, श्राद्ध का भोजन न खाने वाला, तथा सबके मन की बात जानने वाला ब्राह्मण हूँ।

मेरी जिह्वा पर सरस्वती देवी तो वैसे ही नाचती रहती हैं, जैसे मञ्च पर नर्तकी नाचती है, हे राजन् ! मेरे महत्त्व को आप क्या समझ सकते हैं जबकि मैं स्वयं ही अपने महत्त्व को नहीं समझ पा रहा हूँ।

**राजा**- आपकी बात सर्वथा सत्य है।

**धावक**- (प्रवेश कर) महाराज ! चोर को लेकर एक भिखारी के साथ दो रक्षक (सिपाही) द्वार पर खड़े हैं।

**राजा**- उन्हें बहुत शीघ्र प्रवेश कराओ ?

**धावक**- प्रवेश कराके निकल जाता है।

रक्षिणौ- जयतु-जयतु स्वामी!

राजा- कोऽयं विवादः ?

रक्षिणौ- (भिक्षुकमग्रे कृत्वा) निवेदय प्रजानाथाय।

भिक्षुकः-(हस्तौ सम्पुटीकृत्य) प्रजावत्सल! भिक्षाटनाय निर्गतोऽहं दिनत्रयानन्तरं पञ्चदशगृहेभ्यश्चुलुकंश्चुलुकं तुम्बीमात्रं जलमाप्तवान्। गण्डूषत्रयं पीत्वाऽवशिष्टं म्रियमाणा बालकाः पास्यन्ति ममेति हृष्टमनाः यावदहं स्वकुटीराय चलामि, तावन्मार्गमध्ये श्रान्तस्तरुमूलमाश्रित्य तन्द्रितोऽभवम्। (रुदन्) तदानीं लब्धावसरोऽयं मे जलतुम्बीमादाय पलायितः (इति बाहुबद्धं चौरं दर्शयति)।

राजा- ततस्ततः ?

भिक्षुकः- देव ! तदा यावदहं हा हाकारं करोमि तावद् दैवात् आगताभ्यां आभ्यामावृत्ताभ्यामयं निगृहीतः।

राजा- कुत्र जलतुम्बी ?

---

रक्षक- महाराज की जय हो !

राजा- यह क्या विवाद है ?

रक्षक- (भिखारी को आगे बढ़ाकर) प्रजापालक राजा से अपनी बात कहो।

भिखारी- (हाथ जोड़कर) प्रजावत्सल! मैं भीख माँगने के लिये निकला था, सो तीन दिन तक भीख माँगी, तब केवल पन्द्रह घरों से चूल्लू चूल्लू भर पानी मिलने पर मेरी तुम्बी (सूखी लौकी की बनाई तोमड़ी) भर गई। उसमें से मैंने तीन घूंट पानी पी भी लिया था। बचे हुये उच्छिष्ट पानी को प्यास से मरते हुये मेरे बच्चे पी लेंगे, ऐसा समझकर प्रसन्न होता हुआ मैं अपनी झोपड़ी की ओर चल दिया, किन्तु घूमने से थका हुआ मैं मार्ग में एक शुष्क पेड़ की मूल का सहारा लेकर बैठ गया और मुझे नींद आग गई। (रोता हुआ) उसी समय मौका पाकर मेरी जलतुम्बी उठाकर यह भाग खड़ा हुआ। (इस प्रकार हाथ बंधे हुये चोर को दिखाता है)।

राजा- फिर क्या हुआ ?

भिक्षुक- तब जगकर मैं जभी हाहाकार करता हूँ, तब तक दैवयोग से आये हुये इन दोनों महाशयों (बाबूजी) ने इस चोर को धर दबोचा।

राजा- वह जलतुम्बी कहाँ है ?

रक्षिणौ- इयं देव (इति रिक्तां तुम्बीं दर्शयतः)।

राजा- जलं कुत्र?

रक्षिणौ- (चौरमग्रे कृत्वा) ब्रूहि रे पानीयलुण्ठकः!

चौरः- पलायमानेन पीतं मया।

राजा- कस्त्वम्?

चौरः- संकुचित आः! आः!! आः!!!

रक्षिणौ- ब्रूहि रे! ब्रूहि शीघ्रम् अन्यथा.....(इति वेत्रं दर्शयतः)

चौरः- पलायमानेन पीतं मया।

राजा- कस्त्वम्? इति पृच्छामि।

चौरः- भ-भ-भ-भगवन्! (इति बिभेति)।

विदूषकः- (दण्डेन भूमिं हत्वा) अरे! हतक! भिक्षुक लुण्ठकः लप रे! स्पष्टम् अन्यथा—

चौरः- भगवन्! शाण्डिल्यगोत्रीयो देवशर्मा ब्राह्मणोऽहं रेवणग्रामवासी, तत्र

---

रक्षक- यह है महाराज! (इस प्रकार खाली तुम्बी को दिखलाते हैं)।

राजा- इसका पानी कहाँ है?

रक्षक- (चोर को आगे बढ़ाकर) अरे! पानी के लुटेरे बोल।

राजा- तू कौन है?

चोर- संकोच करता और आ, आ करके गिड़गिड़ाता है।

रक्षक- अरे! शीघ्र बोल? नहीं तो......(इस प्रकार बेंत दिखाते हैं)।

चोर- भागते-भागते पी लिया।

राजा- तेरा क्या पता है? यह मैं पूछता हूँ।

चोर- भ-भ-भ-भगवन् (इस प्रकार डरकर अंट-संट बोलता है)।

विदू॰- (पृथ्वी पर लट्ठ मारकर) अरे! अभागे! भिखारी को लूटने वाले साफ-साफ बोल। नहीं तो.......।

चोर- भगवन्! मैं रेवण ग्राम का रहने वाला देवशर्मा नामक वेदपाठी ब्राह्मण

शिष्यान् वेदानध्यापयम्। एकदा यदा वनात्कुशानादाय प्रतिनिवर्ते तावत् भूचाललीलया कवलीकृतं सशिष्यं ग्रामं गुरुकुलं च विलोक्याहं वृत्तिकोच्छेदेन मूर्च्छितो जातः, पश्चात् लब्धसंज्ञो निर्व्यापारत्वेन याञ्चया जीवनं निर्वोढुमारब्धवान्। सोऽहं चिरकालात्तीव्रपिपासितः स्वपतोऽस्य जलमपहृत्यापिवम्। अतः परं भवान् प्रमाणम्।

विदूषक- धिक् त्वां वेदपाठिनम्, ब्राह्मणजातिं कलङ्कयति। (अपवार्य) शिरोऽस्य व्रश्चनीयम्।

राजा- भृकुटीमुद्यम्य, नायं चौरः, देशकलङ्कोऽयम् तस्मात्-

नेत्रे पिधाय विपिने गजसिंह संघे,
अङ्गात् बहिस्त्यजत भिक्षुकनीरचौरम्।

सर्वे- क्षम्यतां प्रजापालक! आपद्धर्मोऽयम्।

राजा- संक्षिपन्-

---

हूँ और मेरा गोत्र शाण्डिल्य है। मैं समीप ही गुरुकुल में छात्रों को वेद पढ़ाया करता था। एक बार जब मैं कुशों को लेकर वन से लौटता हूँ तो मैंने देखा कि शिष्यों के सहित वह गुरुकुल और ग्राम भूकम्प से तहस-नहस हो गया है। इस प्रकार सर्वनाश और जीविका का उच्छेद देखकर मैं मूर्च्छित हो गया। कुछ समय बाद चेतना आने पर मैंने अपने को निर्व्यापार (बेरोजगार) समझा और भीख माँग कर जीवन यापन करने लगा। इस प्रकार मैं बहुत समय से प्यासा था, इन महाशय को सोता हुआ जानकर मैंने इनका पानी चुराकर पी लिया अब इसके बाद आप जैसा उचित समझें वैसा करें।

विदू०- धिक्कार है! तुझ वेदपाठी को जो तू ब्राह्मण जाति को कलङ्कित कर रहा है। (आड़ करके) इसका तो सर ही उड़ा (काट) देना चाहिए।

राजा-(भौंह तानकर) अरे ! यह चोर नहीं है, यह देश पर कलङ्क है, इसलिये-

भिखारी का पानी चुराने वाले इस पापी की आँखों में पट्टी बाँधकर अङ्गदेश से बाहर हाथी सिंहों से भरे हुये घनघोर वन में छोड़ आओ।

सब लोग- हे प्रजानाथ ! क्षमा कीजिये इसने आपत्तिकाल में ऐसा किया है।

राजा- दण्ड को संक्षिप्त (हल्का) करते हुये-

तावन्न दर्शयतु देव! मुखं स्वकीयम्,
नाऽऽयाति यावदिह शृङ्गधरस्तपस्वी॥ 54॥

रक्षिणौ- तन्नेत्रयोः पट्टिकां वध्नीतः स च रोदिति।

राजा- भास्कर इव न्यायः सर्वत्र प्रसरति, तदाशु नीयतामक्षम्यापराधी, अस्मै चाऽकिञ्चनाय दीयतामशनं वसनं पानीयञ्च।

रक्षिणौ- यदाज्ञापयति भवान्! (इति नेत्रपिनद्धमादाय सभिक्षुकौ निर्गतौ)।

---

अन्वयः- नेत्रे पिधाय, अङ्गाद् बहिः गजसिंहसङ्घे विपिने भिक्षुकनीरचौरं त्यजत। हे देव! यावत् इह शृङ्गधरः तपस्वी न आयाति तावत् स्वकीयम् मुखं न दर्शयतु।

व्याख्या- नेत्रे- नयने, पिधाय=आच्छाद्य, नयनयोः पट्टिकां वद्ध्वेति भावः। अङ्गात्=अङ्गदेशात्, बहिः=वाह्ये, अपपरिवहिरञ्चवः पञ्चम्येति समासविधानज्ञापकाद्-वहिर्योगेऽप्यङ्गपदे पञ्चमी। गजसिंहसंघे=गजाश्च सिंहाश्चेति गजसिंहा तेषां संघः=समूहो यस्मिन्=करिकेशरिबहुले, विपिने=कानने, भिक्षुकनीरचौरम्=याचकजलतस्करम्, त्यजत=मुञ्चत यूयमिति शेषः। हे देव!=विप्रदेव नाम सम्बोधनं वा, यावत्=यावत्कालम्, इह=अङ्गदेशे, शृङ्गधरः=शृङ्गी तपस्वी, न=नहि, आयाति=आगच्छति, तावत् स्वकीयं=निजम्, मुखम्=वदनं, मह्यं न दर्शयतु, विप्रस्य देशनिष्कासनं यथा-

वपनं द्रविणादानं, स्थानान्निर्यापणं तथा।
एष हि ब्रह्मबन्धूनां, वधो नान्योऽस्ति दैहिकः।।

---

हे ब्राह्मण देवता! (देवशर्मा) जब तक शृङ्गी ऋषि इस अङ्गदेश में नहीं आते हैं तब तक आप अपना मुख (मुझे) मत दिखाना।

रक्षक- देव की आँखों में पट्टी बाँधते हैं और वह (देवशर्मा) रोता है।

राजा- न्याय तो सूर्य के समान सर्वत्र फैलता (लगता) है, अर्थात् जिस प्रकार सूर्य बिना भेदभाव के शूद्र तथा ब्राह्मण के घर में प्रकाश फैलाता है उसी प्रकार न्याय भी शूद्र और ब्राह्मण पर समान रूप से लागू होता है। अतः इस अक्षम्य अपराध करने वाले को यहाँ से शीघ्र ले जाओ और इस बिचारे अकिंचन भिखारी को भोजन वस्त्र और पानी (तुम्बी भरकर) दिया जाये।

रक्षक- आपकी आज्ञा शिरोधार्य है।

(इस प्रकार आँखों में पट्टी बँधे हुये वेदपाठी और भिक्षुक सहित दोनों रक्षक निकल जाते हैं।)

नेपथ्ये- हा! हताः वयम्-

अन्नं नास्ति जलं नास्ति, नास्ति द्रव्यं प्रतिक्रिया।
क्व गच्छेम वयं सर्वे, रोमपादोऽस्तु नो गतिः॥ 55॥

राजा- (श्रुत्वा) कुतोऽयं दीनस्वरः?

विदूषकः- यादृशं चिन्त्यते तादृशं पुरोदृश्यते।

राजा- स्पष्टमभिधीयताम्।

विदूषकः- चातका इव कृषका रटन्ति भोः!

राजा- बहिर्गत्वा कथ्यताम्, यच्छीघ्रं भवति व्यवस्था।

विदूषकः- कथयितुमेष चलामि (इति निर्गतः)।

---

अन्वयः- अन्नं न अस्ति, जलं न अस्ति, प्रतिक्रिया द्रव्यं अपि न अस्ति, वयं सर्वे क्व गच्छेम? नः गतिः रोमपादः अस्तु।

व्याख्या- अन्नम्=भोजनम्, न अस्ति= न वर्तते, जलम्=पानीयम् नास्ति, प्रतिक्रिया= अन्नं जलं च क्रेतुं प्रतीकाररूपं द्रव्यम्=मूल्यमपि नास्ति। वयम्=कृषकाः, सर्वे बुभुक्षिताः पिपासिताश्च, क्व =कुत्र, गच्छेम=व्रजेम, नः= अस्माकम्, गतिः=शरणम् अवलम्ब इत्यर्थः, रोमपादः=नृपः, अस्तु= भवतु रोमपादं विना न नोऽन्यागतिः।

---

नेपथ्य में- हा! हा!, हम लोग मारे गये-

खाने को रोटी नहीं, पीने को पानी नहीं, हा! हा! हमारे पास रुपया पैसा या ऐसी कोई वस्तु भी नहीं, जिससे अन्न पानी खरीद सकें। अब हम लोग कहाँ जायें? केवल राजा रोमपाद ही अब हमारी गति हैं। अर्थात् राजा रोमपाद ही हमारा दुःख दूर कर सकते हैं।

राजा- (सुनकर) यह आर्त्तस्वर कहाँ हो रहा है?

विदूषक- जैसा सोच विचार किया जाता है वैसा ही सामने आता है।

राजा- स्पष्ट बोलिये।

विदूषक- चातक (पपीहा) की भाँति किसान रट लगा रहे हैं।

राजा- बाहर जाकर इनसे कह दीजिये कि शीघ्र ही व्यवस्था हो जायेगी।

विदू०- लो मैं इनसे कहने के लिये चल पड़ा। (इस प्रकार निकल गया)।

**राजा-** अहो ! राजपदं सेवकपदादप्यतिनिगर्हितम्—

**शेरते रजनीमध्ये, सेवकाः सुखपूर्वकम्।**
**चिन्ताजर्जरराजानां, कुतो निद्रा कुतः सुखम्॥ 56॥**

**विदूषकः-** (प्रविश्य) प्रजानाथ ! आश्वासिता भूमिपुत्राः किन्तु कोशागारो गगनवच्छून्यस्तत्कथं ते तोष्यन्ते ?

**राजा-** त्वं ब्राह्मणपुत्रो नेदं वेत्सि यत् क्षत्रिया आप्राणम् कुर्वन्ति दानम्।

**विदूषकः-** भार्गवस्त्रिसप्तकुलः महीदानमकरोत्, दधीचिश्च शरीरदानम्, तस्मात् ब्राह्मणा यथाऽऽदातुं तथैव दातुमपि शौण्डा भवन्ति।

**विदूषकः-** अनर्होऽयमाक्षेपः।

---

**अन्वयः-** सेवकाः रजनीमध्ये सुखपूर्वकं शेरते (किन्तु) चिन्ताजर्जरराजानां कुतः निद्रा कुतः सुखम् ?

**व्याख्या-** सेवकाः=भृत्यकाः, रजनी मध्ये= रात्रिकाले, सुखपूर्वकम्=सानन्दम्, शेरते=स्वपन्ति, किन्तु चिन्ताजर्जरराजानाम्=आधिव्याकुलनृपाणाम्, चिन्तया जर्जरा इति चिन्ताजर्जरास्ते च ते राजान इति चिन्ताजर्जरराजानामित्यत्र कर्मधारय समासः, ततः राजान्हः सखिभ्यष्टजिति टच् प्रत्ययः, अनो लोपे रूपसिद्धिः। कुतः=अभावे, निद्राः=स्वापः, कुतः, सुखम्=शान्तिः, रङ्को निश्चिन्तं शेते राजा तु चिन्ताऽऽधिक्याच्छेतुमपि न शक्नोतीति तात्पर्यम्।

---

**राजा-** बड़े खेद का विषय है कि राजा का पद सेवक के पद से भी गर्हित है—

नौकर चाकर तो रात में निश्चिन्त होकर आनन्द से सोते हैं किन्तु चिन्ता से चकनाचूर बने हुये राजा लोगों को कहाँ नींद और कहाँ सुख सम्भव है ? अर्थात् उन्हें रात में भी चैन नहीं।

**विदू॰-** (प्रवेश करके) प्रजावत्सल! किसानों को आश्वासन दे दिया है, किन्तु खजानाघर (बैंक) तो आकाश की भाँति खाली है, अतः किसानों को क्या देकर तुष्ट किया जाये ?

**राजा-** अजी, तुम ब्राह्मण देवता के ही बालक हो, तुम नहीं जानते हो कि क्षत्रिय लोग प्राणों तक का दान कर डालते हैं।

**विदू॰-** परशुराम ने क्षत्रिय राजाओं से जीतकर ब्राह्मणों को इक्कीस बार पृथ्वी दान में दे दी। महर्षि दधीचि ने तो अपना शरीर ही दान में दे दिया। अतः ब्राह्मण लोग जिस प्रकार दान लेने में चतुर होते हैं, उसी प्रकार दान देने में भी शौण्ड (महामल्ल) होते हैं।

**विदू॰-** ब्राह्मणों के ऊपर इस प्रकार आक्षेप करना व्यर्थ है।

राजा—कथमिव ?

---

राजा- व्यर्थ क्यों ?

## • ॥ परशुराम ॥

परशुराम के पिता का नाम जमदग्नि था। जमदग्नि के पास एक ऐसी गाय थी, कि माँगने पर वह सभी पदार्थ दे देती थी। एक बार जमदग्नि का साढ़ू सहस्रार्जुन इस गाय (कामधेनु) को चुरा ले गया। जब जमदग्नि को पता चला तो गाय लेने हेतु उन्होंने परशुराम को भेजा, किन्तु सहस्रार्जुन ने गाय देने से मना किया। इस पर क्रुद्ध होकर परशुराम ने भयङ्कर परशु (फरसा) से सहस्रार्जुन की हजारों भुजायें काट डाली और उसे मार डाला। वे गाय लेकर पिता के पास लौट आये तथा उन्होंने सारा वृत्तान्त सुनाया। पिता जमदग्नि ने कहा कि हे राम! तुमने राजा का वध किया है, अतः तुम्हें हत्या लगी हुई है, इसका प्रायश्चित्त करने के लिये तुम सारी पृथ्वी की परिक्रमा (पृथ्वी के सभी तीर्थों का पर्यटन) करो। पिता की आज्ञा मानकर वे भूमण्डल की परिक्रमा करने चले गये।

इधर एक बार जमदग्नि जी जब समाधि में तल्लीन थे तब सहस्रार्जुन (कार्तवीर्य) के दस हजार लड़के उनके आश्रम में आये और उनका (जमदग्नि का) सिर काट कर अपनी राजधानी माहिष्मती (इन्दौर) को ले गये। दैवयोग से उसी समय परशुराम आ पहुँचे। परशुराम की माता रेणुका ने इक्कीस बार छाती कूट-कूट कर विलाप किया था, अतः परशुराम ने इक्कीस बार में क्षत्रियों को मार कर पृथ्वी को क्षत्रियहीन करने की प्रतिज्ञा कर डाली। वे क्रोध के मारे काँपने लगे और फरसा लेकर माहिष्मती पहुँच गये। वहाँ सहस्रार्जुन के दस हजार लड़कों को काट डाला, सारी सेना को भी मौत के घाट उतार दिया। उन्होंने पृथ्वी पर इक्कीस बार घूम-घूम कर क्षत्रियों का संहार किया और उनके खून से कुरूक्षेत्र में बड़े-बड़े नौ तालाब भर दिये बाद में माहिष्मती नगरी से अपने पिता का सिर ले आये और संजीवनी विद्या के प्रताप से धड़ से जोड़कर उन्हें जीवित कर दिया।

इस प्रकार हैहयवंशीय राजाओं को इक्कीस बार मार कर ब्राह्मणों को सारी पृथ्वी का इक्कीस बार दान दिया। इसीलिये विदूषक ने दानशूर बताने हेतु उक्त उदाहरण दिया। क्योंकि यह विदूषक भी जाति से ब्राह्मण है, अतः इसने ब्राह्मणों का पक्ष लिया। यह कथा श्रीमद्भागवत् के नवम स्कन्ध के 15वें और 16वें अध्याय में मिलती है।

**राजा-** नायं तर्कावसरः, अहं खलु कोशाभावे राजपात्राणि दत्वा स्वकर्त्तव्यं निर्वक्ष्यामि।

---

**राजा-** यह वादविवाद का समय नहीं है, हमारा तात्पर्य है कि कोश के अभाव में हम राजमहल के सभी (सोने चाँदी के) पात्रों को देकर अपने दीनरक्षण कर्त्तव्य का पालन करेंगे।

**• ॥ दधीचि ॥**

दधीचि द्वारा अस्थिदान की कथा श्रीमद्भागवत् के छठवें स्कन्ध में इस प्रकार हैः-

एक बार देवताओं और असुरों में भयङ्कर सङ्ग्राम हुआ, यह सङ्ग्राम शताब्दियों तक चलता रहा, देवताओं के सेनानायक इन्द्र थे और असुरों का सेनांनायक वृत्रासुर था। असुरों के और वृत्रासुर के प्रहारों से देवगण और इन्द्र भागने लगे। इन्द्र के सहित सभी देव ब्रह्माजी को अपनी व्यथा कथा सुनाई। पितामह ब्रह्माजी ने कहा कि यदि दधीचि की हड्डियों का वज्र बनाकर वृत्रासुर से लड़ाई की जाये तो वृत्रासुर मारा जा सकता है, अन्यथा उसके बध का कोई दूसरा उपाय नहीं है।

ब्रह्माजी के वचन मानकर इन्द्र ने ब्राह्मण वेष बनाया और उस वन में गये जहाँ महर्षि दधीचि का आश्रम था। दधीचि ने अपने तपोबल से इन्द्र के छद्मवेष को पहचान लिया और स्वागत करते हुये वे बोले- हे देवराज ! आपका आगमन यहाँ किस प्रयोजन से हुआ हम आपकी क्या सेवा करें? इन्द्र ने सारी कथा सुनाने के बाद उनसे अस्थिपञ्जर (हड्डियाँ) प्रदान करने की याञ्चा की। दधीचि बड़े दयालु थे। उन्होंने कहा कि यदि मेरा शरीर परोपकार में लग जाये, तो मैं अपने को भाग्यशाली समझूँ। ऐसा कहकर उन्होंने अपने सारे शरीर में नमक का लेप लगाया और प्राणायाम चढ़ाकर गायों के मध्य में बैठ गये। गायों ने धीरे-धीरे सारा नमकीन मांस चाट लिया। इन्द्र उस अस्थि पञ्जर को अपनी राजधानी अमरावती में ले आये। उस दधीचि के अस्थिपञ्जर से विश्वकर्मा ने वज्र बनवाया। इस वज्र को लेकर इन्द्र ने वृत्रासुर पर प्रहार किया, जिससे वृत्रासुर मारा गया। विदूषक ने ब्राह्मणों द्वारा दान देने के विषय में दधीचि का नाम लिया।

**विदूषकः-** अये ! पात्राणामभावे स्वयं कस्मिन् खादिष्यन्ति पास्यन्ति च?

**राजा-** दानवीरा लाभालाभौ न विचारयन्ति।

(ततः प्रविशति सशान्ता राज्ञी चेटी च)

**राज्ञी-** (प्रणम्योपविश्य च) आर्यपुत्रस्योद्विग्नतां विलोक्याहमागता, तत्र किं कारणमिति ज्ञातुमिच्छामि।

**राजा-** प्रिये ! अकालपीड़िता जना याचितुं मां शरणं प्रपन्नाः, कोशवित्तं प्रागेव प्रदत्तम्, सम्प्रति राजपात्राणि ददामि।

**राज्ञी-** आर्यपुत्र! शरणागतानां रक्षा प्रथमं कर्त्तव्यम् किन्तु पूर्वमहं स्वालङ्कारान् प्रदाय धर्मार्थं पूरयामि (इत्यलङ्कारानुद्दिधीर्षति)।

**राजा-** (वारयन्) तिष्ठतु, तिष्ठतु महादेवी ! अलमावेगेन ! एतानि सन्ति राजपात्राणि।

**राज्ञी-** किमर्थं वर्जति भवान् ?

**राजा-** प्रिये ! तव हृदयं जानामि, किन्त्विदानीं पात्राण्येव दातुं संकल्पितम्।

---

**विदू०-** अये ! पात्रों के अभाव में आप स्वयं किसमें खायें पियेंगे ?

**राजा-** दान देते समय दानवीर लाभ हानि की चिन्ता नहीं करते। तत्पश्चात् शान्ता के सहित रानी (पृश्नि) और चेटी प्रवेश करते हैं।

**रानी-** (प्रणामपूर्वक बैठकर) आर्यपुत्र की उदासीनता देखकर मैं यहाँ चली आई हूँ, अतः इस उदासी का कारण जानना चाहती हूँ।

**राजा-** प्रिये ! अकालग्रस्त कुछ लोग माँगने के लिये मेरी शरण में आये हुये हैं, कोश का सारा धन पहले ही दे चुका हूँ, इस समय राजमहल के समस्त पात्रों को देकर दीनों की रक्षा करूँगा।

**रानी-** आर्यपुत्र ! शरणागतों की रक्षा करना प्रथम कर्त्तव्य है किन्तु इस बार मैं अपने अलङ्कारों को देकर इस धर्मकार्य की पूर्ति करती हूँ (इस प्रकार आभूषणों को उतारना चाहती है)।

**राजा-** (मना करता हुआ) रुकिये महादेवि ! इतनी त्वरा करनी ठीक नहीं, इस कार्य के लिये राजपात्र हैं।

**रानी-** आप क्यों मना कर रहे हैं ?

**राजा-** प्रिये ! मैं तुम्हारा हृदय जानता हूँ, किन्तु इस समय मैंने पात्र दान का ही संकल्प (विचार) किया है।

**राज्ञी-** एवं चेन्न संकल्पं विकल्पयामि। सत्वरं दद्याद् दातव्यम्।

**राजा-** कस्कोऽत्र भोः!

**विदूषकः-** किं मां न पश्यति राजन्!

**राजा-** अहो ! विप्रवर्य ! भवानेवाभ्यन्तरे गत्वा स्वर्णरजतमयानि सर्वाणि पात्राणि समाहरतु।

**विदूषकः-** एवमस्तु (इति निर्गतः)।

---

**रानी-** यदि ऐसी बात है तो मैं आपके संकल्प (मनोरथ) को विकल्पित (खण्डित) नहीं करना चाहती हूँ। अब संकल्पित वस्तु शीघ्र ही दे दीजिये।

**राजा-** यहाँ कौन है?

**विदूषक-** राजन् ! क्या आप मुझे नहीं देख रहे हैं?

**राजा-** अहो प्रियवर्य! आप ही भीतर जाकर सोने और चाँदी के सभी पात्र (बर्तन) लिवा लाइये!

**विदूषक-** ठीक है इस प्रकार निकल गया।

## • ॥ ययाति ॥

ययाति की दो पत्नियाँ थीं, एक का नाम देवयानी था, यह शुक्राचार्य की कन्या थी, दूसरी का नाम शर्मिष्ठा था, जो दानवेन्द्र वृषपर्वा की कन्या थी, देवयानी के यदु और तुर्वसु नाम के दो पुत्र थे, तथा शर्मिष्ठा के द्रुह्यु, अनु और पुरु नाम के तीन पुत्र हुये। राजा ययाति शर्मिष्ठा से बहुत प्रेम करते थे और देवयानी से बहुत कम। इस बात से अपमानित होकर देवयानी ने अपने पिता शुक्राचार्य से ययाति की शिकायत की। कुपित होकर शुक्राचार्य ने ययाति (दामाद) को शाप दिया कि हे ययाति ! तू ऐसी जर्जर वृद्धावस्था को प्राप्त हो जाये कि जिससे स्त्रियों के काम का न रहे। शाप लगते ही ययाति पर घोर बुढ़ापा आ गया, जर्जर शरीर काँपने लगा, उठना बैठना चलना फिरना बन्द हो गया, तब अनुनय करने पर शुक्राचार्य ने शाप को हल्का करते हुये कहा कि यदि कोई अपनी जवानी देकर तुम्हारा बुढ़ापा ले सकता हो तो अदला-बदली हो सकती है। ययाति की कामवासना की तृप्ति नहीं हुई थी, उन्होंने ज्येष्ठ पुत्र यदु से बुढ़ापा लेकर युवावस्था देने को कहा किन्तु यदु इस बात पर सहमत नहीं हुये। इसी प्रकार अन्य पुत्रों ने भी ययाति के इस प्रस्ताव को ठुकरा दिया। अन्ततः ययाति ने अपने सबसे छोटे पुत्र पुरु से भी अवस्था बदलने को कहा। पितृभक्त पुरु ने पिता की आज्ञा मानकर अपनी युवावस्था उन्हें दे दी और उनकी वृद्धावस्था स्वयं ले ली। आगे चलकर इसी चन्द्रवंश में रोमपाद हुये, अतः उन्होंने अपने पूर्वजों की दानवीरता की बात कही। श्रीमद्भागवत् के नवम स्कन्ध में यह कथा मिलती है।

**राजा-** देवि ! वदान्यानां किमप्यदेयं नास्ति, मम पूर्वजः स्वपित्रे ययातये यौवनमपि दत्तवान्।

**राज्ञी-** प्रसिद्धमेवेमुपाख्यानम्।

**राजा-** कुलप्रतिष्ठा पालनीया।

**राज्ञी-** युक्तमेतत्।

**विदूषकः-** (प्रविश्य सकिंकरः) एते सन्ति पात्रकण्डोलाः।

**राजा-** सखे! वहिर्नीत्वैतानि पात्राणि यथायोग्यमकालपीड़ितेभ्यो वितरतु।

**विदूषकः-** अहमप्यकालग्रस्तः मह्यमपि किरीर्यताम्।

**राजा-** (विहस्य) त्यागशील ब्राह्मण नाऽकालेन ग्रस्यन्ते।

**विदूषकः-** (स्वगतम्) अहो! बहुमूल्यान्येतत्पात्राणि, कथं दास्यामि ? अथवा राजाज्ञैषा, अनिच्छयापि दादयन्ते, चिरं जीवतु दुर्भिक्षः यत्र रंका अपि राजानो भवन्ति (इति सपात्रैः किंकरै सह निर्गतः)

---

**राजा-** प्रिये! उत्तम दाताओं के लिए कोई वस्तु अदेय नहीं होती। सुना जाता है कि हमारे पूर्वज (पुरु) ने अपने पिता ययाति के लिए युवावस्था भी दे दी थी।

**रानी-** यह उपख्यान तो अत्यन्त प्रसिद्ध है।

**राजा-** इसलिए कुलप्रतिष्ठा (पूर्वजों के महत्त्व) की रक्षा करनी चाहिए।

**रानी-** ऐसा करना उचित ही है।

**विदूषक-** (बर्तनों के टोकरे लिए हुए नौकरों के साथ प्रवेश करके) यह लीजिए बर्तनों से भरी हुई टोकरियाँ।

**राजा-** मित्र इन बर्तनों को बाहर ले जाकर अकालपीड़ितों को यथायोग्य बाँट दो।

**विदूषक-** मैं भी अकाल का मारा हुआ हूँ मुझे भी बर्तन दीजिए।

**राजा-** (हँसकर) अजी! ब्राह्मण तो त्यागी तपस्वी होते हैं उन पर अकाल का प्रभाव कैसे पड़ सकता है ?

**विदूषक-** (मन में) अहह! ये बर्तन तो बहुत मूल्यवान हैं कैसे दिए जाए अर्थात् देते मन नहीं होता अथवा यह तो राजा का आदेश है न चाहने पर भी बाँटने ही पड़ेंगे। यह दुर्भिक्ष अमर रहे जिसमें रंक भी राजा बन रहे हैं (इस प्रकार पात्रपूर्ण टोकरों को लेकर नौकरों के साथ निकल जाता है)

**राजा-** प्रिये ! महतीयं दुर्भिक्षवेला, अस्यां धीरा अप्यधीराः, सत्यवादिनोऽप्यसत्यवादिनः, पूता अप्यपूता भवन्ति। श्रूयते हि पुरा दुर्भिक्षकाले जनाः स्वशिशूनपि, शवमांसान्यपि भक्षयामासुः, मूत्राण्यपि पपुः। आर्त्ता अखाद्यं खाद्यम्, अपेयं पेयं च मन्यन्ते। तस्मादधुनैव पुरोधसमाहूय वृष्टियागं तनोमि।

**राज्ञी-** प्रागेन मे मानसविचारः।

**राजा-** कोऽत्र भोः ?

**धावकः-** (प्रविश्य) एषोऽस्मि देव!

**राजा-** त्वं तावद्ब्रह्मकुलं गत्वा पुरोधसमानय।

**धावकः-** यदादिशति महाराज! (इति निर्गतः)

**राजा-** प्रिये! सर्वस्वं दत्वापि यदि प्रजादारिद्र्यं न नश्यति तदा किं स्यात्।

**राज्ञी-** तदाऽऽत्मानो विक्रीय कर्त्तव्यं पालयिष्यावः, एवं श्रूयते-

---

**राजा-** प्रिये! यह विकट दुर्भिक्ष का समय है, इसमें बड़े-बड़े धैर्यवान् भी धैर्य छोड़ देते हैं, सत्यवादी भी असत्य बोलने लगते हैं और पवित्र लोग भी पवित्रता छोड़ देते हैं। सुना जाता है कि प्राचीन काल के दुर्भिक्ष में लोगों ने भूख के मारे अपने बच्चों को भी खा लिया था, मुर्दों का मांस भी खाने लगे थे, प्यास से व्याकुल होकर मूत्र भी पीने लगे थे। आर्त्त लोग अखाद्य को खाद्य, अपेय को पेय मानने लगते हैं। अतः मैं पुरोहित जी को इसी समय बुलाकर एक वृष्टियज्ञ कराता हूँ।

**रानी-** मेरे मन में तो पहले से ही ऐसा विचार था।

**राजा-** यहाँ कौन है ?

**धावक-** (आकर) महाराज ! मैं यह हूँ।

**राजा-** तुम ब्राह्मणों के मुहल्ले में जाकर पुरोहित जी को बुला लाओ।

**धावक-** आपका जैसा आदेश (ऐसा कहकर निकल गया)।

**राजा-** प्रिये ! यदि सब कुछ दे डालने पर भी यह प्रजा की दरिद्रता दूर न हुई तो क्या उपाय करना होगा।

**रानी-** तब अपने को बेचकर कर्त्तव्य पालन करेंगे। ऐसा सुना जाता है कि-

धान्यं धनं कोशवलाढ्यराज्यम्,
दत्त्वापि तृप्तिं न यदा जगाम्।
तदा हरिश्चन्द्रनृपः प्रदातुम्,
विक्रीतवान् स्वं स्वसुतं स्वभार्याम्॥ 57॥

---

**अन्वयः**- यदा हरिश्चन्द्रनृपः धान्यं धनं कोशवलाढ्यराज्यं दत्त्वा अपि तृप्तिं न जगाम्, तदा प्रदातुं स्वयं स्वसुतं स्वभार्यां (अपि) विक्रीतवान्।

**व्याख्या**- यदा=यस्मिन्काले, हरिश्चन्द्रनृपः=हरिश्चन्द्रनामको राजा, हरिश्चन्द्र इत्यत्र प्रस्कण्वहरिश्चन्द्रावृषीति सूत्रेण सुडागमः श्चुत्वं च। धान्यम्=व्रीहिप्रभृति, धनम्=गोभूमिप्रभृति, कोशः=कञ्चनप्रभृति, बलम्=सैन्यम्, ताभ्यामाढ्यम=सम्पन्नम्, राज्यम्=स्वाधिकारक्षेत्रम्, दत्त्वापि=दानस्वरूपेण प्रदायापि विश्वामित्रायेति शेषः। तृप्तिम्=तुष्टिम्, न जगाम्= न प्राप्तं तदा प्रदातुम्=दानाय, स्वम्=आत्मानम्, स्वसुतम्=रोहितम्, स्वभार्याम्=शैव्याम्, अपि विक्रीतवान्=विचिक्राय।

---

जब राजा हरिश्चन्द्र को धन-धान्य, कोष, सेना और राज्य भी दान में देकर संतुष्टि नहीं हुई, तो उन्होंने अपने को और बेटा रोहिताश्व को तथा अपनी पत्नी शैव्या को बेच कर संकल्पित दक्षिणा चुकाई थी। अतः सभी प्रकार से कर्त्तव्य की रक्षा करनी चाहिये।

## • ॥ हरिश्चन्द्र ॥

सत्यवादी हरिश्चन्द्र सूर्यवंशी राजा थे। इनके प्रसिद्ध पिता त्रिशङ्कु थे। इनकी राजधानी अयोध्या में थी, एक बार इन हरिश्चन्द्र की सत्यवादिता की प्रशंसा वशिष्ठ ने इन्द्र की सभा में की। वहाँ पर विश्वामित्र भी उपस्थित थे। वशिष्ठ के चले जाने पर ईर्ष्यालु इन्द्र ने विश्वामित्र से कहा कि मुनिवर्य ! किसी प्रकार हरिश्चन्द्र को धर्म से डिगाने की कृपा करें, अन्यथा वह हमारा इन्द्र पद ले लेगा। विश्वामित्र ने इन्द्र की प्रार्थना मान ली और ब्राह्मण का रूप बनाकर वे हरिश्चन्द्र के पास पहुँचे। विप्रधारी विश्वामित्र ने पहले तो हरिश्चन्द्र से सारा राज्य माँग लिया, बाद में वे इतने बड़े दान के संकल्प की दक्षिणा माँगने लगे। राजा को जब दक्षिणा चुकाने का कोई और उपाय न मिला तो विश्वामित्र से कुछ समय में दक्षिणा चुकाने की स्वीकृति लेकर रानी शैव्या और पुत्र रोहित के सहित वे राजधानी से बाहर निकल पड़े। तीनों प्राणी चलते-चलते काशी जी में जा पहुँचे। काशी की गलियों-गलियों में घूमकर आप स्वयं तीनों को बेचने की पुकार करने लगे। शैव्या और रोहित को

अतः सर्वतोभावेन कर्त्तव्यं रक्षणीयम्।

**कञ्चुकी-** (प्रविश्य) राजन् ! हिमाञ्चलप्रदेशादागतौ भार्गवशिष्यौ द्वारदेशे भवन्तं प्रतिपालयतः।

**राजा-** शीघ्रं प्रवेशय।

**कञ्चुकी-** वाढम् देव! (इति निर्गतः)।

**राजा-** प्रिये ! न जाने किमर्थं प्रेषितौ शिष्यौ भार्गवेण?

**राज्ञी-** स्यात् किमपि प्रमुखं कारणम्?

(ततः शिष्यावादाय कञ्चुकी प्रविशति)

---

एक व्यक्ति ने खरीद लिया। हरिश्चन्द्र को बीरबाहुक नाम के चाण्डाल ने खरीद लिया। राजा ने तत्काल उपस्थित हुये विश्वामित्र को दक्षिणा दे दी। चाण्डाल की आज्ञा से वे श्मशान में कफन कर लेने में लग गये।

इतने पर भी विश्वामित्र शान्ति से नहीं बैठे और उन्होंने सर्प बनकर रोहित को डस लिया, उसकी अन्त्येष्टि करने हेतु शैव्या श्मशान में आई, राजा ने मालिक का कर न छोड़ा और पहचान कर भी रानी की आधी साड़ी ले ली। उसी समय चण्डाल ने राजा से कहा कि यह मुर्दा खाने वाली चुड़ैल है, इसका सिर काट डालो राजा चाण्डाल (डोम) के दास ही तो थे ही, उसकी आज्ञा का पालन करना अपना धर्म (कर्त्तव्य) समझा, उन्होंने रानी का सिर काटने हेतु जैसे ही तलवार उठाई, त्यों ही चाण्डाल रूप धारी धर्म भगवान् ने प्रकट होकर उनका हाथ पकड़ लिया तत्क्षण विश्वामित्र भी प्रकट होकर राजा से अति प्रसन्न हुये। पुत्र को जीवित कर उन तीनों को पुनः अयोध्या का राज्य सौंप दिया।

**कञ्चुकी-** (प्रवेश कर) राजन् ! हिमाचल शिखर से आये हुये परशुराम के दो शिष्य द्वार पर आपकी प्रतीक्षा कर रहे हैं।

**राजा-** उन्हें शीघ्र ले आइये।

**कञ्चुकी-** अच्छा महाराज! (इस प्रकार निकल गया)।

**राजा-** प्रिये ! न जाने किस लिये परशुराम ने शिष्यों को भेजा है?

**रानी-** कोई विशेष कारण होना चाहिये।

(तत्पश्चात् ब्रह्मचारियों के साथ कञ्चुकी प्रवेश करता है)

**कञ्चुकी-** (करसङ्केतेन) ब्रह्मचारिणौ ! एष सोमवंशावतंसो राजा वां दिदृक्षुर्देवीसहितास्तिष्ठति।

**राजा-** (सपत्नीक उत्थाय) अभिवादये तपोधनौ!

**शिष्यौ** (हस्तावुद्यम्य) विजयतां महाराज! (इत्यासने उपविशतः)।

**राजा-** (सभार्य उपविश्य) ननु कुशली जामदग्न्यस्तपोनिधिः ?

**शिष्यौ-** सर्वथा कुशल स भवन्तमनामयं पृष्ट्वाऽऽज्ञापयति।

**राजा-** किमादिशति लोकगुरुः ?

**शिष्यौ-** कथयति गुरुचरणोः यत् मम दीर्घसत्रे वैदिकेभ्यो दक्षिणाद्रव्यं त्वया प्रदेयमिति, तद्द्रव्यमादातुमावामिहोपस्थितौ, कार्यव्यग्रतया चेदानीमेव प्रतिनिवर्तावहे।

**राजा-** (जनान्तिकम्) प्रिये ! राजपात्राणि दत्त्वा प्रजातोषिताः इदानीं चात्मानं विक्रीय कर्त्तव्यं पालयामि।

**राज्ञी-** प्राणनाथ ! सहधर्मपालनाय सर्वोत्तमोऽयमवसरः तदहमलङ्कारान् दत्त्वा दक्षिणापूर्तिं करोमि।

---

**कञ्चुकी-** (हाथ से दिखाकर) ब्रह्मचारियों ! यह शशिकुलभूषण राजा (रोमपाद) महारानी के सहित विराजमान हैं और आपके दर्शनों की प्रतीक्षा कर रहे हैं।

**राजा-** (रानी के साथ उठकर) तपस्वियों ! हम आपको प्रणाम करते हैं।

**शिष्य-** (हाथ उठाकर) महाराज की विजय हो (इस प्रकार आसन पर बैठते हैं)।

**राजा-** (पत्नी के सहित बैठकर) जमदग्नि के पुत्र तपोनिधि श्रीपरशुधर सकुशल तो हैं ?

**शिष्य-** वे भली भाँति सकुशल हैं और आपकी कुशल क्षेम पूछँकर उन्होंने यह कहा है:-

**राजा-** क्या आज्ञा देते हैं सबके गुरु ?

**शिष्य-** पूज्यपाद गुरुजी ने यह कहा है कि मेरे इस याग में आचार्यों की दक्षिणा आप प्रदान करें, अतः दक्षिणा द्रव्य ले जाने हेतु हम यहाँ आये हैं, कार्यों में उलझे रहने के कारण हम दोनों अभी वापस लौट जायेंगे।

**राजा-** (आड़ करके) प्रिये ! महल के बर्तनों को देकर अभी प्रजा जनों को शान्त किया था, अब अपने को बेच कर कर्त्तव्य का पालन करना चाहिये।

**रानी-** प्राणनाथ ! मैं आपकी धर्मपत्नी हूँ। अतः धार्मिक सहयोग देने का (धर्म

**राजा-** अलमलमलङ्कारेण (इति वर्जयति)।

**राज्ञी-** आर्यपुत्र ! दानशौण्डेन भवता कथमहं प्रतिषिध्ये ?

**राजा-** न मया प्रतिषिध्यते किन्तु प्रकारान्तरं चिन्त्यते।

**राज्ञी-** नाथ! नायं चिन्तावसरः, तदेषां ददामि (इति निष्कास्य राज्ञो ददाति, राजा चादत्ते)

**राजा-** (अलङ्कारान् पुरस्कृत्य) भोः ब्रह्मचारिणौ! गृहय्तामाचार्यदक्षिणा।

**शिष्यौ-** (गृहीत्वा हस्तौ चोत्थाप्य) राजन्!

**शीघ्रं वर्षतु पर्जन्यस्तव राज्ये मुहुर्मुहुः।**
**पुत्रपौत्रादिभिः साकं, कीर्तिवल्ली प्रफुल्लताम्॥58॥**

---

**अन्वयः-** तव राज्ये पर्जन्यः शीघ्रं मुहुः-मुहुः वर्षतु। पुत्रपौत्रादिभिः साकं कीर्तिवल्ली प्रफुल्लताम्।

**व्याख्या-**तव=भवतः, राज्ये=देशे, पर्जन्यः=वारिदः, शीघ्रम्=आश्वेव, मुहुर्मुहुः=पुनः-पुनः, वर्षतु=वृष्टिं करोतु। पुत्रपौत्रादिभिः=पुत्राश्चपौत्राश्चेति पुत्रपौत्राः ते आदौ येषां तैरितिद्वन्द्वपूर्वकं बहुव्रीहिः। साकम्=सह, सहयुक्तेऽप्रधाने इति सूत्रेण तृतीया, कारकेऽन्वर्थता=अर्थ निबन्धनता भवत्येवेत्यलम्। कीर्तिवल्ली=कीर्तिरेव वल्ली=लतेति रूपकम्, मयूरव्यंसकादयश्चेति कर्मधारयसमासः, प्रफुल्लताम्=विकसतु।

---

पालन करने का) सर्वोत्तम अवसर है। इसलिये मैं अलङ्कारों को देकर दक्षिणाद्रव्य की पूर्ति करती हूँ।

**राजा-** बस-बस आभूषण मत निकालिये, (इस प्रकार रोकता है)।

**रानी-** आर्यपुत्र! आप जैसे दानवीर मुझे क्यों रोक रहे हैं ?

**राजा-** मैं रोकता नहीं हूँ किन्तु इस समस्या का दूसरा समाधान सोच रहा हूँ।

**रानी-** प्राणनाथ ! यह सोचने का समय नहीं है अतः मैं इन अलङ्कारों को देती हूँ (इस प्रकार अलङ्कारों को निकाल कर राजा को देती है और राजा ले लेता है)।

**राजा-**(अलङ्कारों को सामने रखकर) अहो ! ब्रह्मचारियों ! आचार्यों (यज्ञ कर्त्ताओं) की दक्षिणा लीजिये।

**दोनों शिष्य-**(दक्षिणा लेकर तथा हाथ उठाकर) राजन्! आपके राज्य में

**राजा-** तपोधनौ एतदुभयं न पश्यामि।

**शिष्यौ-** राजन् ! नावयोर्वाणी मिथ्या जायते (इति वदन्तौ निर्गतौ)।

**राजा-** प्रिये ! किमाभ्यामुक्तम् गच्छद्भ्याम् ?

**राज्ञी-** तापसोक्तमलीकं न भवति-

**वाचो वदन्ति मनुजाः सततं यथेच्छम्,**
**कश्चित् फलन्ति न फलन्ति च तासु काश्चित्।**
**पूतात्मनां यमवतां च तपोधनानाम्,**
**वाचः फलन्ति शशिसूर्यविपर्ययेऽपि॥ 59॥**

---

**अन्वयः-** मनुजाः सततं यथेच्छं वाचः वदन्ति, तासु कश्चित् फलन्ति कश्चित् च न फलन्ति। पूतात्मनां यमवतां तपोधनानां च वाचः शशिसूर्यविपर्यये अपि फलन्ति।

**व्याख्या-** मनुजाः=साधारणाः मानवाः, सततम्= अहर्निशम्, यथेच्छम्=इच्छानुसारम्, वाचः=शसिरूपम्, वदन्ति=गदन्ति, उद्देश्यविधेयभावान्न द्विरुक्तिः। तासु=वाक्षु काश्चिद्=वाचः, फलन्ति=सत्याः भवन्ति, काश्चित् च न फलन्ति=मिथ्या भवन्ति, किन्तु पूतात्मनाम्=शुद्धात्मनाम्, यमवताम्=नियमधारिणाम्=सत्यवादिनामित्यर्थः, तपोधनानाम्=तापसानाम् च वाचः, शशिसूर्यविपर्यये=दिवसे शश्युदये, रात्रौ सूर्योदये अथवा शशिन्युष्णे, सूर्ये शीतलेऽपि, फलन्ति अत्रातिशयोक्तिरलङ्कारः, वसन्ततिलकावृत्तम्।

---

अतिशीघ्र मेघ बार-बार वर्षा करें और पुत्र पौत्रादिकों के साथ-साथ आपकी कीर्तिलता प्रफुल्लित हो।

**राजा-** तपस्वियों ! ये दोनों बातें असम्भव लगती हैं।

**शिष्य-** राजन् ! हमारी वाणी मिथ्या नहीं हो सकती। (ऐसा कहते हुये निकल गये)।

**राजा-** प्रिये ! जाते हुये इन दोनों ने ऐसा क्यों कहा ?

**रानी-** तपस्वियों की वाणी मिथ्या नहीं होती-

मनुष्य इच्छानुसार सदा बोलते रहते हैं उनमें कुछ बातें सत्य तथा कुछ असत्य (निष्फल) निकल जाती हैं, किन्तु विशुद्ध आत्मा वाले जितेन्द्रिय तपस्वियों की वाणियाँ चन्द्रसूर्य के उलट-पलट हो जाने पर भी मिथ्या नहीं होती, अर्थात् चाहे दिन में चन्द्रमा और रात में सूर्य निकलने लगें या चन्द्रमा उष्ण और सूर्य शीतल ही क्यों न हो जायें, किन्तु तपस्वियों की वाणियाँ असत्य (निष्फल) नहीं होती।

**राजा-** अवितथमाह भवती! इदं धर्मकार्यं कृत्वाहमनिर्वाच्यमाह्लादमनुभवामि। वस्तुतोऽकिञ्चनेन दत्तमपरिमितं भवति।

**राज्ञी-** अयं निष्कर्षः। अभावे दानं यावत्तृप्तये न तावद्भावे।

(ततः प्रविशति पुरोहितः)

**राजा राज्ञी च-** (उत्थाय) अभिवादये गुरुवर्य!

**पुरोहितः-** कल्याणं भूयात् (इति सर्वे उपविशन्ति)।

**राजा-** भगवन् ! उत्तरोत्तरं विपत्तिवेगमालोक्याहमत्यन्तं खिद्ये, नहि सोमवंशे कश्चिदीदृशोऽधन्यः यस्य प्रशासने प्रजा ईदृशीं पीडामन्वभवन्, विहिता उपाया विफला भवन्ति। देवाराधनातिरिक्तं नोचितमुपायमवैमि। तस्मात् वृष्टियोगार्थं यज्ञानुष्ठानं प्रकल्पनीयम्। यतोहि यावच्छक्यं प्रयत्नं कृत्वा नरो न पश्चात्तपति।

**पुरोहितः-** चन्द्रवशांनुकूलोऽयं विचारः। उप्तं बीजं फलति किल। अतो वैदिकानाहूय सद्य एव जलाय वारुणमखमारभे।

---

**राजा-** आपने सवर्था ठीक कहा आज इस धार्मिक कार्य (दक्षिणादान) करके मैं अलौकिक आनन्द को प्राप्त कर रहा हूँ। वस्तुतः अकिञ्चन अवस्था में दिया हुआ दान अपरिमित (बहुत) जैसा हो जाता है।

**रानी-** आपका यह कथन सर्वथा सारपूर्ण है। अभाव स्थिति (कंगाली दशा) में दिया हुआ दान दाता को जितनी संतुष्टि प्रदान करता है, उतनी संतुष्टि सम्पन्नावस्था में दिया हुआ नहीं कर सकता। अर्थात् धनाभाव में दिये हुए दान का महत्वपूर्ण स्थान है।

(तत्पश्चात् पुरोहित का प्रवेश होता है)

**राजा और रानी-** (उठकर) गुरुदेव मैं अभिवादन करता हूँ।

**पुरो॰-** आप दोनों का कल्याण हो। (सब बैठ जाते हैं)।

**राजा-** भगवन् ! विपत्ति के उत्तरोत्तर वेग को देखकर मैं, अति दुःखी हो रहा हूँ, इस चन्द्रवंश में ऐसा कोई अभागा राजा नहीं हुआ, जिसके शासन काल में प्रजा ने ऐसा कष्ट भोगा हो। मैंने जो-जो उपाय किये वे सब विफल हो गये, अब देवानुष्ठान को छोड़कर कोई अन्य समुचित उपाय मुझे दिखलाई नहीं पड़ता। अतः जलयोगार्थ (वृष्टि हेतु) एक यज्ञ करने की कृपा करें, क्योंकि शक्ति के अनुसार प्रयत्न कर लेने पर मनुष्य पश्चात्ताप का भाजन नहीं बनता।

**पुरो॰-** आपका यह विचार चन्द्रवंश के अनुरूप ही है। बोया हुआ बीज

**राजा-** एतदर्थमपेक्षित सम्भारो मन्त्रिणा दास्यते।

**पुरोहितः-** एवमस्तु।

**नेपथ्ये-** कुत्राज्ञाकारी भगवान् पुरोहितपादः ?

**राजा-** (श्रुत्वा) भगवन् ! भवन्तमनवलोकयन्तो वेदपाठिनो व्याकुलीभवन्ति।

**पुरोहितः-** एवं तावत् ! पूजाकर्म समारब्धुं त्वरयाम्यहम्।

**राजा-** यथासुखं व्रजतु भवान् वारुणाय।

**पुरोहितः-** अहं सर्वं विरचयामि (इति निर्गतः)।

**राज्ञी-** नूनमनेन वारुणेनानुष्ठानेन सदेवो वरुणः प्रसत्स्यति।

**राजा-** प्रिये ! ममाप्यत्र भूयसी श्रद्धा वर्धते किन्तु ग्राम्यजनान् समृद्यायं दुर्भिक्षो राजधान्यामपि प्रविष्टः। नगरीं वीक्ष्यमाणेन मयालोचितं यत् द्वारे-द्वारे भिक्षुकाः

---

(अनुष्ठानादिकर्म) अवश्य ही फलवान होता है। अतः मैं वेदपाठियों को बुलाकर शीघ्र वर्षा होने के लिये एक वरुणयज्ञ का श्री गणेश करता हूँ।

**राजा-** इसके लिये अपेक्षित सामग्री मन्त्री द्वारा प्राप्त हो जायेगी।

**पुरो०-** बहुत अच्छी बात।

**नेपथ्य में-** आज्ञा देने वाले पुरोहित जी जाने कहाँ हैं ?

**राजा-** भगवन् ! आपको न देखने से वैदिक लोग बहुत व्याकुल हो रहे हैं।

**पुरो०-** हाँ ऐसा ही है। अच्छा अब मैं पूजा करने हेतु शीघ्र ही जाना चाहता हूँ।

**राजा-** वारुणयाग करने के लिये आप आनन्दपूर्वक जाइये।

**पुरो०-** मैं जाकर अभी सब कुछ (वेदी आदि) रचता हूँ (ऐसा कहता हुआ निकल गया)।

**रानी-** इस वरुण याग से अन्य देवताओं के साथ वरुणदेव भी अवश्य प्रसन्न होंगे।

**राजा-** प्रिये ! इस विषय में मेरी भी बहुत श्रद्धा बढ़ रही है, किन्तु गाँव के लोगों को कुचल कर यह दुर्भिक्ष अब राजधानी में घुस आया है। नगरी का निरीक्षण करने पर मुझे ज्ञात हुआ है कि भिखारी द्वार-द्वार पर घूम रहे हैं किन्तु गृहस्वामी केवल मर्यादा रखने के लिये बड़े दुःख से भिक्षा डाल देते हैं। बहुत से लोग गोग्रास

भ्रमन्ति किन्तु गृहस्वामिनः परम्परापालनायैव महता क्लेशेन भिक्षां क्षिपन्ति। बहवो जना गोग्रासं, काकवलिं, पितृतर्पणं, श्राद्धभोजनं, तुलसीसेचनमपि न कुर्वन्ति। तिलकं कृत्वा पालितपशूनुन्मुञ्चन्ति ब्रह्महत्याग्रस्ता इव म्लानमुखाः निःश्रीका जनाः मन्दं-मन्दं सञ्चरन्ति। हतोत्साहा याजका वेदध्वनौ नोत्सहन्ते, पूजकाश्च मन्दिरेषु घण्टानादमपि समुपेक्षन्ते। लोकमर्यादासमुच्छिन्नेव प्रतीयते। सत्यमिदम्-

**तावत्तिष्ठति मर्यादा, यावत्प्राणा निरापदः।**
**प्राणापदं समालोक्य, मर्यादा प्रपलायते॥60॥**

(नेपथ्ये स्वाहा-स्वाहा ध्वनिः)

---

**अन्वयः**- यावत् प्राणाः निरापदः (सन्ति) तावत् मर्यादा तिष्ठति, प्राणापदम् समालोक्य मर्यादा प्रपलायते।

**व्याख्या**- यावत्- यावत्कालम्, प्राणाः=असवः, निरापदः=आपत्तिरहिताः सन्तीति शेषः, तावत्=तावदवधिकम्, मर्यादा=समाजनियमावली लोकस्थितिरित्यर्थः। तिष्ठति=न चलति, प्राणापदम्=प्राणेष्वापद् तामिति सप्तमीशौण्डैरित्यत्र सप्तमीतियोगविभागात्तत्पुरुषसमासः प्राणहानिमितियावत्। समालोक्य= वीक्ष्य, मर्यादा=भीता सतीति सामान्यविशेषभावान्न- पुनरुक्तिः, प्रपलायते=झटिति पलायनं करोति।

---

काकवलि, जलाभाव के कारण पितृतर्पण और श्राद्ध में भोजन तथा तुलसी का सिञ्चन भी नहीं करते-कराते। जल और घासादि न होने के कारण लोग पालतू पशुओं के मत्थे पर तिलक लगाकर स्वच्छन्द (आवारा) छोड़ देते हैं। मानो लोगों को ब्रह्महत्या लग गई है, जिसके कारण श्रीहीन होकर मुरझाया मुख लिये फिर रहे हैं। पुजारी लोग मन्दिरों में (पूर्ववत्) घण्टा घड़ियाल नहीं बजा रहे हैं। सामाजिक मर्यादा छिन्न-भिन्न जैसी प्रतीत हो रही है। यह बात सत्य है-

जब तक प्राणों के ऊपर विपत्ति नहीं आती है, तब तक मर्यादा (लोक व्यवहार सीमा) स्थिर रहती है, किन्तु जब प्राणों पर विपत्ति आने लगती है तो मर्यादा शीघ्र ही भाग खड़ी होती है। अर्थात् आपत्तिकाल में मनुष्य मर्यादा को तोड़कर भी कार्य करने लगता है, कहा भी है कि आपत्तिकाले मर्यादा नास्ति।

(नेपथ्य में स्वाहा-स्वाहा का घोष होता है)

राज्ञी- (श्रुतिमभिनीय) आर्यपुत्र ! कुलगुरुणा राजपुरोहितेन यागकार्यमारब्धम्, गुञ्जति गगनमण्डलं स्वाहाघोषैः।

राजा- शृणोमि प्रिये ! तुष्यति ममान्तरात्मा श्रुत्वा वेदघोषान्।

महापौरः- (प्रविश्य) जयतु-जयतु देव !

राजा- वज्रबाहो ! कुशलं परितः ?

महापौर- कुशलं देव ! किन्तु........।

(नेपथ्ये- अरे रे! एते विषजन्तवो न विरमन्ति, वयं राजानं प्रति साधयामः)

धावकः- (प्रविश्य) प्रजावत्सल ! द्वारदेशे सपुरोहितो वैद्यः, सेनापतिः, नागरिकाश्च भवन्तं प्रतीक्षन्ते।

राजा- प्रवेशय सर्वान्।

धावकः- यथादिशति भवान्! (इति निर्गतः)

(ततः प्रविशन्ति सर्वे)

---

रानी- (सुनने का अभिनय करके) आर्यपुत्र ! कुलगुरु राजपुरोहित ने यज्ञ का कार्य आरम्भ कर दिया है, क्योंकि स्वाहा-स्वाहा के उद्घोष से गगनमण्डल गूँज उठा है।

राजा- हे प्रिये ! मैं सुन रहा हूँ। इस वेदघोष से मेरी आत्मा अत्यन्त पुलकित है।

महापौर- (प्रवेश करके) महाराज की जय हो!

राजा- वज्रबाहो ! सर्वत्र कुशल तो है ?

महापौर-हाँ, कुशल है देव ! किन्तु.......।

(नेपथ्य में- अरे ! ये विषैले जन्तु नहीं रुक रहे हैं अब हम सब राजा के पास चलते हैं)

धावक- (प्रवेश कर) प्रजावत्सल ! द्वार पर पुरोहित, वैद्यराज और सेनापति तथा नागरिक लोग आपकी प्रतीक्षा कर रहे हैं।

राजा- सबको प्रवेश कराओ।

धावक- आपकी जैसी आज्ञा (इस प्रकार निकल गया)

(तत्पश्चात् सबका प्रवेश होता है)

नागराः- जयतु-जयतु देव !

राजा- कस्तावद्युष्माकं प्रस्तावः ?

नागरः- प्रजानाथ ! अद्यश्वीनं मृत्युना सह सङ्ग्रामं कुर्मो वयम्। स्वयमेव रक्षातत्परं भवन्तं न किमपि वक्तुं शक्नुमः। सर्वे प्रतीकाराः निरर्थका भवन्ति, भुजङ्गाः, वृश्चिकाः, मूषकाः, गोधाः, वरटाः, पल्लिका, रक्तपिपीलिकाश्चोत्तरोत्तरमित्थं वर्धन्ते यत्त एव गृहेषु वत्स्यन्ति। कुक्कुराविडालाश्च भीता इवैषां दर्शनेन पलायन्ते, का कथा भक्षणस्य ? एते जाल्माः न केवलमन्नवस्त्राण्येव अपितु सुप्तबालवृद्धानपि विदारयन्ति। श्याममूषकाः हठपूर्वकं भित्तीरुद्भिद्य भवनान्यपि पातयन्ति। एतेषां जन्तूनां विषाक्तवातेन नाना रोगा उत्पद्यन्ते। तस्मात् यावत्तोयं न वर्षति तावद् भद्रं न पश्यामः, किं बहुना ? अनेनोपद्रवेण शीघ्रमेव नगरं धूलिशेषं भविष्यति। अपरं च-

अभ्रात्पतन्ति नरमूर्धसु गृध्रकाकाः,
घूका रटन्ति गृहमेत्य दिनेऽपि घोरम्।

---

नागरिक- जय हो महाराज की!

राजा- तुम लोगों का क्या प्रस्ताव है ?

नागरिक- प्रजानाथ ! आजकल हम लोग मृत्यु के साथ जूझ रहे हैं। आप स्वयं ही रक्षा करने में तत्पर हैं इसलिए हम आपसे कुछ नहीं कह पाते। आप जितने भी रक्षा के उपाय करते हैं वे सब निष्फल हो जाते हैं महाराज ! सर्प, बिच्छू, चूहे, गोह, बर्रें और छिपकली तथा लाल चीटियाँ आदि जन्तु इतने अधिक बढ़ रहे हैं कि मानों अब घरों में वे ही रहेंगे। कुत्ते और बिलाव तो इनको देखते ही डर के मारे दूर भाग जाते हैं, इन्हें खाने की तो बात ही क्या ? ये अभागे जन्तु न केवल अन्न और कपड़ों को ही काटते हैं अपितु सोते बालकों ओर बूढ़ों को भी कुतर डालते हैं। काले-काले ये मुचण्ड चूहे फटकारनें पर भी हठपूर्वक दीवारों की जड़ें कुरेद-कुरेद कर मकानों को गिरा देते हैं। इन जन्तुओं की जहरीली हवा के कारण नगर में भीषण बीमारियाँ तक फैल गई हैं। अतएव जब तक पानी नहीं बरसता है तब तक हम लोग अपना कशुल नहीं समझते। अधिक क्या कहें इस घोर उपद्रव के कारण यह नगर बहुत शीघ्र ही चौपट (मटियामेट) हो जायेगा और भी

आकाश से गीध और कौवे नर नारियों के सिर पर टूटते (गिरते) हैं और उल्लू तो दिन में भी घरों में घुसकर भयङ्कर रट लगाते हैं। बिलाव, कुत्ते, सियार

**मार्जार-कुक्कुर-शृगाल-खरा रुवन्ति,**
**वृक्षान्निपत्य कपयो भवने लुठन्ति॥ 61॥**

**सेनापतिः-** यथायथैतान् जन्तून् नियन्त्रयामि, तथा तथा वर्धन्ते।

**राजवैद्यः-** रोगान्नियन्तुं साम्रेडमौषधवितरणं कृत्वौषधालयोऽपि रिङ्क्ते।

**राजा-** (पुरोहितमुखमालोक्य) गुरूवर्य! किमत्रानुष्ठेयम् ?

**पुरोहितः-** लौकिका अलौकिका इत्युभय उपायाः प्रयुज्यन्ते, एकतः शृङ्गिणमानेतुं सेवका विसृष्टाः, अपरतश्च देवाराधनं चलति, आनखशिखं यतते। समये फलन्ति यत्ना बीजानि च।

---

**अन्वयः-** गृध्रकाकाः अभ्रात् नरमूर्धसु पतन्ति, दिने अपि घूकाः गृहमेत्य घोरम् रटन्ति। मार्जार-कुक्कुर-शृगाल-खराः रुवन्ति, तथा वृक्षात् निपत्य कपयः भवने लुठन्ति।

**व्याख्या-** गृध्रकाकाः=चिल्लकवायसाः, अभ्रात्=गगनात्, नरमूर्धसु=जनशीर्षेसु, पतन्ति= निपतन्तीत्यपशकुनम्, दिने=दिवसे, अपि=का कथा रात्रौ, घूकाः=दिवान्धाः, गृहम्=सदनम्, एत्य= आगत्य, घोरम्=भयकारकम् यथास्यात्तथा रटन्ति=शब्दायन्ते। मार्जार-कुक्कुर-शृगाल-खराः=विडाल-श्व-जम्बुक-रासभाः, रुवन्ति=रुदन्ति, तथा वृक्षात्=विटपात्, निपत्य= श्चुतित्वा, कपयः=मर्कटाः, भवने लुठन्ति=उल्लुठन्ति।

---

और गधे रोते फिर रहे हैं, इसी प्रकार बन्दर भी पेड़ों से गिरकर घरों से लोट-पोट करते और अपशकुन जनाते हैं।

**सेनापति-** इन जन्तुओं पर मैं जैसे-जैसे नियन्त्रण करता हूँ, वैसे-वैसे ही बढ़ते जाते हैं।

**राजवैद्य-** रोगों की रोकथाम हेतु रोगियों को औषध (दवा) बाँटते-बाँटते औषधालय भी खाली हो गया है।

**राजा-** (पुरोहित जी की ओर देखकर) गुरुवर्य ! अब इस विषय में क्या करना चाहिये ?

**पुरोहित-** लौकिक और अलौकिक दोनों प्रकार के उपाय किये जा रहे हैं, एक ओर शृङ्गी को लेने हेतु गुप्तचर छोड़े गये हैं, दूसरी ओर वृष्टि हेतु देवराधन चल रहा है। महाराज की ओर से एड़ी से लेकर चोटी तक के प्रयत्न किये जा रहे हैं। प्रयत्न और बीज समय पर ही फलीभूत होते हैं।

**नागराः**- यदि स ऋषिर्नागच्छति देवाराधनं च न फलति तदा किं करिष्यते?

**राजा**- उभयं भविष्यति, प्रतीक्ष्यतामेकमासः।

**नागराः**- यदि दैवादुभयं न स्यान्मासान्तेऽपि तदा?

(राजा राज्ञीकर्णे किमपि कथयित्वा)

**राजा**- (उत्थाय भुजमुत्थाप्य च) भो भोः ! नागरिकाः यदि दैवात् मासान्तेऽप्युभयोरेकं न भवति तदा श्रूयतां नः प्रतिज्ञा-

**मासान्तेऽप्युभयोरेकं, यदि कार्यं न सिद्ध्यति।**
**तदा जाज्वल्यमानायां, चितायां प्रविशाम्यहम्॥ 62॥**

---

**अन्वयः**- यदि मासान्ते अपि उभयोः एकं कार्यं न सिद्ध्यति, तदा अहं जाज्वल्यमानायां चितायां प्रविशामि।

**व्याख्या**- यदि=चेत्, मासान्तेऽपि=एकमासावसानेऽपि, उभयोः=उ ऋष्यागमन-देवाराधनयोः, एकम् अन्यतरत् कार्यम्=कर्त्तव्यम्, न=नैव, सिद्ध्यति=फलति, तदा अहम्=रोमपादः (राज्ञ्यपि), जाज्वल्यमानायाम् ज्वलधातोर्यङन्ताच्छानच्प्रत्यये सप्तम्यन्तं रूपम्। देदीप्यमानायामित्यर्थः, चितायाम्=चितौ, चिता-चितिस्त्रियमित्यमरः। प्रविशामि=प्रवेक्ष्यामि, वर्तमानसामीप्ये वर्तमानवद्वेति सूत्रेण रूपं सिद्धम्। एकमासस्य अन्तमतिसमीपं मत्वा राजा वदतीति तात्पर्यम्।

---

**नागरिक**- यदि वे बाबाजी नहीं आ सके और देवाराधन भी सफल न हो सका तो आप क्या करेंगे?

**राजा**- दोनों ही कार्य सिद्ध होंगे, आप लोग एकमास तक प्रतीक्षा करें।

**नागरिक**- यदि दैवयोग से मास पूरा होने पर भी दोनों कार्य सिद्ध न हुये तो?

(राजा रानी के कान में कुछ कहकर)

**राजा**-(सिंहासन से उठकर और भुजा उठाकर) हे! हे! नगरवासियों ! यदि एक मास के भीतर दोनों में से एक भी कार्य सिद्ध नहीं होता तो मेरी प्रतिज्ञा सुनो-

यदि एक मास के भीतर दोनों कार्यों में से एक कार्य भी सिद्ध न हुआ, तो मैं जलती हुई चिता में प्रवेश कर मर जाऊँगा।

**सर्वे-** शिव! शिव! शिव! प्रतिहतममङ्गलम्, राजन्! चिरञ्जीवी भवतु भवान्!

**पुरो.-**चन्द्रवंशावतंस ! देवास्त्वामभिरक्षन्तु, दिग्पालास्त्वां पालयन्तु, जीवत्वं शरदः शतम्।

**राजा-** मन्दभाग्यस्य मम शासने प्रजा इमामसह्यवेदनां सहते तस्मादहं मासान्तिमे दिवसे पापिष्ठमिदं शरीरं हुताशने हुत्वा पापमुक्तो भवामि।

**(नेपथ्ये-** हा ! हा ! कुत्र शरणम् जन्तूत्थैरोगैर्वयं मार्यामहे रक्षत्विदानीं रोमपादः)

**राजा-** (आकर्ण्य) भवन्तः स्वं-स्वं नियोगमशून्यं कुर्वन्तु, यन्मयोक्तम् तद् विधातुरप्यविकल्पनीयम्।

**सर्वे-** यदादिशति भवान्! (इति शोकमुद्रया सर्वे निष्क्रान्ताः)

**विदूषकः-** (सभयं प्रविश्य) भुजङ्गवृश्चिकै राजन्! मूषकदंशैः श्रीमन्! वरटासरटैर्धीमन्!

---

**सब लोग-** शिव! शिव! शिव!!! आपका अमङ्गल नष्ट हो। हे राजन्! आप चिरञ्जीवी होइये।

**पुरो.-** हे चन्द्रकुलभूषण राजन्! देवता आपकी रक्षा करें, दिग्पाल आपकी रखवाली करें, आप सैकड़ों वर्षों तक जीवित रहें।

**राजा-** मुझ जैसे मन्दभाग्य राजा के शासन में प्रजा असह्य वेदना को सहन कर रही है, इसलिये मास के अन्तिम दिन इस पापी शरीर को मैं आग में स्वाहा करके पापमुक्त हो जाऊँगा।

**नेपथ्य में-** हा! हा! अब कहाँ शरण मिलेगी ? विषैले जन्तुओं के कारण उठी हुई नाना बीमारियाँ हम लोगों को मार डालती हैं। अब राजा रोमपाद हम लोगों की रक्षा करें।

**राजा-** (सुनकर) आप लोग जाकर अपने-अपने कर्त्तव्य पर तत्पर हो जायें। मैंने जो कुछ कहा (प्रतिज्ञा की) है, उसे ब्रह्मा भी नहीं पलट सकता।

**सब लोग-** राजन् ! आपका जैसा आदेश है। (इस प्रकार शोक मुद्रा में सब निकल गये)।

**विदू॰-** (डरा हुआ प्रवेश कर) राजन् ! साँप और बिच्छुओं से श्रीमान् ! चूहों और डाँसों (वनमक्खों) से बुद्धिमान् ! वरों और गिरगिटों से......।

राजा- निर्भयमुच्यताम् शनकैः।

विदूषकः- एभिरनुद्रुतोऽहं पलाय्यात्मानं रक्षितवान्। एते मार्गे-मार्गेऽपि खेलन्ति।

राजा- मित्र ! असह्येयं विपत्तिवेला। वैभाण्डकं विचेतुं गतानाम् गुप्तचराणां वृत्तान्तोऽपि न ज्ञायते। मिलितोऽपि स आगच्छति न वा।

विदूषकः- यदि स आगच्छति तदा किं स्यात्?

राजा- तदा सुभिक्षः स्यात्, मासिकी मे प्रतिज्ञा चान्यथा स्यात्।

विदूषकः- ननु कीदृशी प्रतिज्ञा?

राजा- यदि स मासाभ्यन्तरे नाऽऽयास्यति तदाहमग्नौ प्रवेक्ष्यामीति।

विदूषकः- (दण्डमुत्थाप्य) ममापीयं प्रतिज्ञा यदि स शृङ्गधारी मासाभ्यन्तरे आयाति तदाहं जले प्रवेक्ष्यामि।

राजा- सखे ! मिलितोऽपि स शापं दत्त्वा तान् मारयेत्तदा किं स्यात्?

---

राजा- निडर होकर धीरे-धीरे कहिये।

विदू०- अरे! ये जहरीले जन्तु जब मेरे पीछे दौड़े तो भागकर मैंने अपनी रक्षा की। अजी ! ये जन्तु तो मार्गमार्ग (सड़कों) पर भी भगदड़ मचा रहे हैं।

राजा- मित्र! यह विपत्ति की असह्य बेला है। विभाण्डक के पुत्र शृङ्गी को खोजने हेतु गये हुये गुप्तचरों का कुछ पता भी नहीं चल रहा है। यदि वे मिल भी गये तो जाने आ सकेंगे या नहीं।

विदू०- यदि वे बाबाजी आ गये तो क्या होगा?

राजा- तब सुभिक्ष हो जायेगा और मेरी मासिक प्रतिज्ञा भी अन्यथा (निरस्त) हो जायेगी।

विदू०- अजी! कैसी प्रतिज्ञा?

राजा- यदि वह महात्मा एक मास के भीतर नहीं आयेगा तो मैं अग्नि में प्रवेश करूँगा।

विदू०- (डण्डा उठाकर) मेरी भी यह प्रतिज्ञा है कि यदि वह शृङ्गधारी एक मास के भीतर यहाँ आ जायेगा। तो मैं पानी में प्रवेश करूँगा।

राजा- मित्र ! मिलने पर भी वह महात्मा शाप देकर यदि गुप्तचरों को मार (भस्मकर) डाले तो क्या होगा?

**विदूषकः**-तदा तेऽपि शापं दत्त्वा तं मारयिष्यन्तीत्युभयोर्विनाशः, तदागमनाऽभावेऽत्रापि विनाशः।

**राजा**- ननु जनानां विनाशे नाहं राजा भविष्यामि।

**विदूषकः**- भविष्यति खलु भवान् राजा।

**राजा**- केषां भोः ?

**विदूषकः**- सर्प-वृश्चिकानाम्, गोधा-मूषकाणाम्, वरटा-सरटानाम्, मशक-शलभानाम् च।

**राजा**- अहं सत्यं वदामि, नोपायमवैमि।

**विदूषकः**- अस्त्युपायो महाराज!

**राजा**- कः सः ?

**विदूषकः**- अस्त्ययोध्यावासी राजा दशरथः, येनेयं राजकुमारी दत्तकत्वेन ते दत्ता।

**राजा**- साधूक्तम्।

---

**विदू०**- तब वे भी उस बाबा को शाप देकर भस्म कर डालेंगे, इस प्रकार दोनों का विनाश (सफाया) हो जायेगा। बाबा के यहाँ न आने से यहाँ भी सब चौपट (सफाया) हो जायेगा।

**राजा**- फिर तो नर-नारियों के अभाव में हम राजा नहीं रहेंगे।

**विदू०**- आप अवश्य राजा रहेंगे।

**राजा**- किसके राजा रहेंगे ?

**विदू०**- साँप और बिच्छुओं के, गोधा और चूहों के, वरों और गिरगिटों के, मच्छरों और टिड्डियों के आप राजा बने रहेंगे।

**राजा**- मित्र! मैं सत्य कहता हूँ कि इस समय कोई उपाय नहीं सूझता।

**विदू०**- महाराज! उपाय तो है।

**राजा**- वह कौन सा ?

**विदू०**- अयोध्या नगरी में एक राजा दशरथ रहते हैं। जिन्होंने यह राजकुमारी (शान्ता) आपको गोद में दी है।

**राजा**- आप का कथन सर्वथा सत्य है।

**विदूषकः**- स तेऽन्तरङ्गो वर्तते?

**राजा**- वर्तत एव।

**विदूषकः**- स च यथा दत्तककन्यां दत्त्वा तेऽनपत्यतादुःखं हृतवान्, स च तथैवाधुनापि तद्धर्त्तुं समर्थः।

**राजा**- एतदक्षरशः सत्यम्, किन्तु मित्र याञ्चा मित्रतां लघयति। अथवा हन्ति च। अपरं च याञ्चा मृत्योरपि गर्हिता।

**विदूषकः**- एवं चेत्त्यज्यतां चिन्ता, म्रियतां जनता। कस्तवात्ययः?

**राजा**- राज्ञा प्रजा, प्रजया राजेति धर्मव्यवहारं रक्षामि।

**विदूषकः**- भोः! यद्युपायसाध्यं नास्ति तत्र कस्य कोऽपराधः?

**राजा**- सखे! इदं सत्यम्, किन्तु मां तथापि ऋषिचिन्ता बाधते।

**विदूषकः**- अहो! भवन्तमृषिचिन्ता बाधते, मां निद्राचिन्ता बाधते।

---

**विदू**- वे आपके अन्तरङ्ग मित्र हैं?

**राजा**- हाँ हैं, हमारे अन्तरङ्ग मित्र।

**विदू॰**- उन्होंने अपनी कन्या को गोद में (दत्तक रूप में) देकर आपका अनपत्यता (सन्तान हीनता) का दुःख जिस प्रकार दूर किया, वही इस समय इस (दुर्भिक्षरूपी) दुःख को भी दूर कर सकते हैं।

**राजा**- आपकी यह बात अक्षरशः सत्य है किन्तु मित्र से कुछ माँगने पर मित्रता हल्की (तुच्छ) हो जाती है या फिर सर्वथा ही नष्ट हो जाती है। दूसरी बात यह भी है कि किसी से कुछ माँगना मृत्यु से भी अधिक घृणित (निन्दनीय) है।

**विदू॰**- यदि ऐसी बात है तो सारी चिन्तायें छोड़िये। यदि सारी प्रजा मर जाये तो मर जाये, आपकी क्या हानि है?

**राजा**- राजा से प्रजा और प्रजा से राजा इस धार्मिक व्यवहार (ममत्व) की रक्षा करता हूँ।

**विदू॰**- अजी! यदि उपाय करने पर कार्य नहीं बनता तो इसमें किसका क्या दोष है?

**राजा**- मित्र! यह आपका कथन ठीक है, किन्तु फिर भी मुझे ऋषि के आने की चिन्ता लगी रहती है।

**विदू॰**- अहो! आपको ऋषि चिन्ता लगी है, और मुझे नींद (सोने) की चिन्ता लगी हुई है।

**राजा-** किमस्य तात्पर्यम् ?

**विदूषकः-** इदं तात्पर्यम् यथा ऋषिचिन्ताकाले भवते किमपि न रोचते, तथैव निद्राकाले मह्यमपि कापि चर्चा न रोचते।

**राजा-** किमुपस्थितो निद्राकालः ?

**विदूषकः-** किं न पश्यति भवान् राजकुमारी तन्द्रिता वर्तते।

**राजा-** अहो ! ऋषिचिन्तया सर्वं विस्मृतम्।

**दिनं व्येति निशा व्येति, व्येति चायुः क्षणे-क्षणे।**
**विभाण्डकस्य पुत्रस्य, व्येति चिन्ता न चित्ततः॥63॥**

---

**अन्वयः-** क्षणे-क्षणे दिनं व्येति, क्षणे-क्षणे निशा व्येति (तथा) क्षणे-क्षणे आयुः व्येति किन्तु विभाण्डकस्य पुत्रस्य चिन्ता चित्ततः न व्येति।

**व्याख्या-** क्षणे-क्षणे=पले-पले, कृत्वा दिनम्= दिवसः, व्येति=व्यत्येति, व्युपसर्गपूर्वका दिण्धातोर्लटि अदादित्वाच्छपोलुकि, गुणे, यणि कृते व्येति रूपं सिद्धम्। क्षणे-क्षणे निशा=रात्रिः, व्येति=नश्यति तथा च क्षणे-क्षणे=प्रतिक्षणम्, आयुः=अवस्था अपि व्येति=क्षीयते, किन्तु विभाण्डकस्य पुत्रस्य ऋष्यशृङ्गस्य, चिन्ता=आगमनलालसः, चित्ततः=हृदयात् न व्येति=नाऽपैति।

---

**राजा-** इसका क्या तात्पर्य है ?

**विदू॰-** इसका यह तात्पर्य है कि जैसे बाबाजी की चिन्ता के कारण आपको कुछ भी अच्छा नहीं लगता उसी प्रकार नींद के कारण मुझे कोई चर्चा अच्छी नहीं लगती।

**राजा-** क्या निद्रा का समय हो गया है ?

**विदू॰-** क्या आप नहीं देख रहे हैं कि राजकुमारी (शान्ता) ऊँघ (तन्द्रित हो) रही हैं।

**राजा-** अहो ! ऋषि चिन्ता के कारण मैं सब कुछ (सोना भी) भूल गया।

एक-एक क्षण करके दिन बीत जाता है तथा एक-एक पल करके रात समाप्त हो जाती है एवम् एक-एक निमेष करके आयु भी क्षीण हो जाती है। किन्तु विभाण्डक के पुत्र शृङ्गी ऋषि के आगमन की चिन्ता (आशा) हृदय से दूर नहीं हो रही है।

**राज्ञी-** प्राणनाथ! असह्यविपत्तयश्चिरं न जीवन्ति, तस्मात् आसामन्तो निकटतीत्याशासे।

**राजा-** (बहिरालोक्य) अहो ! सर्वत्र नैशं तमः सर्वमावृणोति-

घोरं विकीर्य परितो हरितोऽन्धकारम्,
कोकान् वियोज्य सकलानपि मूर्छयित्वा।
रूपान्तरे च जगती परिवर्तयन्ती,
रात्रिञ्चरीव परिसर्पति रात्रिरेषा॥ 64॥

तस्मादधुनाऽभ्यन्तरमाश्रयामः।

(इत्युत्थाय परिक्रामन्तः सर्वे निर्गताः)

॥इति पञ्चमोऽङ्कः॥

---

**अन्वयः-** एषा रात्रिः रात्रिञ्चरी हरितः, परितः घोरम् अन्धकारं विकीर्य, कोकान् वियोज्य सकलान् अपि मूर्छयित्वा जगतीं च रूपान्तरे परिवर्तयन्ती सती परिसर्पति।

**व्याख्या-** एषा=इयम्, रात्रिः= निशा, रात्रिञ्चरी=निशाचरी, रात्रौ चरतीति चरेष्ट इति टप्रत्यये रात्रेः कृति विभाषेति वा मुमागमे, स्त्रीत्वविवक्षायां टित्त्वातङ्ीप्। इव=यथा, हरितः=दिशः, परितः=सर्वतः, अभितःपरितः नियमेन हरित्पदे द्वितीया। घोरम्=भीषणम्, अन्धकारं=तमं, विकीर्य=प्रसार्य, कोकान्=चक्रवाकान्, वियोज्य=विरहय्य, सकलान्=प्राणिनः, मूर्छयित्वा= अचेतयित्वा, जगतीं=लोकं च रूपान्तरे=श्यामरूपे, परिवर्तयन्ती=परिणमयन्ती सती, परिर्सपति=परिधावति, उपमालङ्कारः, वसन्ततिलका छन्दः।

---

**रानी-** प्राणनाथ ! ऐसी असह्य (जानलेवा) विपत्तियाँ अधिक समय तक नहीं ठहरती हैं। इसलिये मुझे विश्वास है कि इन विपत्तियों का अन्तकाल निकट आ चुका है।

**राजा-** (बाहर झाँककर) अहा! यह रात का अँधेरा सर्वत्र सबको ढँक रहा है-

राक्षसी के समान यह रात्रि दिशाओं में सर्वत्र घोर अन्धकार फैलाकर तथा चकवी चकवों को परस्पर में वियुक्तकर एवं सभी प्राणियों को मूर्छित (सुला) करके, संसार के दूसरे (सभी रंगों को काले रंग के) रूप में बदलती हुई सभी ओर आक्रमण कर (फैल) रही है। इसलिये अब भीतर चलना चाहिये।

(इस प्रकार उठकर सब घूमते हुये निकल गये)

॥पञ्चम अङ्क समाप्त॥

# ॥षष्ठोऽङ्कः॥

(ततः प्रविशन्ति गुप्तचराः)

**चपला-** सखि ! विमले ! दुर्गमेयमुपत्यका, लताऽऽलिङ्गिता सारवो दिवसमपि तमिस्रां तन्वन्ति। कुञ्जपुञ्जनिलीना कौशिकीयं नदी नीलाम्बरधारिण्यभिसारिकेव न परिचीयते। एकतस्तुषारमण्डिता गिरिमाला, अपरतश्चेयं निम्नगा, परितश्च हिंस्रजन्तुसमाकीर्णा अरण्यानी। चिरकालात् भ्रान्त्वापि नासाद्यते स शृङ्गधरः। आरोहावरोहपरायणानामस्माकं जर्जराणि जायन्ते गात्राणि। अशनपानादीनां शृङ्खलैव छिन्ना। अदृष्टमश्रुतं च कष्टमुपभुज्यते, मरणं वरमनेन जीवनेन।

**सर्वाः-** आ! न जाने केषां पापानां परिपाकोऽयम् ?

---

## ॥छठवाँ अङ्क॥

(तत्पश्चात् गुप्तचरों का प्रवेश होता है)

**चपला-** सखि ! विमले ! पर्वत की यह उपत्यका (निचली चोटी) तो अत्यन्त दुर्गम है। लताओं से वेष्टित ये सघन वृक्ष दिन को भी अँधेरी रात बना रहे हैं। कुञ्जों के झुरमुट से ढकी हुई यह कौशिकी नदी श्यामवस्त्रधारिणी अभिसारिका के समान दिखाई नहीं देती। एक ओर हिम (बर्फ) से आच्छादित ये पर्वत श्रेणियाँ हैं, दूसरी ओर गहराई में बहती यह नदी है, हिंस्रक जन्तुओं से भरा हुआ यह अरण्य है। चिरकाल से खोजबीन करने पर भी उस सींग वाले बाबा का पता नहीं चलता है। ऊँचे-नीचे पहाड़ों पर चढ़ने उतरने से हम लोगों के अङ्ग चकनाचूर हो गये हैं। खाने-पीने की नियमशृङ्खला तो सर्वथा छिन्न-भिन्न हो गई है। हम लोग इतना कष्ट झेल रहे हैं कि जो कष्ट न कभी सुना था, न देखा था। इस जिन्दगी से तो मरना अच्छा है।

**चरियाँ-** हाँ नहीं जान पड़ता कि यह किन पापों का फल है ?

### • ॥ कौशिकी ॥

वाल्मीकीय रामायण के बालकाण्ड में विश्वामित्र ने अपना परिचय बताते हुये राम से कहा कि मैं राजा गाधि का पुत्र हूँ।

**मायापतिः-** अहो! अबला! धैर्यं न मुञ्चत दुःखोत्तरैव फलाप्तिः। अहमग्रेसरामि यूयं पृष्ठे।

(सर्वे तथा कुर्वन्ति)

**मायापतिः-** हुम्! तिष्ठत यूयम्। भयम्-भयम्।

**सरला-** आर्तनाद इव भवति।

**मा.प.-** कुत्रचित् केनापि व्याघ्रेण गज आक्रम्यते।

**विमला-** अतो मौनपदैः गमेलिमम्।

**मा.प.-** युक्तमाह विमला! शनै-शनैरनुयात् माम्।

(पुनः सर्वे चलन्ति)

---

सत्यवती नाम की एक मेरी बड़ी बहिन थी। वह ऋचीक मुनि को ब्याही थी। कुशवंश में उत्पन्न होने के कारण मुझे कौशिक और मेरी बहिन को कौशिकी कहा गया है। अत्यन्त पतिव्रता होने के कारण वह सदेह स्वर्ग को चली गई और वही दूसरे रूप में नदी बन कर बहने लगी जिसको कौशिकी नदी कहा जाता है। बहिन में प्रेम होने के कारण मैं सदा कौशिकी के तट पर आश्रम बना कर तपस्या करता रहता हूँ।

यह नदी हिमालय की तराई से निकलती है, यथासम्भव इसी नदी को आजकल कोशी नाम से कहते हैं। विश्वामित्र हिमालय में अपने आश्रम को छोड़कर सिद्धाश्रम में यज्ञ करने हेतु आये थे यह सिद्धाश्रम अब बिहार प्रान्त में बक्सर के नाम से जाना जाता है, यह स्थान गङ्गा के दक्षिण तट पर विद्यमान है। यहीं पर वामन भगवान् ने तपस्या की थी। विश्वामित्र यज्ञ रक्षा हेतु राम लक्ष्मण को यहीं पर लाये थे।

**मायापति-** अहो ! अबलाओं ! धैर्य न छोड़ों दुःख के बाद ही सुख मिलता है। मैं आगे-आगे चलता हूँ और तुम सब मेरे पीछे चलो।

(सब लोग वैसा ही करते हैं)

**मायापति-** हुम् ! रुको सब लोग, डर है डर है।

**सरला-** चीत्कार जैसा सुनाई दे रहा है।

**मा.प.-** कहीं पर कोई सिंह हाथी से जूझ (लड़) रहा है।

**विमला-** इसलिये मौनपैरों (बिना आहट) से चलना चाहिये।

**मा.प.-** विमला ठीक कह रही है, तुम लोग मेरे पीछे-पीछे चलो।

(सब लोग फिर चलने लगते हैं)

मा.प.- अहो! कुतोऽयं चर्चरध्वनिः ?

चपला- (दूरं वीक्ष्य) आवुत्त! अधोभागे कण्डूयता मत्तदन्तिना तरूरुत्पाट्यते।

मा.प.- (विलोक्य) सत्यं स दृश्यते।

चपला- पश्यत्वावुत्त! पारेनदि तृषार्त्तमेणकुलमम्भः पातुमायाति, किन्त्वस्मानालोक्य पराङ्मुखं ढौकते।

मा.प.- सम्यक् पश्यामि।

चपला- सतर्कं गन्तव्यम्।

विमला- परितो मृत्युर्नृत्यति।

सरला- (पृष्ठतो विलोक्य) भयं-भयम्। केनापि विद्राविता तिमिरपोटलिका इव भल्लुका अस्माननुधावन्ति।

मा. प.- अत्याहितम्। तच्छीघ्रमारूह्यतामुत्तुङ्गश्रृङ्गम्।

(सर्वे तथा रोहन्ति)

---

मा.प.- अहो ! यह चर्चर शब्द कहाँ हो रहा है ?

चपला- (दूर देखकर) बहनोई जी ! (बाबूजी) नीचे के भाग में शरीर खुजलाते हुये एक मतवाले हाथी ने पेड़ उखाड़ डाला है।

मा.प.- (देखकर) ठीक है, वह दिखाई दे रहा है।

चपला- देखिये बाबूजी ! नदी के पार प्यासे हिरणों का झुण्ड पानी पीने के लिये नदी की ओर आ रहा है, किन्तु हम लोगों को देखकर वापस भाग रहा है।

मा. प.- हाँ, मैं खूब देख रहा हूँ।

चपला- सतर्क होकर (देखभालकर) चलना चाहिये।

विमला- क्योंकि चारों ओर मौत नाँच रही है।

सरला- (पीछे देखकर) डर है, डर है। हाँ किसी जन्तु द्वारा विदकाये हुये अन्धकार की गठरियों के समान ये काले-काले भालू हम लोगों का पीछा कर रहे हैं।

मा.प.- यह अत्यन्त भय है। इसलिये हम लोग शीघ्र ही ऊँची चोटी पर चढ़ जायें।

(इस प्रकार सब ऊँची चोटी पर चढ़ जाते हैं।)

**विमला-** प्राणहारकमिदमरण्यम्।

**सरला-** वेपन्ते मम गात्राणि घर्घरायमाणाश्चलन्त्येते।

**विमला-** नन्वत्र धैर्यमपि धैर्यं मुञ्चति।

**चपला-** अतएव राजसेवा अङ्गाराधिरोहणं कथ्यते।

**सरला-** यदैते भल्लूकाः निर्गच्छन्ति तदाहं पुनर्जन्म मन्ये।

(इति समवेताः समयं प्रतिपालयन्ति)

**मा. प.-** अहह! निर्गतमृक्षवृन्दम् मार्गान्तराभावादवतीर्य पुनस्तथैवोपसर्पणीयम्, किन्तु पादस्खलनं मा भूदिति शनैरवतरेम।

(सर्वे तथा कुर्वन्ति)

**चपला-** पश्य कौशिकीतीरे पाटलवर्णा गण्डशिला विलसन्ति। मलिना पदपंक्तिरपि दृश्यते, अतः कस्याश्चित्कामिन्या यावकक्षालितमित्यवैमि।

**मा.प.-** धिक् चपले ! कुतोऽत्र निर्जने तत्सम्भवः ? तस्मादवश्यमेव वनान्निर्गत्य कश्चिदायाति तापसः, यो हि स्नानोत्तरं काषायाम्बरं प्रक्षालयति।

---

**विमला-** यह कान्तार तो प्राण हरण करने वाला है।

**सरला-** मेरे तो हाथ पैर काँप रहे हैं। हा! ये घर्घर ध्वनि करते हुये चल रहे हैं।

**विमला-** अजी ! यहाँ तो धैर्य के भी छक्के छूटते हैं।

**चपला-** इसीलिये तो राजाकी सेवा को अङ्गारों पर चलना कहा गया है।

**सरला-** जब ये भालू निकल जायें तो मैं पुनर्जन्म (नया जन्म) मानूँगी।

(सब इकट्ठे होकर भालुओं के निकल जाने की प्रतीक्षा करते हैं)

**मा.प.-** अहह ! रीछों का झुण्ड निकल गया है। दूसरी पगडण्डी न होने से अब उतर कर पूर्वमार्ग से ही चलना चाहिये, किन्तु पैर न फिसल जायें, अतः धीरे से उतरना चाहिये।

(सब लोग वैसा ही करते हैं)

**चपला -** देखो ! कौशिकी नदी के किनारे पर लाल रंग से लिप्त ऊँची-ऊँची शिलाएँ पड़ी हैं। यह धुँधली पगडण्डी भी दिखाई दे रही है। मैं समझती हूँ कि यहाँ किसी कामिनी ने यावक महावर धोया होगा।

**मा.प.-** चपले ! तुझे धिक्कार है ! यहाँ निर्जन वन में यावक होने की सम्भावना कैसे हो सकती है ? इसलिये वन से निकल कर कोई तपस्वी यहाँ अवश्य आता होगा, जो स्नान के बाद अपने गैरिक (गेरूवा) वस्त्र धोता होगा।

**विमला-** साधूक्तं भवता, साधुसञ्चारं बिना कुतोऽयं गैरिकरागः।

**मा.प.-** अस्मिन् प्रभातकाले नूनमत्र स्नातुं केनापि तपस्विनाऽऽगन्तव्यम्। तस्मात् रहस्यं वेदितुं श्रमं चापनेतुं यूयं लतोदरे पिधत्त, अहं च तरुशिखरमारुह्य तत्त्वं पश्यामि।

**सर्वाः-** यथादिशति भवान्! (इति यथोक्तमनुतिष्ठन्ति)।

**सरला-** सुरक्षितेऽपि लतामण्डपे न सुरक्षा लगति, विवशा वयम्।

**विमला-** अहो! सखि! उभयतो मृत्युः-

**यदि चम्पां गमिष्यामो, राजावश्यं हनिष्यति।**
**वने चेद् विचरिष्यामः, खादिष्यन्ति वनेचरः॥ 65॥**

---

**अन्वयः-** यदि चम्पाम् गमिष्यामः, तदा राजा अवश्यम् हनिष्यति। चेद् वने विचरिष्यामः तदा वनेचराः खादिष्यन्ति।

**व्याख्या-** यदि=चेत्, चम्पाम्=अङ्गदेशस्य राजधानीम्, गमिष्यामः=निवर्त्स्यामः, तदा राजा= रोमपादः, अवश्यम्=ध्रुवम्, हनिष्यति=मारयिष्यति, चेत्=यदि, वने=कानने विचरिष्यामः= शृङ्गिणं विचेष्यामः, तदा वनेचराः=हिंसकप्राणिनः, अस्मान् खादिष्यन्ति= कवलीकरिष्यन्ति।

---

**विमला-** आपने ठीक कहा। तापस सञ्चार के बिना यह गेरूवा रंग कहाँ से आ सकता है?

**मा.प.-** देखो! यह प्रातःकाल का समय है, इस समय कोई महात्मा स्नान करने हेतु यहाँ अवश्य आयेगा, अतः रहस्य जानने के लिये और थकान दूर करने के लिये तुम लोग लतामण्डप में छिपकर बैठ जाओ, मैं वृक्ष की चोटी पर चढ़कर स्वार्थ की खोज करता हूँ।

**सभी-** आपका जैसा आदेश! (ऐसा कहकर वेश्यायें लता मण्डप में घुस जाती हैं और नायक पेड़ की चोटी पर चढ़ जाता है)।

**सरला-** सुरक्षित लता मण्डप में भी सुरक्षा नहीं लग रही है क्या करें विवशता है।

**विमला-** हा सखि! दोनों ओर मौत है-

यदि हम लोग चम्पानगरी (राजधानी) को वापस लौटकर जाते हैं तो राजा अवश्य मार डालेगा, और यदि शृङ्गी को ढूँढने हेतु वन में घूमते हैं तो जंगली जीवजन्तु भक्षण कर लेंगे।

(ततः प्रविशति राक्षसी राक्षसश्च)

**राक्षसः**- अये ! प्रिये चण्डोदरि ! अद्य प्रातरेव ममोदरे जाठराग्निः प्रकुप्यति तत् ब्रूहि किं खादानि ?

**राक्षसी**- अरे चण्डोदरे! धैर्यं धर। अस्यां वेलायां कश्चिज्जन्तुः जलं पातुमवश्यं नदीमवतरिष्यति, स आवयोराहारः।

**राक्षसः**- सत्यं लपसि रे! तावत्त्वं लताभ्यन्तरे विश्रम। यावदहं वृक्षमूलमाश्रित्याहारं पश्यामि।

**चपला**- हा! हा! यदीयं लतामण्डपे प्रविशति तदा नूनमस्मान् खादिष्यति।

**सरला**- समाप्ता नो जीवनलीला।

**विमला**- अङ्गलीला च (इति भीत्वा परस्परमालिङ्गन्ति)।

---

(तत्पश्चात् राक्षस और राक्षसी प्रवेश करते हैं)

**राक्षस**- अरी प्यारी चण्डोदरी ! आज तो सवेरे से ही मेरे पेट में भूख की आग लग रही है। तू ही बतला कि मैं क्या खाऊँ ?

**राक्षसी**- अरे चण्डोदर ! धीरज धर, इस समय पानी पीने के लिये कोई न कोई जन्तु अवश्य ही नदी पर आयेगा। वही हम दोनों का आहार होगा।

**राक्षस**- तू ठीक कहती है। तब तक तू इस लतामण्डप के भीतर विश्राम कर और मैं इस पेड़ की जड़ पर बैठकर शिकार की टोह लेता हूँ।

**चपला**- हा! हा! यदि यह वनमानुषी इस लतामण्डप में घुसती है तो हम सबको अवश्य खा लेगी।

**सरला**- आज हम लोगों की जीवन लीला समाप्त है।

**विमला**- अङ्गदेश की जीवन लीला भी समाप्त समझिये। अर्थात् हम लोगों के न रहने से शृङ्गी की खोजबीन बन्द हो जायेगी और उनके न पहुँचने से दुर्भिक्ष के कारण अङ्गदेश का सत्यानाश हो जायेगा।

(इस प्रकार डर के मारे एक दूसरे का आलिङ्गन करने लगीं)

**राक्षसी-** अरे निर्दय ! राक्षस ! त्वत्तः पृथक् क्षणमपि न जीवामि। अतस्त्वमप्यागच्छ, आवां सहैव लतोदरे विश्रमावः।

**सर्वाः-** हा ! चतुर्दिक् मरणम्। मृत्युरिमौ (इति बिभ्यति)।

**राक्षसः-** अयि चण्डि ! कठिनमेतत्। लताव्यूहाज्जन्तुर्न द्रक्ष्येत मया विना त्वया न स्थास्यते। तस्मादुभावेव मूलमेवाश्रयावः।

**राक्षसी-** सत्यं वक्षि!

**मा.प.-** (अधो वीक्ष्य) हा तात ! हा मातः ! यदिमौ वृक्षारूढं मां द्रक्ष्यतस्तदावश्यं मे नैवेद्यं करिष्यतः (इति कम्पते)।

**राक्षसी-** भो चण्डोदर ! मानुषगन्ध इव वाति।

**राक्षसः-** अयि ! दुर्बुद्धे ! कुतोऽत्र निर्जने मानुषगन्धः ?

**राक्षसी-** अहो ! हतक ! तुभ्यं शपे मन्दमते ! नरगन्धिर्वाति।

---

**राक्षसी-** अरे निर्दय राक्षस ! तेरे बिना मैं क्षणभर भी जिन्दा नहीं रह सकती, इसलिये आ जा, हम दोनों ही लतामण्डप में विश्राम करें।

**सभी-** हा ! चारों ओर से मौत आ गई। ये दोनों हमारी मौत बनकर आ रहे हैं। (इस प्रकार घबराती हैं)।

**राक्षस-** अरी कोपकारिणि ! यह कठिन समस्या है। लताजड़ से शिकार नहीं दिखाई देगा, और मेरे बिना तू नहीं रह सकती। इसलिये आ, हम दोनों ही पेड़ की जड़ पर विश्राम करें।

**राक्षसी-** तू ठीक बोलता है।

(इस प्रकार दोनों ही वृक्षमूल के सहारे आराम करने लगते हैं)

**मा.प.-** (नीचे देखकर) हा पिता ! हा माता ! यदि ये दोनों मुझे वृक्ष पर चढ़ा हुआ देख लेंगे तो अवश्य मुझे प्रसाद बनाकर खा जायेंगे। (इस प्रकार काँपता है)।

**राक्षसी-** अरे ! चण्डोदर ! यहाँ आदमी की गन्ध आ रही है।

**राक्षस-** अरी पगली ! इस निर्जन वन में आदमी की गन्ध कहाँ से आ सकती है ?

**राक्षसी-** अरे अभागे मतिमन्द (पगले) तेरी सौगन्ध खाकर कहती हूँ कि यहाँ आदमी की गन्ध (बू) आ रही है।

**राक्षसः**- रे जल्पाक ! किं दिवापि स्वप्नायते, नरो नास्ति कुतस्तद्गन्धिः ?

**राक्षसी**-इतस्ततः पश्य! नाहमभल्लं भणामि।

**राक्षसः**- त्वमेव पश्य।

**राक्षसी**- निद्राबाधिताहं कथं तच्छक्नोमि ?

**राक्षसः**- किं किं, निद्राप्ति भोः!

**राक्षसी**- सत्यं मां निद्रा मर्दयति।

**(इति निद्रिता लेटयति)**

**राक्षसः**- हुम्! प्रलपन्त्येव शिलातले प्रसुप्ता, सत्यमेषा रात्रौ भ्रमणात्परिश्रान्ता, अतो नाहं जागरयामि, अन्यथा कुट्टयिष्यति माम् (उपर्यालोक्य) कथं विरुवन्त एते खगाः तरुशिखरं परिक्राम्यन्ति, स्यात् वनविडालः। उताहो! मामेवालोक्य विद्रवन्ति। अतः प्रस्तरान् प्रक्षिप्य वारयामि, अन्यथासौ जागरित्वा मह्यं शप्स्यति।

**(इति प्रस्तरान् प्रक्षिपति)**

---

**राक्षस**- अरी बकवास करने वाली ! क्या दिन में (जगते हुये) भी तुझे सपना दिखाई दे रहा है। यहाँ आदमी ही नहीं तो उसकी गन्ध कहाँ से आ सकती है?

**राक्षसी**- इधर उधर देख, मैं अभल्ल (असत्य) नहीं बोलती।

**राक्षस**- अरी ! तू ही क्यों नहीं देखती ?

**राक्षसी**- मैं नींद से बेचैन कैसे देख सकती हूँ ?

**राक्षस**- क्या-क्या, नींद आ रही है।

**राक्षसी**- सच, सच कहती हूँ कि मुझे गाढ़ी नींद पछाड़ रही है।

(इस प्रकार ऊँघती हुई लेट गई)

**राक्षस**- अहो ! यह वनमानुषी तो बात करते-करते ही शिला पर सो गई है। निश्चित ही यह रात में घुमते घामते थक गई अतः अब इसको जगाना ठीक नहीं है। यदि कच्ची नींद में ही इसे जगा दिया तो यह मेरी पिटाई करेगी। (ऊपर की ओर देखकर) अरे कोलाहल करते हुये ये पक्षी इस पेड़ की चोटी पर क्यों चक्कर काट रहे हैं ? हो सकता है कि कोई बनविलाव बैठा हो, अथवा मुझको ही देखकर विदक (उड़) रहे हों। इसलिये पत्थरों को फेंककर इनको भगाता हूँ। अन्यथा इनके कलकल से जगकर मेरी चुड़ैल मुझे गालियाँ सुनायेगी।

**(इस प्रकार पत्थर फेंकता है)**

**वैश्याः**- (मण्डपादालोक्य) धिगस्मान् ! हतोऽस्माकं नायकः।

**नायकः**- सर्वथा मृत्युमुखे वर्तते। मम पार्श्वे प्रहारक्षममायुधमपि नास्ति। अनेन गजोपमेन बाहुयुद्धं कृत्वा वयं चत्वारोऽपि पारं न यास्यामः, तत्रापीयमभागा जागरिष्यति। तस्मादेकाकी एव मरिष्यामि। सर्वनाशादंशनाशो वरीयान् (इति भीत्वा पिण्डितो भवति)।

**राक्षसः**- (पुनरूद्वीक्ष्य) अहो ! प्रहृता अप्येते न विरमन्ति जाल्माः। तत्र गम्भीरं कारणं पश्यामि (उत्थाय वृक्षशिखरं विलोक्य) हं हो ! दृष्टः पत्रपुञ्जनिलीनो मानुषः। नासम्भवं भाषते चण्डोदरी (आघ्राय सकोपम्) अरे रे! वृक्षं कम्पयित्वाधुनैव त्वां फलमिव पातयामि।

(इति वृक्षं विधुनोति)

**नायकः**- अहं मायापतिर्धैर्यं न मुञ्चामि। हुम्!

(इति बाहुवक्षोभ्यां शाखां दृढ़माश्लिष्यति)

---

**वेश्यायें**- (लतामण्डप से देखकर) हम लोगों को धिक्कार है ! हमारे नायक अब मारे जायेंगे।

**नायक**- मैं सर्वथा मौत के मुँह में दबा हुआ हूँ। मेरे पास मारने योग्य कोई हथियार भी नहीं है। हाथी के समान बलवान् इस राक्षस से बाहुयुद्ध करके हम चारों भी पार नहीं पा सकेंगे, उस पर भी (कोलाहल सुनकर) यह अभागिन चुड़ैल उठ खड़ी होगी। इसलिये मुझे अकेले ही मरना चाहिये, क्योंकि सर्वनाश की अपेक्षा आंशिकनाश अच्छा रहता है।

(इस प्रकार डरके मारे सिकुड़ने लगता है)

**राक्षस**- (फिर ऊपर की ओर देखकर) अरे ये धूर्त पक्षी पत्थर मारने पर भी नहीं शांत हो रहे हैं, अतः इस विषय में कोई ठोस कारण लग रहा है।

(उठकर और पेड़ की चोटी को ध्यान से देखकर)

अहह! देख लिया, पत्तों के झुरमुट में छिपा हुआ यह आदमी पेड़ पर बैठा है। मेरी चुड़ैल कभी असम्भव (झूँठ) नहीं बोलती (सूँघकर क्रोधपूर्वक) अरे ! अरे ! पापी पेड़ हिलाकर तुझे अभी फल की भाँति गिराता हूँ।

(इस प्रकार एक हाथ से पेड़ हिलाता है)

**नायक**- मैं प्रसिद्ध धैर्यशाली मायापति हूँ, अतः अन्तिम श्वास तक धैर्य नहीं छोड़ूँगा (हुङ्कार करके बाहों और सीना से कसकर शाखाओं में चिपक जाता है)।

**राक्षसः**:- अहो जातिशत्रो ! एकबाहूद्धूनने न! पतसि चेत्द्वितीयमपि व्यापारयामि।

(इति नरकपालं प्रक्षिप्य बाहुभ्यां वृक्षं दृढं कम्पयति)

**नायकः**:- आः! आः ! रक्षत मां लतादेवताः !

(इत्युन्मूलितवृक्षेण सह राक्षस्युपरि पतति)

**राक्षसीः**:- हा चण्डोदर ! कुत्रासि हा !

(इति निष्पिष्टा म्रियते)

**वेश्याः**:- नावसरो हातव्यः (इति परामृशन्ति)।

**राक्षसः**:- त्वया मे प्रियापि व्यापादिता अतस्ते रक्तं पिवामि।

(इति शाखालम्बितं नायकं धृत्वा रक्तं पिपासति)

**चर्यः**:- (लतामण्डपात्सहसा निर्गत्य) वयं स्मः।

---

**राक्षस**- अरे स्वाभाविक वैरी! एक बाहु से पेड़ हिलाने पर तू नहीं गिरता है तो दूसरी बाहु भी भिड़ा रहा हूँ।

(मनुष्य की खोपड़ी फेंक कर दोनों बाहों से वृक्ष को जोर से हिलाता है)

**नायक**- हा ! हा ! लता देवियों (चरीजनों) मेरी रक्षा करो।

(उखड़े हुये वृक्ष के सहित राक्षसी के ऊपर गिरता है)

**राक्षसी**- हा चण्डोदर ! तू कहाँ है ?

(इस प्रकार वृक्ष से कुचल (दब) कर मर जाती है)

सारांश यह है कि शाखा से चिपके हुये नायक को गिराने हेतु राक्षस ने बलपूर्वक तना पकड़कर वृक्ष को हिलाया किन्तु धोखे से वृक्ष ही उखड़ पड़ा, मूल के पास सोती हुई राक्षसी तना से दबकर मर गई, उठी हुई वृक्षशाखा से चिपका हुआ नायक झूलने लगा।

**विमला**- अवसर पर चूकना नहीं चाहिये (परस्पर में मन्त्रणा करती हैं)

**राक्षस**- तेरे कारण मेरी राक्षसी मरी है, अतः अब तेरा लहू पीता हूँ।

(इस प्रकार शाखा पर झूलते हुये नायक को पकड़ (दबोच) कर खून पीना (मारना) चाहता है।

**चरियाँ**- (लतामण्डप से अचानक निकलकर) हम हैं। (इस प्रकार राक्षस की पीठ पर शिलाप्रहार करती हैं)।

(इति राक्षसपृष्ठे शिलाप्रहारं कुर्वन्ति)

राक्षसः- कोऽयं, कोऽयम् हा!

(इति शिरो घूर्णयन् रक्तं वमँश्च मृत्वा पतितः)

चर्यः- नायक ! नायक! उत्तिष्ठतु भवान् !

नायकः- (चरीजनानालिङ्गत्युत्थाय) रक्षितोऽहं भवतीभिः।

चर्यः- रक्षिता वयं भवांश्च दैवेन।

नायकः- अनुकूलं भाग्यं नः।

चर्यः- अन्यथा कथमस्माकं पुनर्मिलनम् ?

नायकः- जनशून्येयमरण्यानी, केन पथा गन्तव्यम्? कुत्र च वास्तव्यम्? पदे-पदे प्राणसङ्कटम्।

चपला- आर्य ! राजधानीं प्रति गन्तव्यम् आश्रमं वा निर्माय इहैव तापसजीवनं यापनीयम्।

विमला- धैर्यमवलम्ब्यतां सखि! विपदमतीत्य तदेव भविष्यति यदस्माकमभीष्टम्-

---

राक्षस- हा! कौन है? कौन है? (इस प्रकार सिर घुमाता और खून उगलता हुआ मरकर गिर गया)।

चरियाँ- नायक! नायक! आप उठिये।

नायक- (उठकर वेश्याओं का आलिङ्गन करता है) आप लोगों ने मुझे बचा लिया।

चरियाँ- भगवान् ने हमारी और आपकी रक्षा की।

नायक- हम लोगों का भाग्य अच्छा रहा।

चरियाँ- यदि भाग्य अच्छा न होता तो हम लोगों का मिलन कैसे होता?

नायक- यह मानवशून्य वनस्थली है, किस मार्ग से चलें? कहाँ निवास करें? पदे-पदे मृत्यु से जूझना पड़ता है।

चपला- आर्य ! राजधानी को लौट चलना चाहिये अथवा आश्रम बनाकर यहीं पर तपस्वी जीवन व्यतीत करना चाहिये।

विमला- सखि ! धैर्य धारण करना चाहिये। विपत्ति पार करने के बाद अब वही होगा, जो हम लोगों को अभीष्ट (वाञ्छनीय) है क्योंकि–

दिवसान्ते निशाऽऽयाति, निशान्ते दिवसो यथा।
सुखान्ते दुःखमायाति, दुःखान्ते तु सुखं तथा॥66॥

सरला- ममाप्येष विश्वासः।

नायकः- (नेत्रस्पन्दनमभिनीय) पश्यत, मदीयं दक्षिणमक्षि बारम्बारं स्पन्दते, तेनाभीष्टवेला सन्निधौ वर्तते।

चपला- अरे ! कुतोऽयं शब्दः ? (सर्वे कर्णं दत्त्वा शृण्वन्ति)।

सरला- भयास्पदमिदम्।

चपला- किमिदानीमनुष्ठेयम् ? (नेपथ्ये पुनरव्यक्तशब्दः)

नायकः- अस्ति कश्चिद् वन्यजन्तुः।

---

अन्वयः- यथा दिवसान्ते निशा आयाति, निशान्ते दिवसः (आयाति) तथैव सुखान्ते दुःखं, दुःखान्ते तु सुखं आयाति।

व्याख्या- यथा=येन प्रकारेण, दिवसान्ते=दिनावसाने, निशा=रात्रिः, भागुरिमतेन निश्पदेन टाप्प्रत्ययः। आयाति=आगच्छति, निशान्ते=निशावसाने, दिवसः=दिनम् आयाति। तथा= तेनैव, कष्टसमाप्तौ तु=अवश्यम्, सुखम्=आनन्दं, आयाति=मिलति। अत्र दृष्टान्तोऽलङ्कारः।

---

जिस प्रकार दिन के बीतने पर रात और रात बीतने पर दिन आता है। उसी प्रकार सुख बीतने पर दुःख और दुःख बीतने पर सुख आता है। अर्थात् अव विपत्तियों के दिन समाप्त हो चुके हैं और अब कार्य सिद्धि होने वाली है।

सरला- मेरा भी ऐसा ही विश्वास है।

नायक- (आँख फड़कने का अभिनय कर) देखो ! देखो मेरी दाहिनी आँख बार-बार फड़क रही है, ऐसा लगता है कि अब कार्यसिद्ध होने वाला है।

चपला- (सुनकर) अरे! यह शब्द कहाँ से हो रहा है?

(सब लोग कान लगाकर सुनते हैं)

सरला- भारी भय है।

चपला- अब क्या करना चाहिये। (नेपथ्य में बार-बार आहट होती है)

नायक- कोई जंगली जन्तु है।

सरला- नारे जन्तुः! मृत्युरेव।

चपला- उपायश्चिन्त्यतामात्मरक्षणाय।

नायकः- अस्त्युपायः स एव।

सरला- कश्च सः ?

नायक- यूयं लताभवनमाश्रयत, अहं वृक्षममुमधिवसामि (इति वृक्षं दर्शयति)

चर्य- आः! का गतिः ? त्वर्यताम्, त्वर्यतामार्य! (इति सर्वे तथानुतिष्ठन्ति)

सरला- उचितं लतागृहं, यत्र वयं पश्यामः नास्मान् कोऽपि।

नेपथ्ये- इतो वत्स, इतो वत्स!

विमला- मानववाणीयं श्रूयते।

चपला- मौनमास्व! (ततः प्रविशति सपुत्रो विभाण्डकः)।

विभाण्डकः- त्वर्यतां वत्स! त्वर्यताम्।

---

सरला- अरे! जन्तु नहीं यह साक्षात् मृत्यु ही होगी।

चपला- प्राणरक्षा का उपाय सोचना चाहिये।

नायक- फिर वही उपाय है।

सरला- कौन सा ?

नायक- आप लोग उसी लतागृह में घुस जावें और मैं इस (दूसरे) पेड़ पर चढ़कर बैठता हूँ (इस प्रकार पेड़ को दिखलाता है)।

चरियाँ- हा ! दूसरी गति ही क्या आर्य ! शीघ्रता कीजिये, शीघ्रता।

(इस प्रकार चरियाँ लतागृह में घुस जाती हैं और नायक पेड़ पर चढ़ जाता है)।

सरला- अच्छा यह लतागृह है जहाँ से हम बाहर देख सकते हैं बाहर का हमें नहीं देख सकता।

नेपथ्य में- इधर आओ वत्स ! इधर आओ।

विमला- यह तो मनुष्य की वाणी सुनाई देती है।

चपला- चुप रहो। (तत्पश्चात् पुत्र के सहित विभाण्डक का प्रवेश होता है)

विभा०- जल्दी चलो बेटा, जल्दी।

**शृङ्गी**- किमद्य त्वरा कारणम्?

**विभाण्डकः**- भयानकमरण्यम्।

**शृङ्गी**- तात! किमेते शकुन्ता भ्रामं-भ्रामं विरुवन्ति?

**विभाण्डकः**- वनविडाल्या शृगाल्या वा भवितव्यम्।

**शृङ्गी**- (पदान्तरे) पश्य तात! विपाटितोऽयं तरुः इदं प्रस्रुतं शोणितम्।

**विभाण्डकः**- पश्य वत्स ! एतौ मृतकौ लुठतः।

**शृङ्गी**- तात ! एतौ तावेव वनमानुषौ याभ्यां बहवः प्राणिनः शिलातले निपात्य भक्षिताः।

**विभाण्डकः**- सत्यं वक्षि! अतएव पाटलानि सन्ति शिलातलानि। अद्य, न जाने केन बलवता सत्वेन मारितौ?

**शृङ्गी**- मारयित्वा कथं न भक्षितौ?

**विभाण्डकः**- वत्स! अलं विचारेण त्वरितं गन्तव्यम्। कश्चिच्चण्डजन्तुरत्तुमागच्छेत्। तस्मान्ममाव्यवहितो भूत्वा चलतु।

---

**शृङ्गी**- आज जल्दी चलने का क्या कारण है?

**विभा०**- यह भयङ्कर जंगल है।

**शृङ्गी**- तात्! ये पक्षी चक्कर काट-काट कर कोलाहल क्यों कर रहे हैं?

**विभा०**- वनबिल्ली या लोमड़ी होगी।

**शृङ्गी**- (कुछ आगे बढ़कर) देखो पिताजी! उखाड़ा हुआ यह पेड़ और बहता हुआ यह रक्त है।

**विभा०**- वत्स ! देखो ये दो मुर्दा पड़े हैं।

**शृङ्गी**- पिताजी! ये वे ही दोनों वनमानुष और वनमानुषी हैं जिन्होंने अनेक प्राणियों को शिलाओं पर पटक-पटक कर खा डाला।

**विभा.**- तुम ठीक कहते हो, इसीलिये वे शिलायें लाल रहती हैं। आज न जाने किस बलवान जन्तु ने इन्हें मार डाला है।

**शृङ्गी**- ज़न्तु ने इन्हें मार कर खाया क्यों नहीं?

**विभा.**- वत्स! इस विषय में सोचविचार (छानबीन) करने का अवसर नहीं है, यहाँ से शीघ्र हट चलना चाहिये हो सकता है कि इन्हें खाने के लिये कोई प्रचण्ड जानवर (व्याघ्रादि) आ जाये। अतएव तुम मुझ से सटकर चलो।

**शृङ्गी-** वाढ़म्! शीघ्रं स्नात्वा निवर्त्स्यावः। उपरागानन्तरं नदीस्नानं पुण्यकरम्।

(इत्युभौ निष्क्रान्तौ)

**नायकः-** (वृक्षशिखरादवतीर्य लतोदरे प्रविश्य) अज्जुकाः सिद्धं नः समीहितम्।

**चर्यः-** (नायकमालिङ्ग्य) फलन्ति रोमपादस्य मनोरथाः।

**चपला-** योऽग्रेसरो जटावल्कलधारी रोमाच्छन्नःसः विभाण्डकः।

**विमला-** तत्पृष्ठानुसारी कौपीनकमण्डलुधारी तत्पुत्रः शृङ्गी।

**चपला-** अहो ! विधातः! यथा वनमानुषास्तथा तापसाः।

**सरला-** आवुत्त ! विलक्षणोऽयं ब्रह्मचारी यस्य ललाटे शृङ्गं विराजते।

**नायकः-** यात्रारम्भे विप्रबोधितं शृङ्गरहस्यं विस्मृतं किम् ?

**चर्यः-** स्मृतिपथात् तद्गलितं तदुद्बोधयतु भवान् !

---

**शृङ्गी-** हाँ ठीक है, ग्रहण के अन्त में नदी का स्नान पवित्र माना गया है अतः स्नान करके तुरन्त लौट आयेंगे। (ये दोनों प्रातः कालीन स्नान करने हेतु कौशिकी को जा रहे हैं, अतः पूर्णमासी की रात में चन्द्रग्रहण लगा होगा)।

(इस प्रकार दोनों निकल गये)

**नायक-** (पेड़ से उतरकर और लतागृह में घुसकर) चरियों (गणिकाओं) हम लोगों की इच्छा पूरी हो रही है।

**चरियाँ-** (नायक से लिपट कर) महाराज रोमपाद के मनोरथ सफल हो रहे हैं।

**चपला-** जो आगे-आगे चल रहे थे, तथा जटावल्कल धारण किये हुये थे और जिनके शरीर पर बाल ही बाल थे वे विभाण्डक बाबा थे।

**विमला-** उनके पीछे चलने वाले लँगोटी कसे हुये तथा कमण्डल लिये हुये उनके बेटे शृङ्गी थे।

**चपला-** अये भगवान् ! जैसे वनमानुष वेढङ्गे होते हैं वैसे ही बाबा लोग भी।

**सरला-** ये विलक्षण ब्रह्मचारी जी थे, जिनके मत्थे पर सींग खड़ा था।

**नायक-** राजधानी से चलते समय ब्राह्मणों ने जो सींग का रहस्य हम लोगों को बताया था, क्या उसको तुमने भुला दिया ?

**चरियाँ-** ब्राह्मणों की बात ध्यान से उतर गई, अतः आप बताने की कृपा करें।

**नायकः**- श्रूयताम् ! कदाचित्कौशिवचा महाह्रदे कठोरतपसि लीनो विभाण्डकः उर्वशीं ददर्श तद्यौवनं वीक्ष्यास्यरेतो जले चस्कन्द, तच्चाकस्मादागतया हरिण्या पीतम् तद्गर्भादस्य जन्म, शृङ्गचिन्हं च जननी जातिख्यापकम्।

**विमला**- यथार्थनामायं शृङ्गी।

**चपला**- अये! वृद्धत्वे तरूण्यामनुरागः ?

**नायकः**- किमत्राश्चर्यम् स्वाभाविकमेतत्-

**वनेषु सिंहाः कमलेषु भृङ्गा, सभासु धीराश्च रणेषु वीराः।**
**जलेषु मीनास्तरुणीषु वृद्धाः, स्वयं प्रकुर्वन्ति मुदारिरंसाम्॥67॥**

---

**अन्वयः**- वनेषु सिंहाः, कमलेषु भृङ्गाः, सभासु धीराः, रणेषु वीराः, जलेषु मीनाः, तरुणीषु वृद्धाः च मुदा स्वयं रिरंसां प्रकुर्वन्ति।

**व्याख्या**- वनेषु=काननेषु, अटव्यरण्यं-विपिनं-गहनं-काननं-वनमित्यमरः। सिंहाः सिंहो-मृगेन्द्रः-पञ्चास्यो-हर्यक्षः-केशरी-हरिरित्यमरः। कमलेषु=नीरजेषु, भृङ्गाः=रोलम्बाः, सभासु=गोष्ठीसु, धीराः=विद्वांसः, रणेषु=सङ्ग्रामेषु, वीराः=शूराः, जलेषु=नीरेषु, मीनाः=मत्स्याः मीनपदस्योपलक्षणत्वात् सर्वे जलचराः। तरुणीषु=युवतिषु, वृद्धाः=जरठाः च=समुच्चये, मुदा=हर्षेण, स्वयम्=अप्रेरणया, रिरंसाम्=रन्तुमिच्छाम्, रम्धातोः सन्नन्तरूपम् विजिहीर्षामित्यर्थः, प्रकुर्वन्ति। दीपकालङ्कारः।

---

**नायक**- सुनो, किसी समय विभाण्डक ऋषि कौशिकी नदी के जलाशय (नदी से बनी झील के कुण्ड) में घुसकर (आकण्ठ जलमग्न होकर) तपस्या कर रहे थे। उनकी कठोर तपस्या को जानकर इन्द्र भय से काँप उठे। ऋषि को डिगाने हेतु इन्द्र ने उर्वशी अप्सरा को भेजा। अप्सरा के उन्मादक रूप को देखकर ऋषि अपने को सम्हाल न सके, फलतः उनका ब्रह्मतेज पानी में ही विगलित हो गया, उसी समय दैवयोग से एक प्यासी हरिणी वहाँ आई और उसने बहते हुये उस तेजोमिश्रित पानी को पी लिया, जिससे वह गर्भवती हुई। कालान्तर में इससे एक पुत्र पैदा हुआ, इस पुत्र के सिर पर मातृजाति सूचक एक सींग था। यह हरिणी एक देव कन्या थी, उसने सारा रहस्य विभाण्डक को बताकर वह पुत्र ऋषि की गोद में रख दिया और स्वयं देव लोक चली गई। इसका विशेष उपाख्यान नान्दीपाठ की व्याख्या में दर्शाया गया है।

**विमला**- यह शृङ्गी नाम तो अर्थानुसारी ही नाम है।

**चपला**- अहो ! वृद्धावस्था में भी तरूणी में आसक्ति!

**नायक**- इसमें आश्चर्य की क्या बात है, यह तो स्वत सिद्ध है कि-

वनों में सिंहों की, कमलों में भौरों की, सभाओं में विद्वानों की, और युद्धों में योद्धाओं की, तथा जल में जलचरों की एवम् तरुणियों (तरुणरमणियों) में बूढ़े तपस्वियों की भी सहर्ष रिरंसा (रमण करने की इच्छा) स्वयम् होती है।

**चपला-** सर्वथा सत्यम्।

**विमला-** धन्या नारी, यस्यै तपस्व्यपि लालायते।

**नायकः-** धिक् ! नारीम्, या तपस्विनामपि पातयति।

(नेपथ्ये इतो वत्स इतः)

**सरला-** (श्रुत्वा) मौनमास्यताम्। स्नात्वा प्रत्यागच्छति स जटिलः।

**नायकः-** यदिमौ स्वाश्रमं प्रतियास्यतः तदा वयमपि सान्तरं पृष्ठचारिणो भविष्यामः।

**सरला-** आश्रमज्ञानं दूरतो भविष्यति।

**चपला-** अदोऽपि वेदितव्यम् यदयं जटाधारी कदा-कदा पुत्रं मुञ्चति।

---

**चपला-** यह बात सर्वथा सत्य है।

**विमला-** नारी धन्य है जिसके लिये तपस्वी लोग भी लालायित (इच्छुक) रहते हैं।

**नायक-** नारी को धिक्कार है, जो बड़े-बड़े तपस्वियों को भी भ्रष्ट कर देती है।

(नेपथ्ये में इधर से आओ वत्स इधर से)

**सरला-** (सुनकर) मौन बैठिये! ऐसा लगता है कि स्नान करके वह जटाधारी वापस आ रहा है।

**नायक-** जब यह दोनों अपने आश्रम को जायेंगे तब हम लोग भी कुछ अन्तर से पीछे-पीछे लग जायेंगे।

**सरला-** आश्रम का परिचय दूर से हो ही जायेगा।

**चपला-** यह भी जान लेना चाहिये कि यह बाबा अपने बेटा को अकेला छोड़कर कब-कब कहाँ-कहाँ जाता है।

**विमला-** अत्यागे तु कठिनं कार्यम्।

**नायकः-** साध्वेतत् किन्तु कार्यकाले सर्वं सङ्केतेन ज्ञातव्यम्।

**चपला-** (ध्वनिं श्रुत्वा) मौनम् मौनम्।

(ततः प्रविशति सपुत्रो विभाण्डकः)

**विभाण्डकः-** वत्स ! सविघ्नेयं भूमिः तच्छीघ्रमुपसर्पणीयम्, शून्याः खलु दिशः (इति पर्यटतः)।

**नायकः-**(सङ्केत्य) सङ्गच्छध्वम्। स्रुताम्बरवारिबिन्दूननुसरत। (इति सर्वेऽनुसरन्ति)।

**चपला-** निविडोऽत्र वनान्धकारः, विषमा चेयमुपत्यका, श्वासः समेधते, क्लेदः क्लेदयति, जङ्घा विष्टम्भन्ते, गात्राणि च शिथिलायन्ते, तत्कथं गन्तव्यम्?

**सरला-** श्रमश्वासवशात् वागपि न प्रसरति।

---

**विमला-** यदि यह अकेला नहीं छोड़ता है तब तो काम बनना बहुत ही कठिन है।

**नायक-** यह सब बात ठीक है, किन्तु समयानुसार पारस्परिक सङ्केत से ही सब कुछ समझ लेना चाहिये।

**चपला-** (आहट सुनकर) चुप रहो, चुप रहो।

(तत्पश्चात् शृङ्गी के साथ विभाण्डक का प्रवेश होता है)

**विभाण्डक-** वत्स! यह भूमि विघ्नपूर्ण (बहुत भयङ्कर) है, अतः शीघ्र चलना चाहिये, दिशायें शून्य हैं, अर्थात् कोई भय की बात नहीं है। (इस प्रकार मञ्च पर चलने का अभिनय करते हैं)।

**नायक-** (संकेत करके) साथ-साथ (पीछे-पीछे) लग जाओ। इनके वल्कल से टपकती हुई बूदों को देख-देख कर अनुसरण करो। (इस प्रकार सब अनुकरण करते हैं)।

**चपला-** यहाँ पर तो घने जंगल का बहुत अंधेरा है, और ऊँची नीची चोटी है श्वास फूल रही है, पसीना से सराबोर हूँ तथा जङ्घायें जकड़ गईं एवं हाथ पैर थककर ज़र्जर हो गये हैं। अब कैसे चला जाये?

**सरला-** थकान और श्वास फूलने से मुँह द्वारा बात भी नहीं निकलती।

**नायकः**- अरे ! करचरणैश्चतुष्पादैर्मर्कटवच्चलत।

**सर्वाः**- शोभनोऽयं गिरिलङ्घनोपायः। (इति तथा चरन्ति)।

**नायकः**- मौनं स्थीयताम्, आगतोऽयमाश्रमः, विशालश्चायं वटवृक्षः, दूरारोहिणी तपस्थली, जनप्रवेशोऽत्र दुलर्भः, अतः परं गन्तुं नोचितम्। दूरत एव क्रियाकलापं वेदिष्यामः, विप्रोक्तं पालयिष्यामः।

**विमला**- सघनोऽयं वटः, तत्समीपे लताप्रतानमण्डपे आत्मानमाच्छाद्य रहस्यं ज्ञातव्यम्।

**नायकः**- विमलं वदति विमला। (इति सर्वे लतामण्डपे प्रच्छन्नास्तिष्ठन्ति)

**विभाण्डकः**- वत्स! मादकोऽयं सुरभिर्वाति सम्प्रति।

**शृङ्गी**- कानने कश्चित्तरुः प्रफुल्लो भवति, अथवा गन्धतरुः गजेन उन्मूलितो भवेत्।

**विभाण्डकः**- सम्भाव्यते। (इतीतस्ततो जिघ्रति)।

---

**नायक**- अरे ! पृथ्वी पर झुककर पैरों की भाँति हाथों से भी बन्दर की तरह चलो।

**सभी**- पर्वत पर चढ़ने का यह सरल उपाय है। (इस प्रकार सब बन्दर की भाँति चलते हैं)।

**नायक**- चुप रहो। इनका आश्रम अब आ गया है। देखो यह बड़ा भारी बरगद का वृक्ष है, बहुत दूर तक ऊँची चढ़ाई वाली यह तपोभूमि है। यहाँ पर मानव का प्रवेश कठिन है। इससे आगे बढ़ना ठीक नहीं है। हम लोग दूर से ही इनकी गतिविधियाँ समझेंगे। विप्रों द्वारा बताई गई बातों का पालन करेंगे।

**विमला**- यह बहुत घना वटवृक्ष है, इसके समीप (सटा हुआ) इस सघन लतागृह में छिपकर इनके रहस्य को भली भाँति हम लोग देख सकेंगे।

**नायक**- यह विमला सर्वथा विमल वात् (उचित बात) कहती है। (इस प्रकार सब लोग लतामण्डप में छिपकर बैठते हैं)।

**विभा.**- वत्स ! इस समय कहीं से बड़ी उन्मादक सुगन्धि आ रही है।

**शृङ्गी**- वन में कोई विशेष पेड़ फूला होगा अथवा किसी हाथी ने सुगन्धित पेड़ तोड़ फोड़ दिया होगा।

**विभा.**- हाँ ऐसा हो सकता है। (इस प्रकार इधर-उधर सूँघता है)

शृङ्गी- न प्रागीदृशो गन्ध आघ्रातः, तदत्र कारणं न पश्यामि। (इति वल्कलानि प्रसारयति)।

विभाण्डकः- अहह! यावदहमन्यद् ध्यायामि तावदनेन मृगपोतेन जलं दूषितम्। तदहं पुनर्नदीतो जलमानयामि त्वं चासनादिकं सज्जीकुरु। (इति कमण्डलुमादाय निर्गतः)।

नायकः- अयमेवोपयुक्तोऽवसरोऽस्मै मिलितुम्।

विमला- न कालो हातव्यः।

नायकः- भवतीभिः प्राप्तकालमाचरणीयम्। (इति साधुवेषं धृत्वाऽऽश्रमं प्रविष्टः)।

शृङ्गी- (विलोक्योत्थाय च) नमो ब्रह्मणे (इति प्रणमति)।

नायकः- वर्धतां ब्रह्मवर्चसम्।

शृङ्गी- आस्यतां भगवन् ! जलं फलं च गृह्यताम्।

---

शृङ्गी- इससे पूर्व ऐसी सुगन्धि मैंने कभी नहीं सूँघी थी, अतः मैं इसका कारण नहीं समझ पा रहा हूँ। (इस प्रकार सुखाने हेतु बल्कल फैलाता है)।

विभा.- अहो ! जब तक मैं दूसरे ध्यान में लगा रहा, तब तक इस हरिण के बच्चे ने पानी दूषित कर दिया, अतः मैं नदी जाकर शुद्ध जल लाता हूँ। वत्स! तब तक तुम नित्यकर्म हेतु आसन आदि की व्यवस्था करना, (इस प्रकार कमण्डल लेकर निकल गये)।

नायक- शृङ्गी से मिलने का यही उपयुक्त अवसर है।

विमला- समय पर चूकना नहीं चाहिये।

नायक- आप लोग समयानुसारेण कार्य करना। (इस प्रकार महात्मा का वेष वनाकर आश्रम में प्रवेश करता है)

शृङ्गी - (देखकर और उठकर) भगवन्! आपको प्रणाम है।

नायक- बच्चा! आपका ब्रह्मतेज बढ़ता रहे।

शृङ्गी- भगवन् विराजिये, जल और फल ग्रहण कीजिये।

नायक- ब्रह्मचारी जी ! तुम्हारे पिताजी के दर्शन करने हेतु आया हूँ वे कहाँ हैं ?

शृङ्गी- भगवन् ! अभी-अभी जल लेने के लिये कौशिकी नदी को गये हैं, आप थोड़ी देर तक उनकी प्रतीक्षा करें।

नायकः- ब्रह्मचारिन् ! तव तातस्य दर्शनार्थमहमागतः तत्कुत्र स महाभागः ?

शृङ्गी- इदानीमेव जलमाहर्त्तुं कौशिकी प्रस्थितो मे तातः, तस्मात् क्षणं प्रतीक्ष्यताम्।

नायकः- (इतस्ततः पश्यन्) नाधुनावसरः कालक्षेपाय, तस्माच्छ्व एव द्रष्टास्मि।

शृङ्गी- अशक्यश्श्वो द्रष्टुम्।

नायकः- कस्मात् ?

शृङ्गी- कुशानादातुं स दूरं यास्यति।

नायकः- कदागमिष्यति ?

शृङ्गी- सायं यावत्।

नायकः- त्वमपि यास्यसि ?

शृङ्गी- नहि ब्रह्मन्! नहि।

नायकः- त्वमत्र किं करिष्यसि ?

शृङ्गी- आश्रमसेवार्थमिहैव तिष्ठामि।.

नायकः- स्यादेतत्। (नेपथ्ये काकध्वनिः)।

---

नायक- (इधर-उधर देखता हुआ) अभी देर तक रुकने का समय नहीं है, इसलिये अब कल ही दर्शन करूँगा।

शृङ्गी- कल दर्शन होना असम्भव है।

नायक- क्यों ?

शृङ्गी- कुश लेने के लिये वे कल दूर चले जायेंगे।

नायक- फिर कब लौटेंगे ?

शृङ्गी- सायंकाल तक लौट आयेंगे।

नायक- क्या तुम भी जाओगे ?

शृङ्गी- नहीं-नहीं भगवन् !

नायक- तुम यहाँ क्या करोगे ?

शृङ्गी- आश्रम सेवा के लिये मैं यहीं रहूँगा।

नायक- ठीक है। (नेपथ्य में कौवा बोलता है)।

**नायकः**- (श्रुत्वा) ब्रह्मचारिन्! अन्येद्युर्मिलिष्यामि, आवश्यककार्याय व्रजामि (इत्युत्तिष्ठति)।

**शृङ्गी**- नमो ब्रह्मणे!

**नायकः**- वर्धतां ब्रह्मवर्चसम् (इति निष्क्रान्तः)।

**शृङ्गी**- तमेव ध्यायन् व्यावृतः?

**विभाण्डकः**- (प्रविश्य) पुत्रक! कृता नैव नियमव्यवस्था?

**शृङ्गी**- तात! त्वयि निर्गते कश्चित्तापसः समुपस्थितः?

**विभाण्डकः**- केन प्रयोजनेन?

**शृङ्गी**- शीघ्रतावशात्तेन परिचयो न दत्तः केवलं भवतो दर्शनं तत्प्रयोजनम्, आवश्यककार्यं विज्ञाप्य त्वरितं निर्गतः।

**विभाण्डकः**- किं पुनस्तेनोक्तम्?

**शृङ्गी**- अन्येद्युर्द्रक्ष्यामीति।

**विभाण्डकः**- तदातिथ्यं न कृतम्?

---

**नायक**- (काक शब्द सुनकर) ब्रह्मचारी जी! अन्य किसी दिन दर्शन करूँगा, इस समय किसी आवश्यक कार्य हेतु जा रहा हूँ। (इस प्रकार उठ खड़ा होता है)

**शृङ्गी**- भगवन्! आपको प्रणाम है।

**नायक**- वत्स ब्रह्मचर्य बढ़ता रहे। (इस प्रकार निकल गया)।

**विभा.**- (प्रवेश कर) तुमने कुछ नियम पूजन की व्यवस्था नहीं की।

**शृङ्गी**- तात आपके जाने पर कोई महात्मा आया था।

**विभा.**- किस प्रयोजन से आया था।

**शृङ्गी**- शीघ्रता के कारण उन्होंने अपना परिचय नहीं दिया केवल आपका दर्शन करना ही उनका प्रयोजन था। आवश्यक कार्य बतलाते हुये वे तुरन्त ही चले गये।

**विभा.**- फिर और क्या कहा?

**शृङ्गी**- यह कहा कि और किसी दिन दर्शन करूँगा।

**विभा.**- क्या उनका सत्कार किया?

**शृङ्गी-** कृतं तात ! अतएव नियमादि व्यवस्था विलम्बिता।

**विभाण्डकः-** उचितैवातिथिपर्युपासनम्। स्यादेतत्। नित्यकृत्यं सम्पाद्यताम्।

**शृङ्गी-** वाढम् तात ! (इति व्यापृतौ)

**नायकः-** (लतागृहे प्रविश्य) अये ! अज्जुकाः! एकाक्यपि तिष्ठति शृङ्गी।

**चपला-** सुसाध्यं कार्यम्।

**सरला-** कस्मिन् समये स प्रतारणीयः ?

**नायकः-** श्व एव, यतोहि महामुनिः कुशानादातुं दूरं यास्यति, तदोच्चाटनीयः।

**विमला-** एवमस्तु, पल्लविताशा लता।

**चपला-** अत्रैव लतागृहे स्थिता वयं रात्रिन्दिवं तथा प्रयत्नान् करिष्यामः यथाऽऽश्वेवाङ्गराज्यप्रेमपात्रतामधिगच्छेम।

**नायकः-** शोभनोऽयं मण्डपः यत्रस्था वयं पश्यामः, नास्मान् कोऽपि।

---

**शृङ्गी-** पिताजी ! मैंने सत्कार किया, इसीलिये आसन आदि की व्यवस्था में देर हो गई।

**विभा.-** अतिथि की सेवा करना उचित ही है। ठीक है, अब अपना नित्यकर्म पूरा करें।

**शृङ्गी-** हाँ पिताजी ! (इस प्रकार स्वकार्य में लग गये)।

**नायक-** (लतामण्डप में घुसकर) अये चरियों! वह ब्रह्मचारी अकेला ही रहता है।

**चपला-** तब तो काम बनाना सरल है।

**सरला-** तब किस समय ब्रह्मचारी को भटकाया (विचलित किया) जाये।

**नायक-** कल ही ठगा जाये, क्योंकि महामुनि (विभाण्डक) जी कल प्रातः कुश लेने हेतु दूर जायेंगे, तभी शृङ्गी का उच्चाटन किया जाये।

**विमला-** ऐसा होना चाहिये, अब आशालता पल्लवित (हरी भरी) हो रही है।

**चपला-** इसी लतामण्डप में रहकर हम लोग वैसे-वैसे प्रयत्न करेंगे कि जिससे (हम लोग) शीघ्र ही राजा रोमपाद के प्रेमपात्र बन जायें।

**नायक-** यह अच्छा मण्डप मिला जिसमें बैठे हुये हम बाहर देख सकते हैं, किन्तु बाहर का हमें कोई नहीं देख सकता।

सरला- पश्य, पश्य! सपुत्रः समाधिं बध्नाति (इति सर्वे पश्यन्ति)।

चपला- यथा स्वयं वनमानुषस्तथैव स्वपुत्रमपि विधास्यति।

विमला- आवुत्त ! राक्षसाक्रान्तत्वात् भवानतीव परिश्रान्तः अतः विश्राम्यतु, वयं क्रियाकलापं पश्यामः।

नायकः- सरलापि निद्राति, अत आवां विश्रमावः (इति निर्गतौ)

चपला- पश्य ! इदानीं प्राणायामं साधयित्वा नासाग्रे दृष्टिं बध्नाति।

विमला- इदानीं स इन्द्रियाणि विजेतुं पुत्राय ब्रह्मचर्यनियमाञ्छास्ति।

चपला- सखि! कीदृशोऽयं कुलवृद्धिमनुपदिश्य कुलाङ्गारतामुपदिशति।

विमला- ब्रह्मज्ञानिनामलौकिकी गतिर्भवति, सुखं दुःखं, दुःखं च सुखं कलयन्ति ते।

चपला- संसारव्यापारमसारं मन्यमानास्तापसा मौलिकतत्त्वं विचिन्वन्ति

---

सरला-देखो-देखो पुत्र के साथ समाधि बाँध रहा है। (सब देखते हैं)।

चपला- यह बाबा जैसा स्वयं बेढङ्ग (वनमानव) है, वैसा ही लड़के को भी बना डालेगा।

विमला- बाबूजी! राक्षस से सताये जाने के कारण आप बहुत थके हुये हैं, अतः आप विश्राम करें, हम लोग इन दोनों का क्रियाकलाप देखते हैं।

नायक- यह सरला भी ऊँघ रही है, अतः हम दोनों विश्रामार्थ जाते हैं (दोनों निकल गये)।

चपला- देखो ! प्राणायाम करके नाक के अग्रभाग पर दृष्टि बाँध रहा है।

विमला- इस समय इन्द्रियों को जीतने हेतु ब्रह्मचर्य साधने का (पुत्र को) आदेश दे रहा है।

चपला- सखि! यह कैसा पिता है जो कुलवृद्धि (वंश बढ़ाने) का उपदेश न देकर कुलाङ्गारता (वंशसमाप्ति) का उपदेश दे रहा है।

विमला- ब्रह्मज्ञानियों की सब बातें उलट होती हैं, सुख को दुःख और दुःख को सुख मानते हैं।

चपला- सांसारिक क्रियाकलाप को मिथ्या मानते हुये ये तपस्वी लोग वास्तविक तत्त्व की खोज करते हैं। इसीलिये इनकी तपस्या में विघ्न डालने वाले

तत्तपोविघातकस्य न कथमपि मङ्गलम्, अतो विभाण्डकाऽभावेऽप्यात्मरक्षणं प्रमुखीकृत्य कार्यं साधयामः। अयं शृङ्गी तारूण्यं चुम्बति, अतोऽस्मिन् विक्षेपाधानं नात्यन्तं कठिनम्। अस्मिन् वयसि भावाः क्षणे-क्षणे परिवर्तन्ते। पुनरपि तपस्तेजसां वयो न कारणम्।

**विमला-** सत्यमेतत्, किन्तु ब्रह्मनिष्ठा आवेशेन तपोधनं न क्षिण्वन्ति।

**चपला-** पश्य सखि! हस्तावुत्थाप्य भास्करायार्घ्यं दत्तः।

**विमला-** एवमेवेदृशा समयं यापयन्ति-

**येषां गृहं न वनिता न रिपुर्न मित्रम्,**
**बन्धुर्न कापि धन-धान्य-हिरण्यचिन्ता।**
**संसार-दुःख-गिरिभार-विवर्जितास्ते,**
**नित्यं तपन्ति फलनीरसमीरभक्षाः॥ 68॥**

---

**अन्वयः-** येषां गृहं न, वनिता न, रिपुः न, मित्रं बन्धुः (च) न, कापि धनधान्यहिरण्यचिन्ता न, संसारदुःखगिरिभारविवर्जिताः ते फलनीरसमीरभक्षाः (सन्तः) नित्यं तपन्ति।

**व्याख्या-** येषाम्=जनानाम्, गृहम्=भवनम्, न=नैव विद्यते, वनिता=भार्या नास्ति, रिपुः=अरिः, न मित्रम्=बन्धुः=सखा कुटुम्बो न भवति, तथा कापि=काचिद्, धनधान्यहिरण्यचिन्ता= धनम्=रूप्यकादिकम् च, धान्यम्=यवादिकं च, हिरण्यम्=सुवर्णादिकं

---

का कुशल नहीं, अर्थात् इनको लक्ष्य से डिगाना मौत से जूझना है। विभाण्डक के अभाव में भी आत्मरक्षा का प्रमुख ध्यान रखकर ही अग्रिम कार्यवाही करनी चाहिये। ये शृङ्गी युवावस्था पर चढ़ रहे हैं, इनको लक्ष्य से डिगाना कोई असाध्य कार्य नहीं है। इस युवावस्था में चित्तवृत्तियाँ क्षण-क्षण में बदलती रहती हैं, अर्थात् हमारे ललित कलित उपचारों के जाल में बिना फँसे बच नहीं सकते। फिर भी तेजस्वियों की अवस्था किसी विषय में कारण नहीं बनती यह हमें भस्म भी कर सकते हैं।

**विमला-** यह सही है किन्तु ब्रह्मज्ञानी क्रोध करके अपने अर्जित सुकृत को नष्ट नहीं करते।

**चपला-** देखो सखि ! वे दोनों हाथों को उठाकर सूर्य को अर्घ्य दे रहे हैं।

**विमला-** इस प्रकार के लोग यों ही समय बिताते रहते हैं- जिनका कहीं कोई गृह नहीं है तथा जिनके स्त्री, शत्रु, मित्र एवं बन्धु नहीं है तथा जिनको धनधान्य

**चपला**- सखि! सायङ्काले पुनरिमौ नदीं यास्यतः।

**विमला**- न यास्यतः, यात एव।

**विभाण्डकः**-वत्स! सायन्तनकृत्यं निर्वोढुं कौशिकी गन्तव्या तस्मादाहर पटपात्रम्।

**शृंगी**-वाढं तात! (इति पटपात्रं दण्डं चादाय निष्क्रान्तौ)

**विमला**-सखि! अस्मिञ्छून्याश्रमे विप्रदत्तं भस्म प्रसारणीयम् तच्च कार्यं नायकाधीनं वर्तते, स च विश्राम्यति, किमधुना कर्तव्यम्?

(ततः प्रविशति सरलया सह नायकः)

**विमला**-सम्प्रत्येव नदीं गतौ तौ, अतोऽवसरोऽयं भस्मप्रसारणाय।

**नायकः**-साधूक्तम् त्वया। (इति पोटलिकातो भस्मनिष्कास्य सर्वैः सहाश्रमं प्रविशति)

---

च, तेषां चिन्ता=अपेक्षेति द्वन्द्वगर्भकस्तत्पुरुषः। न वर्तते संसार-दुःख-गिरिभार विवर्जिताः=गिरेर्भारः=शैलधूः संसार दुःखमेव=जगच्छोक एव गिरिभारः मयूरव्यं-सकादयश्चेति तत्पुरुषः। रूपकालङ्कारः, तस्मात् विवर्जिताः=रहिताः, जगद्वेदनाद्विरहिता रहिता इत्यर्थः। ते=वीतरागाः जनाः, नीरसमीरभक्षाः=फलजलवाताहाराः सन्तः, नित्यम्=सदा, तपन्ति=तपस्यां कुर्वन्ति, बसन्ततिलकावृत्तम्।

---

सोने चाँदी की भी कोई चिन्ता (परवाह) नहीं है एवम् जो संसार को दुःख का पर्वत समझकर उसे त्यागे हुये हैं, ऐसे वीतरागपुरुष (फक्कड़ लोग) ही वन में जाकर फल, जल या हवा का सेवन करते हुये सदा तपस्या करते हैं।

**विभा.**- वत्स! सांयकालीन सन्ध्यावन्दन हेतु अब कौशिकी नदी को चलना चाहिये, इसलिये वल्कल और कमण्डल ले लो।

**शृङ्गी**- अच्छा पिताजी ! (इस प्रकार वस्त्र, कमण्डल और लगुड लेकर निकल जाते हैं)।

**विमला**- सखि ! अब इस शून्य आश्रम में विप्रों (तान्त्रिकों) द्वारा दी गई अभिमन्त्रित भस्म छिड़कनी (विखेरनी) चाहिए किन्तु यह कार्य नायक के आधीन है, अब क्या किया जाये। (तत्पश्चात् सरला के साथ नायक प्रवेश करता है)

**विमला**- इस समय वे दोनों नदी को गये हैं, भस्म फैलाने का यही सबसे अच्छा अवसर है।

**नायक**- विमले ! तुमने ठीक कहा है। (इस प्रकार पोटली से भस्म निकालकर सबके साथ आश्रम में प्रवेश करता है)।

**नायकः**- (इतस्ततो वीक्ष्य) नास्ति कश्चित् (इति मन्त्रं पठन् सर्वत्र विकिरति)।

ॐ मृत्युञ्जयरागाय नमः, श्मशानवासाय नमः, ब्रह्मपुत्रविभूषणाय नमः, यज्ञरूपाय नमः, रामरञ्जनाय नमः।

ॐ दिशं मोहय, विदिशं मोहय, तपोवनं मोहय, ऋषिपुत्रं मोहय, ब्रह्मचर्ययोगचर्य-दिग्देशबन्धं भ्रंशय भ्रंशय।

**विमला**- अस्माभिः सर्व एवाश्रमो विलोकितः परित एव प्रवेशयोग्योऽयम्। आश्रमे लघुनिर्झरस्तथापि नदीं स्नाति।

**चपला**- सखि ! नदीस्नानफलमन्यत्।

**सरला**- (जलमाचम्य) महत् स्वादिष्टं जलम्।

**चपला**- आश्रमं वीक्ष्य मयि वैराग्यमुदेति।

**विमला**- सखि! स्थिरा भव, परप्रतारणाय वयमागताः न स्वप्रतरणाय।

**नायकः**-कुञ्जपुञ्जावृतोऽप्याश्रमोऽयं सरलो गमनागमनीयः ? तपस्यासम्भारातिरिक्तं न किमपि। पुनरपि साम्रेडमालोडनीयः। (इति सर्वे भ्रामं- भ्राममालोडयन्ति)।

---

**नायक**- (इधर-उधर देखकर) कोई नहीं है। (इस प्रकार मन्त्र पढ़ता हुआ फूँक-फूँक कर सर्वत्र भस्म छिड़कता है)।

भूतनाथ शङ्करजी के अङ्गराग भस्म को नमस्कार है, श्मशान में रहने वाली तथा ब्रह्मपुत्र नारदजी जिसको रमाते हैं, और जो साक्षात् यज्ञस्वरूप है एवं जो परशुराम को बहुत प्रिय है, उस भस्म को मैं नमस्कार करता हूँ।

हे भस्म! तुम दिशाओं को मोहित करो, विदिशाओं और तपोवन तथा ऋषिपुत्र को भी मोहित कर दो, ब्रह्मचर्य योगतन्त्र और दिग् देशादि के बन्धनों (कीलनों) को नष्ट भ्रष्ट कर (तोड़) दो।

**विमला**- हम लोगों ने सारा आश्रम घूमघाम कर देख लिया है, इसमें चारों ओर से आ जा सकते हैं, आश्रम में झरना होने पर भी स्नानार्थ नदी को जाता है।

**चपला**- सखि! नदी स्नान करने का कुछ और ही (उत्तम) फल होता है।

**सरला**- (झरना का जल पीकर) बहुत स्वादिष्ट जल है।

**चपला**- सखि ! अडिग रहो। हम लोग दूसरे को ठगने आये हैं न कि स्वयं को ठगाने के लिये।

**नायक**- लतासमूह से घिरा होने पर भी यह आश्रम आने जाने के लिये सरल (खुला हुआ) है। इसमें तपस्या सामग्री को छोड़कर और कुछ नहीं है, फिर भी इसमें

**चपला-** उत्तुङ्गश्रृङ्गस्थोऽयमाश्रमः तस्माद्दूरमपि द्रष्टुं शक्यते।

**नायकः-** दृष्टोऽयं परिसरः, कदाचिदागच्छेत् अतो निगर्म्यताम् (इति निर्गम्य पूर्वस्थानमाश्रयन्ति)।

(ततः प्रविशति सपुत्रो विभाण्डकः)

**विभाण्डकः-** वत्स ! पुनरप्याश्रमे मादकः सुरभी राजते।

**श्रृङ्गी-** तात ! रजनीगन्धा प्रफुल्लिता स्यात्।

**विभाण्डकः-** भवतु, आसन उपविश्य मानसीं यज्ञक्रियां निर्वहतु। अत्र प्रज्वलितयज्ञकुण्डं मानसं चरूं समन्त्रं जुहुधि।

**श्रृङ्गी-** एष करोमि। (इति द्वौ व्यापृतौ)।

**विमला-** सखि ! सुरक्षितमिदं स्थानम् यतो वयमिमौ पश्याम नेमावस्मान्।

---

बार-बार घूमकर छानबीन कर लेनी चाहिये। (इस प्रकार सब लोग घूम-घूमकर आश्रम देखते हैं)।

**चपला**—यह आश्रम बड़ी ऊँची चोटी पर स्थित है इसलिए यहाँ से दूर-दूर तक देख सकते हैं।

**नायक**—इस आश्रम का सारा परिसर देख लिया, अब विभाण्डक आ भी सकते हैं, अतः अब निकल चलना चाहिए।

(इस प्रकार निकलकर पूर्वस्थान मण्डप में आ जाते हैं) (तत्पश्चात् पुत्र के साथ विभाण्डक प्रवेश करते हैं)

**विभा.-** वत्स! इस समय आश्रम में फिर उन्मादक सुगन्धि बह रही है।

**श्रृङ्गी-** पिताजी ! वन में रजनीगन्धा (रातरानी) फूली होगी।

**विभा.-** हाँ हो सकता है। अब मेरे साथ में बैठकर मानसिक यज्ञ की प्रक्रिया पूरी करो। यह अग्निकुण्ड प्रज्वलित हो रहा है, इसमें मन्त्र पढ़ते हुये मन में कल्पित चरू (हवन द्रव्य) का हवन करो।

**श्रृङ्गी-** मैं यज्ञ करता हूँ। (इस प्रकार दोनों मानस यज्ञ करने लगते हैं)।

**विमला-** सखि! यह बहुत सुरक्षित लतामण्डप है, जहाँ से हम लोग इन दोनों को देख सकते हैं, ये दोनों हमें नहीं देख सकते।

**चपला-** शोभनमिदं यज्ञकर्म, यद्द्रव्यमन्तरेणैव सम्पद्यते।

**सरला-** द्रव्याभावे मानसं पूजनं प्रसिद्धम्, फलं च तस्य द्रव्यविहितमिव लभ्यते।

**नायकः-** ह्रस्वस्वरेण वदत, अन्यथा गोपनीयता भग्ना स्यात्।

**सर्वाः-** मुखानि हस्तैराच्छादयन्ति।

**नायकः-** पश्यत, यज्ञसमाप्तौ वैश्वानरं परिक्राम्यतः।

**विमला-** किमेतत्? परिक्रमानन्तरं बारम्बारमाकाशं द्रष्ट्वा भूमौ स्वच्छायं पश्यतः कथमिदम्?

**नायकः-** एषा काचिद्योगसाधना स्यात्?

**विमला-** साधुवत्तयावुत्तः, योगबलादेव तापसाःभूतविकारान् जयन्ति।

**नायकः-** योगसिद्धौ योगी कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थो भवति।

---

**चपला-** यह अच्छा यज्ञ कर्म हो रहा है जिसमें द्रव्य (यव तिल घी आदि) का कुछ भी खर्च नहीं किन्तु यज्ञ सम्पन्न हो रहा है।

**सरला-** द्रव्य के अभाव में मानसिक पूजन का विधान प्रसिद्ध ही है। मानसिक कर्म का फल द्रव्यकृतकर्म के ही समान मिलता है।

**नायक-** तुम लोग धीमी वाणी (चुपके) से बोलो, अन्यथा हम लोगों की गोपनीयता का भण्डाफोड़ हो सकता है। (सभी हाथों से मुँह को ढँकती हैं)।

**नायक-** देखो! यज्ञ समाप्त करने पर प्रज्वलित यज्ञाग्नि की परिक्रमा कर रहे हैं।

**विमला-** यह क्या है? परिक्रमा के बाद बार-बार आकाश को देख कर भूमि पर अपनी छाया को देखते हैं, यह क्यों?

**नायक-** यह कोई योग साधना होगी?

**विमला-** आप ठीक कह रहे हैं क्योंकि योग के बल से तपस्वी योगीजन भूतविकारों (पृथ्वी, जल, तेज, वायु आकाश के उपद्रवों) को जीत लेते हैं।

**नायक-** यौगिक सिद्धि मिल जाने पर योगी पुरुष सब कुछ करने में तथा कुछ भी न करने में, एवम् सृष्टि का परिवर्तन (उलट-पलट) करने में समर्थ हो जाता है अर्थात् उसके लिए कुछ भी असम्भव नहीं रहता।

स्वस्थानेऽप्यचलः प्रयाति भुवने सुप्तोऽपि जागर्त्यसौ,
भुक्त्वापि क्षुधितो भयेऽपि मुदितः पश्यन्नपश्यन्नपि।
निस्त्रैगुण्यमतिर्विलक्षणगतिश्चैकोऽप्यनेकायते,
योगी कर्मरतोऽपि भोगविरतो जानात्यजानन्नपि॥ 69॥

**विभाण्डकः**- वत्स! एषा शर्वरी समायाता, पक्षिणः नीडमाश्रिताः शब्दलेशं न कुर्वन्ति, केवलमारण्यकजन्तवो वदन्ति, मर्कयेच्छलनं विश्रान्तम्, भृङ्गा गुञ्जनं न

---

**अन्वयः**- असौ योगी स्वस्थाने अचलः अपि भुवने प्रयाति, सुप्तः अपि जागर्ति। भुक्त्वा अपि क्षुधितः, भये अपि मुदितः, अपश्यन् अपि पश्यति। निस्त्रैगुण्यमति-र्विलक्षणगतिः, एकः अपि च अनेकायते। कर्मरतः अपि भोगविरतः, अजानन् अपि जानाति।

**व्याख्या**- असौ योगी= सिद्धपुरुषः, स्वस्थाने=स्वासने, निजकुटीरे एवेत्यर्थः। अचलः=स्थिरः समाधिस्थ इति तात्पर्यम्, अपि=विरोधे, भुवने=भूमण्डले, त्रैलोक्ये, प्रयाति=विचरति, सुप्तः=शयितः, अपि जागर्ति=प्रबुध्यते। भुक्त्वा=प्रचुरखादित्वा अपि क्षुधितः=रिक्तोदर एव तिष्ठति। भयेऽपि=भीतावपि, मुदितः=प्रसन्नः निर्भय इति भावः। अपश्यन्= अनवलोकयन् अपि पश्यति=विलोकते, निस्त्रैगुण्यमतिः= त्रिगुणातीतबुद्धिः, विलक्षणगतिः= अलौकिकव्यवहारः भूमावुन्मज्जति निमज्जति परकाये प्रविशतीत्यादिः। एकोऽपि=एकाक्यपि, अनेकायते=अनेकयोनिष्वनेकरूपाणि दधर्ति। कर्मरतः=शुभाऽशुभक्रियापरोऽपि, भोगविरतः= पापपुण्यजनितदुःखसुखफलैर्निर्लिप्तः, अजानन्=अविदन् अपि जानाति=वेत्ति। शार्दूलविक्रीडतम्, अनुप्रासः।

---

योगी अपने स्थान पर समाधिस्थ (अचल) होने पर भी सारे भूमण्डल में विचरण करता रहता है। सोता हुआ भी जागता, पूरा खाकर भी भूखा रहता, भय आने पर भी निर्भीक रहता और न देखता हुआ भी देखता है। योगी की बुद्धि त्रिगुणातीत होती है। इसके सारे व्यवहार आश्चर्यजनक होते हैं। योगी अकेला होता हुआ भी अनेक (सिंह, वृक्ष, शिला, नरनारी आदि) रूप धारण कर लेता है, योगी कर्म करता हुआ भी उसके फल से लिप्त नहीं होता तथा कुछ भी न जानता हुआ सब कुछ जानता रहता है।

**विभा.**- वत्स ! यह देखो ! रात आ गई है, पक्षी अपने-अपने घोसलों में विश्राम करने लगे और लेश मात्र शब्द नहीं कर रहे हैं, केवल जंगली जन्तु बोल रहे हैं। वानरों की उछलकूद भी शान्त हो गई और भौंरे-गुञ्जार नहीं कर रहे हैं,

चरन्ति, मन्दमन्दमारुते, वृक्षवल्लीनां पत्राणि मुखरी भवन्ति, तस्मात् आसनबद्धं विश्रम्यताम्।

(इति आसनं विश्राम्यतः)

**विमला-** अहो! एतयोः शयनमपि योगे प्रतिष्ठितम्।

**सरला-** विश्रामोऽपि समाधिर्भवति ?

**चपला-** सर्वा क्रिया योग एव।

**नायकः-** शोभनोऽयं रात्र्यवसरः तदहं द्वयोरूपरि भस्मक्षरणं करोमि।

**(इति प्रविशत्यभ्यन्तरे कृष्णशाटी धृत्वा)**

**नायकः-** भोः भस्म ! तुभ्यं नमः यदङ्गराज इच्छति तत्कुरुस्व।

(इति ललाटे वक्षसि पादयोरासने प्रक्षिपति)

**विमला-** सखि ! एतस्मिन् व्यवसाये बहवो मासा व्यतीताःअङ्गदेशोऽन्तावस्थां प्रतीक्षेत।

---

धीमी-धीमी हवा से वृक्ष और लताओं के हिलते (खड़खड़ाते) हुए पत्ते मुखरित (ध्वनित) हो रहे हैं। इसलिये आसन बाँधकर सो जाओ।

**(इस प्रकार आसन बाँधकर सो जाते हैं)**

**विमला-** अहो ! इनका शयन भी योग में ही समाहित होता है।

**सरला-** हाँ इनका विश्राम भी समाधि ही है अर्थात् योगी लोग समाधि में ही सोते हैं।

**चपला-** इनके सारे कार्य योग ही हैं।

**नायक-** यह रात का समय बहुत अच्छा है। अब हमें इन दोनों (सोते हुओं) पर भस्मक्षरण (बिखेरने) का प्रयोग करना चाहिये। (इस प्रकार काली चादर ओढ़कर आश्रम के अन्दर घुसता है)।

**नायक-** हे भस्म ! तुम्हें नमस्कार है, जो रोमपाद चाहते हैं वही करो।

(इस प्रकार मस्तक, सीना, पैर तथा आसन पर भस्म फेंकता है)

**विमला-** सखि ! हम लोगों को इस कार्य (ऋषि खोज) में बहुत मास व्यतीत हो चुके हैं। अङ्गदेश अन्तिम दशा (तहस-नहस की अवस्था) में पहुँच चुका होगा व हम लोगों की अन्तिम प्रतीक्षा में रत होगा।

**चपला**- सखि! न स्ववशे किञ्चित्।

**शृङ्गी**- (स्वप्नायते) हा तात ! क्वासि ?

**नायकः**- भस्मप्रभावोऽयम् (इति लुप्यति)

**विभाण्डकः**- (उद्बुध्य) वत्स! वत्स ! किमेवं प्रलपसि ? (विचार्य) आः! दिवसे विपन्नौ राक्षसौ दृष्टौ, अतः स्वप्नायते (इति शेते)।

**नायकः**- (निद्राध्वनिमाकर्ण्य) अहो ! सुप्तो मुनिः पुनस्तदेव करोमि।

(इति मन्त्रं जपन् कुमारोपरि भूतिपोटलिकां भ्रमयति)

**शृङ्गी**- (पुनः स्वप्नायते) हा तात! कुत्र गतोऽसि ? अहं अत्रैकाकी सर्वत्र त्वां विचिनोमि।

**विभाण्डकः**- (उत्थाय) पुत्रक ! पुत्रक ! ऋष्यशृङ्ग!!!

**शृङ्गी**- (उन्निद्र्य) आम्, तात!

**नायकः**- (विलुप्य) अनर्थकार्ययं जटिलः।

---

**चपला**- सखि ! अपने वश की तो बात है ही नहीं।

**शृङ्गी**- (स्वप्न में बोलते हैं) हा पिताजी! तुम कहाँ हो ?

**नायक**- यह भस्म का चमत्कार है (जो भावी घटना को स्वप्न में दर्शाती है)

(इस प्रकार छिप जाता है)

**विभा.**- (जगकर) वत्स ! वत्स ! इस प्रकार क्यों बड़बड़ा रहे हो ?

(सोचकर) हाँ इसने दिन में मरे हुये वनमानुष देखे हैं इसीलिये सोते समय बड़बड़ाता है। (इस प्रकार फिर सोने लगते हैं)।

**नायक**- (सोने का शब्द सुनकर) अच्छा अब मुनि जी फिर सो गये हैं अतः मैं फिर अपना कार्य (तन्त्र प्रयोग) करूँ।

(इस प्रकार मन्त्र जपता हुआ शृङ्गी के ऊपर भस्म की पोटली घुमाता है)

**शृङ्गी**- (फिर स्वप्न में बोलते हैं) हा तात! तुम कहाँ गये हो ? मैं यहाँ अकेला हूं तुम्हें सर्वत्र ढूँढ रहा हूँ।

**विभा.**- (उठकर) पुत्र ! पुत्र !! ऋष्यशृङ्ग!

**शृङ्गी**- (नींद खोलकर) हाँ पिताजी!

**नायक**- (छिपकर) यह जटावाले मुनि जी अनर्थकारी हैं।

**विभाण्डकः**- किमेवमपूर्वं प्रलपसि त्वम् ?

**शृङ्गी**- तात ! अद्य विलक्षणः स्वप्नो दृष्टः।

**विभाण्डकः**- कीदृशः ?

**शृङ्गी**- केनचित्सत्वेनाकृष्टोऽहं त्वत्तो वियोजितः।

**विभाण्डकः**- ततस्ततः ?

**शृङ्गी**- ततो विचित्रस्थाने गायन्ति नृत्यन्ति सत्त्वानि पश्यामि।

**विभाण्डकः**- अग्रे कथय।

**शृङ्गी**- ततोऽहं भयाद्यावत्त्वामुच्चैराकारयामि, तावत्त्वयाऽहमुद्बोधितः।

**नायकः**- (स्वगतम्) चौर इवात्र प्रच्छन्नोऽस्मि तद्यावदनयोर्लोचनगोचरो न भवामि, तावन्निष्क्रमामि।

(इति जानुपाणिभ्यां रिङ्गन्निष्क्रान्तः)

**शृङ्गी**- तात ! तात! वनविडालोऽधुना पलायितः।

---

**विभा.**- वत्स! आज तुम बेढङ्गे रूप में क्यों बड़बड़ा रहे थे?

**शृङ्गी**- तात! आज मैंने विचित्र स्वप्न देखा है।

**विभा.**- कैसा ?

**शृङ्गी**- किसी जीव (शरीरधारी) ने मुझे खींचकर तुम से अलग बहुत दूर कर दिया है।

**विभा.**- फिर क्या हुआ ?

**शृङ्गी**- तत्पश्चात् एक विचित्रस्थान पर (उसी प्रकार के) बहुत से जीवों को नाचते और गाते हुए देखता हूँ।

**विभा.**- आगे कहो।

**शृङ्गी**- तत्पश्चात् मैं भयभीत होकर जब तक आपको उच्च स्वर से पुकारता हूँ तब तक आपने मुझे जगा दिया।

**नायक**- (मन में) मैं इनके आश्रम में चोर की भाँति घुसा हुआ हूँ इसलिये जब तक इनकी आँखें मुझे न देख पायें तब तक यहाँ से जल्दी ही खिसक लूँ।

(इस प्रकार हाथ और घुटनों से रिंगता हुआ निकल गया)

**शृङ्गी**- पिताजी ! पिताजी! अभी वनविलाव जैसा भागा था।

**विभाण्डकः**- स तु यदा कदाऽऽयात्येवेति नाश्चर्यम्।

**चपला**- बहिर्गत्वा कुक्कुटरवं करोति।

**विमला**- बहिर्गत्वा कोकिलरुतं करोति।

**विभाण्डकः**- वत्स ! भवतु, प्रभातप्राया शर्वरी, पक्षिणः कूजन्ति, अद्य त्वरया कुशानादातुं यास्यामीति लघुनित्यकार्यं निर्वर्तनीयम्।

**विमला**- (नायकमालिङ्ग्य) फलत्यङ्गराजस्य सौभाग्यम्।

**नायकः**- नाऽसत्यमत्र, यतोहि सर्वं स्वानुकूलं सम्पद्यते।

**चपला**- किन्त्वयं तस्य पिता बाधाकारी।

**नायकः**- धैर्यं वधान ! सापि न भविष्यति।

**सरला**- इदानीं नदीं यातः ततश्च कुशानादातुं तस्य पितैव यास्यति।

**नायकः**- अहं वृक्षशिखरमारूह्य पश्यामि नदीं यातोऽन्यत्र वेति।

**(इति तथा करोति गुप्तरूपेण)**

---

**विभा.**- वह तो यदा-कदा आया ही करता है इसमें आश्चर्य क्या है?

**चपला**- एक ओर बाहर मुर्गा का शब्द करती है।

**विमला**- बाहर जाकर कोयल ध्वनि करती है।

**विभा.**- बेटा ! बस हो गया। रात्रि समाप्त हो गई है वन के पक्षी बोलने लगे हैं। आज कुश लेने हेतु बहुत शीघ्र जाना है अतएव नित्यकृत्य शीघ्र ही निपटा लेना है।

**विमला**- (नायक की कौलिया भरके) अङ्गराज का भाग्य सफल हो रहा है।

**नायक**- इस तेरे कथन में तनिक भी झूठ नहीं है। क्योंकि सब कुछ हम लोगों के अनुकूल ही हो रहा है।

**चपला**- किन्तु शृङ्गी का पिता ही इसमें बाधा है।

**नायक**- धैर्य बाँधों, वह बाधा भी दूर हो जायेगी।

**सरला**- इस समय दोनों नदी को जा रहे हैं, पश्चात् कुश लेने के लिये तो शृङ्गी का पिता ही जायेगा।

**नायक**- मैं पेड़ की शिखा पर चढ़कर देखता हूँ कि नदी को जा रहे हैं व अन्यत्र।

**(इस प्रकार छिपकर वटवृक्ष पर चढ़ता है)**

**विमला-** बहुदूरदर्शी मम नायकः।

**विभाण्डकः-** (सपुत्रो नदीं प्रति निष्क्रान्तः)

**विमला-** स्नानानन्तरं कुशेभ्यो याति न वेति प्रेक्षणीयम्।

**चपला-** यद्येकाकी मिलति स कुमारस्तदाऽस्माकं कुटजालात्तन्मोक्षो दुर्लभः।

**विमला-** तदा तु आनखशिखं बुद्धिवैभवं दर्शयित्वा तादृशं तं विवशतां नेष्यामः येनास्मान् बिना क्षणं न तिष्ठेत्।

**सरला-** सखि ! पुत्रं प्रत्यस्य ममत्वमधिकम् तस्मात् कथं एकलं त्यक्ष्यति?

**चपला-** अहो! वीतरागेष्वपि ममत्वम्?

**विमला-** सखि ! ममत्वं दुर्जेयम्—

**मुष्टौ मातु धरा व्योम, गिरिं चात्तु पिपीलिका।**
**सागरं च पिवेद् दंशो, ममत्वं को जयेन्नरः॥ 70॥**

---

**अन्वयः-** मुष्टौ धरा व्योम च मातु, पिपीलिका गिरिं च अत्तु, दंशः सागरं च पिवेत् (किन्तु) ममत्वं को नरः जयेत्?

**व्याख्या-** मुष्टौ=मुष्टिकायाम्, धरा=भूः, व्योम्=खम् च मातु=सम्मातु, पिपीलिका=कीटविशेषः चिटिकेत्यर्थः। गिरिम्=पर्वतम्, च=अप्यर्थे, अत्तु=निमीलतु, दंशः=मशकः, सागरम्=समुद्रम्, च पिवेत्=शोषयेत् किन्तु ममत्वम्=ममताम्, कः=प्रश्ने, नरः=पुमान्, जयेत्=विजयेत् न कोऽपीत्यर्थापत्तिः।

---

**विमला-** हमारे नायक बहुत चतुर हैं।

**विभा.-** पुत्र के सहित नदी के लिये निकल गये।

**विमला-** यह देखना है कि स्नान के पश्चात् इनका पिता कुश लेने हेतु जाता है व नहीं।

**चपला-** यदि शृङ्गी ऋषि अकेले मिल जायें तब तो हम लोगों के षड्यन्त्र (जालसाजी) से उनका बच पाना बहुत कठिन है।

**विमला-** तब तो एड़ी से चोटी तक का बुद्धिवैभव दिखलाकर हम लोग उनको ऐसा विवश कर देंगे कि हम लोगों के बिना वे (शृङ्गी) क्षण भर भी चैन से न रह सकेंगे।

**सरला-** सखि ! इस जटाधारी का पुत्र में बहुत ही ममत्व है। अतः, शृङ्गी को अकेला कैसे छोड़ेगा?

**चपला-** अहो! बीतरागों में भी ममत्व होता है?

**विमला-** सखि ! ममत्व का जीतना कठिन है- कोई मुट्ठी में पृथ्वी को और आकाश को भले ही दबा ले तथा पहाड़ को चींटी भले ही निगल जाये, एवम् समुद्र को मच्छर भले ही पी ले, किन्तु ममत्व को भला कौन जीत सकता है?

**सरला-** अतएव सृष्टिपरम्परा बहति।

**विमला-** यदि पुत्रमपि नयेत्?

**सरला-** अत्रैव स्थास्यामः कदाचिन्न कदाचिदेकाकी मिलिष्यत्येव।

(नायकः काकारवं करोति)

**चपला-** (श्रुत्वा) सखि! मौनं साध्यताम्, काकारवेण तदागमनम् सूचयत्यावुत्तः।

(ततः प्रविशति ससुतो विभाण्डकः)

**विभाण्डकः-** (कमण्डलुं निधाय) वत्स! आनीयतां कुठारः, यामि कुशानानेतुम्।

**शृङ्गी-** (कुठारं दत्त्वा) तात! मयापि गन्तव्यम्?

**विभाण्डकः-** नहि वत्स! अतिथिसेवायै त्वमिहैव तिष्ठ, नाश्रमाद् बहिः याहि, न कमपि प्रत्येहि, नापि चापरदत्तमद्धि पिव, इह बहवो राक्षसाः कपटवेषेण तपो विघ्नन्ति, तस्मात् ब्रह्मचिन्तने रमस्व।

---

**सरला-** इसीलिये इस सृष्टि की परम्परा चलती है

**विमला-** यदि साथ में पुत्र को भी ले जाये तो क्या होगा?

**सरला-** तो हम लोग यहीं पर रहेंगे कभी न कभी तो शृङ्गी अकेले मिलेंगे ही।

(नायक पेड़ पर कौवा की भाँति बोलता है)

**चपला-** (सुनकर) सखि! चुप हो जाओ, बहनोई जी काकध्वनि करके दोनों के आने की सूचना दे रहे हैं।

(तत्पश्चात् पुत्र के सहित विभाण्डक प्रवेश करते हैं)

**विभा.-** (कमण्डल को रखकर) वत्स! हमारा कुदाल (कुठार) ले आओ, मैं कुश लेने के लिये जा रहा हूँ।

**शृङ्गी-** (कुठार देकर) पिताजी! क्या में भी साथ चलूँ?

**विभा.-** बेटा! नहीं। आश्रम में अतिथि सेवा हेतु यहीं रहो। तुम आश्रम से बाहर मत निकलना और न किसी का विश्वास करना तथा पराये हाथ का दिया हुआ न कुछ खाना न पीना क्योंकि यहाँ पर बहुत से राक्षस कपट वेष बनाकर तपस्या भंग करते हैं, अतः ब्रह्मचिन्तन ही करना।

**चपला-** (शृण्वन्ती) सखि ! एवमविचालितास्तु विचालयितुमशक्यः।

**विमला-** भैषीर्मा। विधानेनाचला अपि विचलन्ति।

**विभा.-** वत्स ! आसायं व्रजामि। (इति पुत्रं पश्यन्निर्गतः)।

**सरला-** किं प्रवेष्टव्यम् ?

**चपला-** क्षणं विरम्, सङ्केतं प्रतीक्षस्व।

**विमला-** कदाचित्प्रत्यागच्छेत्।

**चपला-** (कोकिलरुतं श्रुत्वा) अहो ! कोकिलकलेन आश्रमप्रवेशं निर्बाधं सूचयति चराधीशः।

(ततः इतस्ततः पश्यन्त्यश्चर्यः प्रविशन्ति)

**शृङ्गी-** (विलोक्यासनादुत्थाय च) प्रणमामि ब्रह्ममूर्तिभ्यः।

**चपला-** तपो वर्धताम्।

**शृङ्गी-** इदमासनम्, इदमर्घ्यम्, एतानि च फलानि।

(सर्वा उपविशन्ति)

---

**चपला-** (सुनती हुई) सखि ! इस प्रकार के उद्देश्य से अडिग किये हुये को डिगाना (विचलित करना) असम्भव है।

**विमला-** डरो मत, उपाय करने से पर्वत भी डिग (ढह) जाते हैं।

**विभा.-** वत्स! सांयकाल तक के लिये मैं जाता हूँ। (इस प्रकार पुत्र को देखता हुआ निकल गया)।

**सरला-** क्या आश्रम में प्रवेश करना चाहिये ?

**चपला-** क्षणभर रुको, सङ्केत की प्रतीक्षा करो।

**विमला-** कदाचित् विभाण्डक लौट आये ?

**चपला-** (कुहू कुहू सुनकर) अहो ! हमारे नायक कोकिल ध्वनि करके आश्रम में निर्बाध प्रवेश की सूचना दे रहे हैं।

(तत्पश्चात् इधर उधर देखती हुई गणिकायें आश्रम में प्रवेश करती हैं)

**शृङ्गी-** (देखकर तथा आसन से उठकर) मैं ब्रह्ममूर्तियों को प्रणाम करता हूँ।

**चपला-** आपकी तपस्या बढ़ती रहे।

**शृङ्गी-** लीजिये, यह आसन है, यह अर्घोदक है तथा ये भिक्षा हेतु फल हैं।

(सब बैठ जाती हैं)

चपला- नन्वेकाक्येव तपति भवान्?

शृङ्गी- नहि नहि भगवन्! इदानीमेव कुशानादातुं प्रस्थितो मे तातः, स च सायमागमिष्यति, तावत्फलमुपभुज्य विश्रम्यताम्।

(इति बदरामलकविल्वकपित्थपिप्पलमधूकचिञ्चोदुम्बराणि समर्पयति)

चपला- ब्रह्मन्! बदरीवनात् प्रतिनिवृत्ताः वयं केवलं पयोव्रतं वहामः।

शृङ्गी- किं बदरीवनात्?

चपला- ओम् यत्र नर-नारायणावृषी तपस्यतः, तत आनीतं पवित्रममुं फल-प्रसादं तुभ्यमर्पयामि (इति विमलामिङ्गति)।

विमला- (पोटलिकातो मोदकान् दत्वा) भुज्यतामेष प्रसादः।

शृङ्गी- (गृहीत्वा) सायंकाले पित्रा सह भोक्ष्ये।

---

चपला- क्या आप अकेले ही रहते हैं?

शृङ्गी- नहीं-नहीं भगवन्! अभी-अभी कुश लेने हेतु मेरे पिता जी वन को गये हैं, वे शाम को आ जायेंगे, तब तक फलों का भोग लगाकर आप लोग विश्राम करें।

(इस प्रकार बेर, आँवला, कैथ, वेल, पिप्पल महुआ, इमली और गूलर के फल देते हैं)

चपला- ब्रह्मचारी जी! जब से हम लोग बदरिकाश्रम से लौटे हैं, तब से केवल पयोव्रत (पानी पीकर रहने का उपवास) धारण कर रहे हैं।

शृङ्गी- क्या आप बदरीवन से लौटे हैं?

चपला- हाँ जी! जहाँ पर नर नारायण नाम के दोनों ऋषि तपस्या करते हैं, वहाँ से लाया हुआ फल का प्रसाद भी आपको देते हैं।

(इस प्रकार प्रसाद देते हुए विमला को संकेत करती है)

विमला- (पोटली से निकाल कर लड्डू देकर) लीजिये प्रसाद पाइये।

शृङ्गी- (लेकर) सन्ध्याकाल में पिताजी के साथ प्रसाद खायेंगे।

* * * * * * *

## • बदरीवन

बदरी शब्द का बेर अर्थ है, इन्हीं वृक्षों के वन को बदरीवन (बद्रीनाथ) कहते हैं। यह वन (स्थान) इतना पवित्र है कि यहाँ पर तप अनुष्ठान करने से अतिशीघ्र

**विमला-** असङ्गतोऽयं विचारः।

**शृङ्गी-** कस्मात्?

**विमला-** उपेक्षितः प्रसादोऽनर्थमुत्पादयति तव पिताऽन्येद्युः सभाजनीयः।

---

ही सिद्धि प्राप्त हो जाती है। उत्तराखण्ड के गढ़वाल में यह एक प्रसिद्ध धाम (तीर्थ) है। यह स्थान नर और नारायण पर्वतों के बीच अलकनन्दा के तट पर विद्यमान है। धर्म की पत्नी मूर्ति की कुक्षि से अवतीर्ण नर और नारायण ने इन्हीं दोनों पर्वतों पर तपस्या की थी अतः इन पर्वतों का नाम भी नर और नारायण पड़ गया। महाभारत के वनपर्व में कहा गया है कि–

नरनारायणौ यौ तौ, पुराणावृषिसत्तमौ।
तावुभावनुजानीहि, हृषीकेशधनञ्जयौ।।
यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः।
तदाश्रमपदं पुण्यं बदरीनाम विश्रुतम्।।

यहाँ पर नारद जी ने भी तपस्या की थी। यदुकुल का परस्पर में संहार कराके गोलोक जाते समय श्री कृष्ण जी ने उद्धव को भी तप करने हेतु बदरिकाश्रम को ही भेजा था-

गच्छोद्धव मयाऽऽदिष्टो, बदर्याख्यं ममाश्रमम्।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैश्शुचिः।।

(भाग. 11 स्कन्ध 30 अध्याय)

युद्धानन्तर पाण्डवों ने भी यहीं से स्वर्गारोहण किया था, व्यासजी ने यहीं बैठकर ब्रह्मसूत्र तथा महाभारतादि की रचना की थी, इसीलिये व्यास को बादरायण भी कहते हैं, यहीं पर सरस्वती नदी अलकनन्दा से मिलती हैः-

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं, ततो जयमुदीरयेत्

—महाभारत

इस प्रसिद्ध तीर्थ के विषय में अधिक लिखना पृष्टपेषण ही होगा।

* * * * * * *

**विमला-** यह विचार उचित नहीं है।

**शृङ्गी-** क्यों?

**विमला-** उपेक्षित (देर करके खाया गया) प्रसाद अनर्थ को पैदा करता है। आपके पिता जी को किसी दूसरे दिन प्रसाद दे देंगे।

**सरला-** तिरस्कृतः प्रसादस्तीर्थदेवस्तस्मै शपति।

**शृङ्गी-** किं तीर्थदेवः शपति?

**विमला-** अथ किम्? श्रूयते हि तुङ्गध्वजो राजा सत्यदेवप्रसादमुपेक्ष्य घोरं दुःखमवाप। अतस्त्वरितमेवोपयोगो विधीयताम्।

**शृङ्गी-** (स्वगतम्) एकतः पितुरादेशः, अपरतश्च तीर्थमर्यादा, उभयोः किं विधेयम्। (विचिन्त्य) पितरं प्रसादयिष्यामि, तीर्थशापो दुराराध्यः।

(इति भोक्तुं वल्कलबीजानि वारयितुं यतते)

**चपला-** ब्रह्मन्! अलं श्रमेण। नात्र बीजं न च वल्कलम्।

---

**सरला-** तीर्थ के प्रसाद का तिरस्कार होने से तीर्थ देवता (उसे) शाप दे देता है।

**शृङ्गी-** क्या तीर्थ देवता शाप दे देता है?

**विमला-** और क्या? सुना जाता है कि तुङ्गध्वज राजा ने भगवान् (सत्यनारायण) के प्रसाद की थोड़ी सी अवहेलना कर दी थी जिसके कारण उसे घोर दुःख उठाना पड़ा था। अतः प्रसाद का तुरन्त ही उपयोग कर लेना चाहिये।

**शृङ्गी-** (मन में) एक ओर पिता की आज्ञा कि किसी के हाथ की कोई वस्तु मत खाना पीना और दूसरी ओर तीर्थ प्रसाद की मर्यादा का पालन करना, दोनों में किसका पालन करूँ। (सोचकर) पिताजी को प्रसन्न कर लूँगा, किन्तु तीर्थ देवता का शाप टालना असम्भव होगा।

(इस प्रकार खाने के लिये उन मोदकों को फल समझकर उनके छिलका और बीज निकालने का प्रयत्न करने लगते हैं)

**चपला-** ब्रह्मचारी जी परिश्रम मत कीजिये। इन फलों में बीज और छिलके नहीं होते।

* * * * * * *

## • ॥ तुङ्गध्वज ॥

स्कन्द पुराण के रेवाखण्ड में सत्यनारायण कथा के पञ्चम अध्याय में राजा तुंगध्वज का उपाख्यान वर्णित है। यह राजा बड़ा प्रतापी और बुद्धिमान् था। एक बार घोड़े पर सवार होकर जंगल में शिकार खेलने गया, वहाँ एक विशाल वटवृक्ष के पास पहुँचा, वृक्ष के नीचे चन्दा एकत्रित करके और उससे इकट्ठी की गई सामग्री द्वारा गोपाल, बाल भगवान् सत्यनारायण का पूजन कर रहे थे, क्षुद्रजाति का समझ

**शृङ्गी-** किमीदृशान्यपि फलानि भवन्ति?

**विमला-** नन्वेवमेव सेव्यताम्।

**शृङ्गी-** वाढम्! (इति भोक्तुं प्रवर्तते)।

**चपला-** ब्रह्मचारिन्! तीर्थे-तीर्थे वने-वने च वयं विचरामः सर्वेषां जलानां फलानां सारं विद्मः। यथा फलान्याहरामस्तथैव जलमपि पिवामः।

**शृङ्गी-** अहो! अमृतायमानानि फलानि, नातः पूर्वं भुक्तानि। किं जलमपि विलक्षणं भवति?

**विमला-** अथ किम्! पयोव्रता वयं सततं जलकुम्भीं वहामः, यदीच्छसि तदा गृह्यताम्। (इति जलकुम्भीं दर्शयति)।

---

राजा न तो उसके पास गया और न ही सत्यनारायण को प्रणाम किया। बेचारे ग्वालबाल राजा के पास प्रसाद लाये किन्तु राजा ने उसे पृथ्वी पर ही छोड़ दिया और अपने राजमहल को चला गया। प्रसाद की उपेक्षा करने से भगवान् रुष्ट हो गये ओर जो राजा के सौ लड़के थे वे सब मर गये तथा सेना खजाना इत्यादि सारा वैभव भी अदृश्य हो गया।

उस बुद्धिमान् राजा ने समझ लिया कि भगवान् के प्रसाद की उपेक्षा करने से ही हमारा सर्वनाश हुआ है, वह तुरन्त ही उस वटवृक्ष के पास गया और सभी ग्वालबालों को वहाँ बुलाकर उनके साथ एक सत्यनारायण पूजन बड़ी धूमधाम से किया। राजा ने भगवान् से क्षमा माँगी और उन्हीं क्षुद्रजाति के लोगों के हाथों से प्रसाद लिया ऐसा करने से भगवान् सत्यनारायण प्रसन्न हो गये जिससे राजा के मृतपुत्र जीवित हो गये ओर विलुप्त वैभव भी पूर्ववत् प्रकट हो गया।

* * * * * * *

**शृङ्गी-** क्या ऐसे भी फल होते हैं?

**विमला-** हाँ जी! यों ही पाइये (खा लीजिये)

**शृङ्गी-** अच्छा! (इस प्रकार खाने लगते हैं)

**चपला-** ब्रह्मचारी जी! हम लोग तीर्थों-तीर्थों और वनों-वनों में विचरण करते रहते हैं, इसीलिये हम लोग सभी फलों और सभी जलों का रहस्य जानते हैं। हम लोग जितने स्वादिष्ट फल खाते हैं। उतना ही स्वादिष्ट जल भी पीते हैं।

**शृङ्गी-** आश्चर्य है ये फल तो अमृत तुल्य मधुर हैं पहले मैंने ऐसे फल कभी नहीं खाये। क्या जल भी विलक्षण होता है?

**विमला-** हाँ जी! आजकल हम लोग पयोव्रतधारी हैं, इसलिये इस जलकुम्भी (सुराही) को निरन्तर साथ रखते हैं। यदि आप भी लेना (पीना) चाहें तो ग्रहण करें (इस प्रकार सुराही को दिखाती है)।

**शृङ्गी-** परीक्षणीयमेव। (इति पात्रं प्रसारयति)

(विमला मधुरासवं पात्रे ददाति)

**शृङ्गी-** (पीत्वा) आ! मधुरं सुरभितं चेदं जलम् पीत्वा हृष्यन्ति मे रोमाणि श्वासा एव सौरभमुद्गिरन्ति। ननु पृच्छामि कुत आनीतमेतत्?

**चपला-** अस्माकमाश्रमे वहत्येक उत्सः?

**शृङ्गी-** कुत्र स आश्रमो भगवन्?

**विमला-** इतः पञ्चदशयोजनदूरं चम्पानामकं यक्षरक्षितं विलसति, तन्मध्ये शान्ताश्रमेऽस्माकं वासः, तत्रेदृशं फलं जलं च विद्यते। तत्रत्या वनस्पतयो दिव्यकुसुमानि मकरन्दाँश्च मसृणसूक्ष्माणि वल्कलानि च सृजन्ति, यानि वयं धारयामः (इति कौशेय शाटकं दर्शयति)।

**शृङ्गी-** (परामृश्य) अहो! इदं नाम वल्कलम्?

**विमला-** अस्माकमाश्रमे दिव्यतां वीक्ष्य नन्दनवनादागत्य यदा कदा देवा अपि रमन्ते।

---

**शृङ्गी-** परीक्षण (स्वाद चखने) के लिये तो लेना ही है। (बर्तन बढ़ाता है)
विमला (बोतल से पात्र में मीठा आसव देती है)।

**शृङ्गी-** (पीकर) आ! यह जल तो बड़ा मीठा और सुगन्धित है। इसे पीकर मेरे रोंगटे (रोम) प्रसन्न (खड़े) हो गये हैं और प्रत्येक श्वास सुगन्धि उगल रही है। मैं पूछता हूँ कि यह जल आप कहाँ से लाये?

**चपला-** हमारे आश्रम में एक झरना बहता है।

**शृङ्गी-** भगवन्! वह आश्रम कहाँ है?

**विमला-** यहाँ से पन्द्रह योजन (60 कोश) दूर यक्षों से रक्षित एक चम्पा नामक वन है। उसके मध्य में शान्ताश्रम में हमारा निवास है वहाँ पर इस प्रकार के फल और जल हैं। वहाँ की वनस्पतियाँ दिव्य पुष्पों ओर मकरन्द (पुष्परस) का तथा कोमल बारीक बल्कलों का भी सृजन (उत्पादन) करती रहती हैं, इन्हीं बल्कलों को हम लोग धारण करते हैं:-

(इस प्रकार रेश्मी साड़ी दिखाती है)

**शृङ्गी-** (हाथ से टटोल कर) अहो! इसको कहते हैं बल्कल।

**विमला-** हमारे आश्रम में दिव्यता को देखकर नन्दन वन में आकर यदा कदा देवता भी बिहार किया करते हैं।

**शृङ्गी-** अतएव भवतां कलेवराणि कान्तिं वितन्वन्ति।

**विमला-** तत्रत्याः सर्वे तपस्विनोऽधिकाधिकं दीव्यन्ति।

**शृङ्गी-** (उरोजान् विलोक्य) भवतामुरस्थलेष्वेते स्फोटाः पीडां न जनयन्ति किम्?

**विमला-** संस्कारवशादेतानि दुःखान्युद्भवन्ति, किन्तु तपः प्रभावाद् देहाध्यासाऽभावाच्च नानुभवपथमारोहन्ति, यतोहि देहाध्यास एव दुःखकारणम्।

**शृङ्गी-** (आत्मगतम्) अहो सहिष्णुता! अहो तपस्या! अहो मुखमाधुर्यम्!

(इति गणिकाजनानेव पश्यति)

(सर्वाः काकरवं श्रृण्वन्ति)।

**विमला-** (हावभावपूवर्कम्) ब्रह्मचारिन्! भवतः सङ्गमे सानन्दं व्यतीतं इयान् कालः, अतः परं प्रस्थातुमिच्छामः तस्मादानिच्छतोऽप्यस्मान् विसर्जय। (इत्युत्तिष्ठन्ति)

---

**शृङ्गी-** इसीलिये आप लोगों के कलेवरों की कान्ति फैल रही है।

**विमला-** वहाँ रहने वाले सभी तपस्वी (हम से भी) अधिकाधिक कान्तिमान हैं।

**शृङ्गी-** (स्तनों को देखकर) आपके वक्षस्थलों पर निकले हुये ये बड़े-बड़े फोड़े क्या पीड़ा (दर्द) नहीं करते?

**विमला-** पूर्वजन्म के संस्कारों के कारण ऐसे नाना दुःख उत्पन्न होते हैं किन्तु तपस्या (साधना) के प्रभाव से और देहाध्यास (शरीर में आसक्ति) न होने से हम लोगों को इन दुःखों का अनुभव नहीं होता है, क्योंकि देहाभिमान (आसक्ति) ही समस्त दुखों की जड़ है।

**शृङ्गी-** (मन में) धन्य है इनकी सहनशीलता, धन्य है साधना, आश्चर्यजनक है इनके मुखमण्डल का लावण्य।

(इस प्रकार गणिकाओं को देखने लगे)

(सभी काकशब्द सुनती हैं)

**विमला-** (हावभाव पूर्वक) ब्रह्मचारी जी! आपका सत्सङ्ग करते हुये इतना समय आनन्द पूर्वक बीता, अब हम लोग जाना चाहते हैं, अतएव यहाँ से जाने की इच्छा न होते हुये भी हम लोगों को विदाई दीजिये। (इस प्रकार सब उठ खड़ी हुई)

**शृङ्गी**- भवतां कार्यक्रमे कश्चिद् व्याघातो मा स्यादित्यनिच्छन्नपि पुनरागन्तुं विसृजामि।

(इति क्रमशस्तमालिङ्ग्य निष्क्रान्ताः)

**शृङ्गी**- (पर्यटन् चिन्तयति) किमत्रैकाकी कुर्याम्? नाद्यावधि ईदृशास्तापसा लोचनगोचरा अभवन्। तेषां कीदृशी तितिक्षा, कीदृशी वाणी, कीदृशं मुखम्, अहो! तेषामशनं, वसनं, पानं चात्यन्तमलौकिकम्, विस्मारिता अपि न विस्मार्यन्ते ते।

(ततः प्रविशति कुशसमित्पूलं फलपुष्पं चादाय विभाण्डकः)

(तत्पश्चात् कुशसमिधाओं का गट्ठा और फल पुष्प लादे हुये विभाण्डक का प्रवेश होता है)

**विभा.**- (पूलमवपात्य) वत्स शृङ्गिन्! कुठारमिमं मे यथास्थानं निधाय पिपासा हेतोस्तोयमानय।

**शृङ्गी**- वाढं तात! (इति तथा करोति)

**विभा.**- (जलमाचम्य) वत्स! कृता सम्पूर्णाश्रमचर्या।

**शृङ्गी**- अपूर्णा कृता।

**विभा.**- कथमपूर्णा?

---

**शृङ्गी**- भगवन्! आपके निर्धारित कार्यक्रम में कोई व्यवधान न पड़े, अतः पुनः दर्शन देने के लिये मैं आपको अनिच्छापूर्वक विदाई देता हूँ।

(इस प्रकार क्रमशः आलिङ्गन कर सब निकल गई)

**शृङ्गी**- (घूमते हुये सोचते हैं) मैं यहाँ अकेला क्या करूँ। इस प्रकार के दिव्य महात्मा आज तक मेरी आँखों ने नहीं देखे। उनकी कैसी सहिष्णुता? कैसी वाणी? कैसी दिव्य मुखाकृति? उनका खान पान वस्त्रादि सब कुछ अलौकिक था, भुलाये जाने पर भी वे भुलाये नहीं जाते।

**विभा.**- (गट्ठा गिराकर) बेटा! शृङ्गी! इस कुदाल को यथास्थान पर रखकर पीने के लिये जल ले आओ।

**शृङ्गी**- अच्छा पिताजी! (इस प्रकार कुदाल रखकर पानी देता है)

**विभा.**- (पानी पीकर) वत्स! क्या आश्रम का सारा कार्य कर लिया?

**शृङ्गी**- हाँ, पूरा नहीं कर सका।

**विभा.**- क्यों?

शृङ्गी- भवति निर्गते त्रयस्तापसा आश्रमं प्रविष्टाः।

विभा.- कीदृशास्तापसाः ?

शृङ्गी- ब्रह्मनिष्ठा दिव्याः।

विभा.- कृतमातिथ्यम् ?

शृङ्गी- आम् किन्तु दत्तानि फलानि न तैः सेवितानि।

विभा.- कस्मात् ?

शृङ्गी- पयोव्रतं कारणमुक्त्वा प्रतिषिद्धम्।

विभा.- ततस्ततः ?

शृङ्गी- ततः स्वाश्रमादानीतानि मह्यमीदृशानि फलानि दत्तानि येषु न बीजं न वल्कलं न जालम्, तेषां माधुर्यमधुनापि न मे जिह्वा विस्मरति। तात ! तेषां वल्कलमतीव सूक्ष्मं चिक्कणं विचित्रं चाभूत्। तेषां प्रसन्ननयनं पल्लवाधरं ललितकपोल-

---

शृङ्गी- पिताजी ! आपके चले जाने पर तीन महात्मा यहाँ आये थे।

विभा.- कैसे महात्मा ?

शृङ्गी- वे ब्रह्मवादी दिव्यस्वरूप महात्मा थे।

विभा.- क्या उनका सत्कार किया ?

शृङ्गी- हाँ, उनका सत्कार किया, किन्तु जब मैंने उन्हें फल दिये तो उन्होंने उनका उपयोग नहीं किया।

विभा.- क्यों ?

शृङ्गी- केवल पयोव्रत (जलाहार) करने के कारण फल नहीं खाया।

विभा.- आगे क्या हुआ ?

शृङ्गी- तत्पश्चात् उन्होंने अपने आश्रम से लाये हुये प्रसाद रूप में मुझे ऐसे फल दिये जिनमें न बीज था, न छिलका और न ही जाल था उनकी मधुरता को मेरी जिह्वा अभी भी नहीं भुला पाती। उनका वल्कल (वस्त्र) बारीक-चिकना और रंगबिरंगा था। उनका खिले नेत्रों वाला, लाल अधरों वाला दाड़ी, मूछ रहित सुडौल गालों वाला चन्द्रमा की भाँति गोरा मुखमण्डल मेरे मन से अभी भी दूर नहीं हो रहा है। उनकी रसीली बातें इस समय भी मेरे कर्णकुहरों को मधु (शहद) से आप्लावित कर रही हैं, उनके जघन स्थलों (नितम्बों) पर बारीक तथा रंग बिरंगा परिधान हृदय

चन्द्रवदधवलं श्मश्रुरहितं विलोभनीयं मुखमण्डलमिदानीमपि न मे हृदयादपैति। तेषां रससिक्तं वचनं सम्प्रत्यपि मे कर्णौ मधुनाप्लावयति, तेषां जघनेषु लघुचित्रितं परिधानं हृदयावर्जकमभवत्। प्रत्येकं वक्षसि स्फोटकद्वयम् किन्तु देहाभिमानाभावान्न तत्पीड़ा मन्वभवत्। तात! गमनकाले तत्कृतेन गूढालिङ्गनेन शरीरमस्ति सुगन्धितम् न जाने किं तपः ? कः सम्प्रदायः ? का चरीति ? तेषां मेघघटावच्छ्यामला जटाः कुसुमैरलङ्कृता मयूरपिच्छा इवासन्।

**विभा.**- आ पुत्रक ! यदपथ्यं तदेव सेवितम् नैते महात्मानः ?

**शृङ्गी**- किं तर्हि ?

**विभा.**- तपो मर्दकाः। एवमेव तापसा भ्रंशयन्ति, ब्रह्मचर्यसाधनायां नाना विघ्ना उद्भवन्ति। विषयसङ्ग एव तपनमूलम्। वत्स ! पदे-पदे कण्टकाः सन्ति, क्षणे-क्षणे वर्षन्त्यङ्गारा, दिशि-दिशि च बहन्ति विषयवाताः, सन्मार्गं भजन्तं न केवलं दानवा एव, अपितु देवा अपि विघ्नन्ति, धीराश्च विघ्नान् जयन्ति-

---

को पिघलाने वाला था। प्रत्येक महात्मा के सीने पर दो-दो फोड़े निकले हुये थे, किन्तु देहासक्ति न होने से वे उनसे पीड़ित नहीं हो रहे थे। पिताजी ! जाते समय उन्होंने जो मेरा कसकर (चिपककर) आलिङ्गन किया, उससे मेरा शरीर अभी भी सुगन्धित बना है। उनकी मेघ की काली घटाओं के समान जटायें रंग बिरंगी फूलों से अलङ्कृत होकर मयूर पंख के समान लग रही थीं। न जाने उनका वह कौन सा तप कौन सा सम्प्रदाय और कौन सा सिद्धान्त था ?

**विभा.**- आ पुत्र ! जो असेव्य था तुमने उसी का सेवन किया, अरे ! ये महात्मा नहीं रहे होंगे।

**शृङ्गी**- तो क्या थे ?

**विभा.**- अहो ! ये तपोनाशक लोग रहे होंगे। इसी प्रकार तपस्वी लोग भ्रष्ट हो जाते हैं, ब्रह्मचर्य की साधना में अनेक विघ्न पड़ते हैं। विषयसंसर्ग ही पतन का कारण होता है। बेटा ! संसार में पग-पग पर काँटे (विषयानुरक्तियाँ) हैं, क्षण-क्षण में अङ्गारों (विषयाऽवाप्ति) की वर्षा हो रही है, प्रत्येक दिशा में विषयों की आँधियाँ चल रही हैं, सन्मार्गगामी पुरुष को दानव ही नहीं अपितु देवता भी विचलित कर देते हैं, विरले धीरपुरुष उपद्रवों को जीत पाते हैं।

**सज्जनानिह विघ्नन्ति, देवदानवमानवाः।**
**विघ्नेष्वपि न सीदन्ति, ये जनास्ते हि सज्जनाः॥ 71॥**

वत्स ! इह कामरूपिणो जना विचरन्ति ते च कपटाश्चौरास्तापसान् पातयन्ति। त्वया साधु नाऽऽचरितम् यत्तैर्दत्तं भुक्तम्, आलपितम्, आलिङ्गितं च, नूनं न तैस्तापसैर्भवितव्यम्। त्वं प्रतारितः।

**शृङ्गी-** नूनं तात ! ते तापसाः यत्त्वया कथ्यते यादृशस्तादृशस्तेषां वेषः, न मे तैः किमपि छिन्नम्।

**विभा.-** वत्स! इतो दूरेऽस्त्येकं कङ्कवनम् तत्र राक्षसीसहितो नर्कुटो राक्षसो

---

**अन्वयः-** इह सज्जनान् देवदानवमानवाः विघ्नन्ति, (किन्तु) ये जनाः विघ्नेषु अपि न सीदन्ति, हि ते जनाः सज्जनाः भवन्तीति शेषः।

**व्याख्या-** इह=संसारे, सज्जनान्=साधुलोकान्, देवाश्च दानवाश्च मानवाश्चेति त्रिपदो द्वन्द्वः, सुरासुरनरा इत्यर्थः। विघ्नन्ति=भ्रशंयन्ति, किन्तु ये जनाः=धीरपुरुषाः, विघ्नेषु=प्रत्यूहेषु सत्स्वपि न सीदन्ति=न विचलन्ति, हि=वस्तुतः, ते जनाः=अविचलिताः नराः सज्जनाः= धीरपुरुषाः भवन्तीति शेषः। विशेषोक्तिः।

---

इस संसार में देव दानव और मानव सज्जनों के कार्य में विघ्न डालते रहते हैं, किन्तु जो लोग विघ्नों में भी विचलित नहीं होते वे लोग ही वास्तविक सज्जन (महात्मा) हैं।

वत्स ! यहाँ इच्छानुसार वेष धारण करने वाले धूर्तलोग विचरण करते रहते हैं, वे बेढङ्गे व्यवहारों से तापसों (महात्माओं) को तपस्या से भ्रष्ट करते रहते हैं। तुमने यह कार्य अच्छा नहीं किया जो उनका दिया हुआ खाया और उनके साथ बातचीत की तथा जो उनका आलिङ्गन स्वीकार किया। यह ध्रुव है कि वे महात्मा नहीं थे, तुम उनसे ठगे गये।

**शृङ्गी-** तात ! निश्चित ही वे महात्मा थे, क्योंकि आप जैसा वर्णन किया करते हैं, तदनुसार ही उनकी वेशभूषा थी। यदि वे महात्मा नहीं भी थे, तो भी उनसे हमारा कुछ भी नहीं बिगड़ा अर्थात् उनसे मेरे संयम में कोई विकार नहीं हुआ।

**विभा.-** बेटा ! यहाँ से थोड़ी दूरी पर कङ्कनामक एक वन है, उसमें राक्षसी के सहित नर्कुट नामक राक्षस रहता है कपटवेष बनाकर उन्होंने बहुत से महात्मा

वसति, कपटवेषाभ्यां ताभ्यां बहवस्तापसाः कवलीकृताः तावधुनापि क्षुधार्त्तौ भ्रमतः, अतो न मे सानिध्यं मुञ्च। कालान्तरे त्वम् निर्लेपतां भजस्व।

**सरला**- हता वयं नायमेकलं त्यक्ष्यति।

**चपला**- धैर्यं न मुञ्च, अवसरं प्रतिपालय।

**शृङ्गी**- तातपाद ! अहं सदैव तवान्तिके वत्स्यामि।

**विभा.**- एवं पतन्तं वीक्ष्य दुर्जनो हृष्यति-

**क्षीयमाणं नरं वीक्ष्य, मुहुर्हृष्यति दुर्जनः।**
**पश्य नन्दति वैशाखे, सदा वैशाखनन्दनः॥ 72॥**

---

**अन्वय**- क्षीयमाणं नरं वीक्ष्य दुर्जनः मुहुः हृष्यति वैशाखनन्दनः सदा वैशाखे नन्दति इति पश्य।

**व्याख्या**- क्षीयमाणम्=विनश्यन्तं परहानिमित्यर्थः, नरम् वीक्ष्य=विलोक्य, दुर्जनः खलः, मुहुः=बारम्बारम्, हृष्यति=प्रसीदति। वैशाखनन्दनः=गर्दभः, वैशाखमासे नन्दतीति वैशाखे घासस्याल्पतया चरन् गर्दभो यदा पृष्ठभागे पश्यति तदा घासाऽभावं वीक्ष्यं "मयैव सर्वो घासश्चरितः नान्यपशुभ्यश्चरितुमवशिष्टः, इतिभावनया स प्रसीदतीति वैशाखनन्दन इति सार्थक नाम, जनश्रुतिरेवेयं न तु यथार्थम्, पश्येति वाक्यार्थः कर्म। यथा वैशाखमासे घासाभावादन्यपशूनां क्षयं वीक्ष्य वैशाखनन्दनो गर्दभो नन्दति तथैव क्षयग्रस्तं नरं वीक्ष्यं दुर्जनोऽतीव प्रसीदतीति तात्पर्यम्। दृष्टान्तालङ्कारः।

---

खा डाले हैं, वे दोनों इस समय भी भूखे घूम रहे हैं अतः तुम मेरा साथ मत छोड़ना, भविष्य में निर्लेप (जल में पद्मपत्रवत्) तटस्थ रहो।

**सरला**- हा! मारे गये हम लोग, क्योंकि अब यह अकेले नहीं छोड़ेगा।

**चपला**- धैर्य मत छोड़ो, अवसर की प्रतीक्षा करो।

**शृङ्गी**- पितृपाद ! मैं सदैव ही आपके पास रहा करूँगा।

**विभा.**- हाँ ठीक है, क्योंकि चरित्रवान् आदमी का पतन होते देखकर दुर्जन बहुत प्रसन्न होते हैं।

सज्जन पुरुष का पतन होते हुये देखकर दुर्जन आदमी बहुत प्रसन्न होता है। इस क्रूरलीला को देखो कि घास के अभाव के कारण अन्य पशुओं को दुर्बल (क्षयग्रस्त) देखकर वैशाख में गधा बड़ा मस्त (प्रसन्न) रहता है।

**शृङ्गी-** अद्यप्रभृति नाहं तापसेष्वपि विश्वसिष्यामि।

**विभा.-** अङ्कुरं कृषक इवाहं त्वां पालयामीत्यतो मध्यान्हे ह्येव प्रत्यागतः। सम्प्रति क्रियतां शेषक्रिया।

**शृङ्गी-** सावधानोऽस्मि (इति कर्त्तव्ये व्यापृतः)

(ततः प्रविशति दण्डकमण्डलुधारी वटुकः)

**वटुकः-**(प्रणम्य) भगवन् ! राजन्यविजयानन्तरं मे गुरुचरणो भार्गवः किन्नरक्षेत्रे दीर्घसत्रमारभते, तदारम्भकाले भवदीयं दर्शनं प्रार्थयते, उक्तं च सहैवानेतुम्।

**विमला-** नमोऽङ्गसिद्धये।

**चपला-** यदिच्छामि तद्दैवमेव सम्पादयति।

**सरला-** यदि पुत्रं सहैव न नयेत्तदा सिद्धं नः समीहितम्।

**विभा.-** तपोमूर्त्तये रामाय द्रष्टुमहं स्वयमुत्कण्ठितोऽस्मि तत्पिता जमदग्निर्मेऽनन्य सखोऽभवत्। (विचिन्त्य) वत्स ! शृङ्गिन् ! अनतिक्रमणीया सिद्धजनानां श्रद्धारेखा,

---

**शृङ्गी-** तात ! आज से मैं तपस्वियों पर भी विश्वास नहीं करूँगा।

**विभा.-** मैंने बचपन से ही तुम्हारा ऐसा पालन पोषण किया, जैसा कि किसान पौधा का पालन पोषण करता है। इसीलिए तुम्हारी चिन्ता रहने के कारण मैं (कुश लेकर) दोपहर को ही लौट आया था। अब आश्रम के शेष कार्य पूरे करो।

**शृङ्गी-** अब मैं सावधान हूँ (इस प्रकार कार्यों में लग गये)

(तत्पश्चात् दण्डकमण्डल धारण किये हुये वटुक का प्रवेश होता है)

**वटुक-** (प्रणाम करके) भगवन् ! हमारे गुरुवर परशुराम जी हिमाचल के किन्नरक्षेत्र (किन्नौर जिला) में क्षत्रिय विजय के बाद एक दीर्घकालीन सत्र (यज्ञ) आरम्भ कर रहे हैं, इस अवसर पर वे आपका दर्शन (उपस्थिति) अवश्य चाहते हैं। आपको साथ ही लेने के लिये मुझे भेजा है।

**विमला-** अङ्गदेश की सफलता (सिद्धि) को प्रणाम करती हूँ।

**चपला-** जो मैं चाहती हूँ उसे दैव ही पूरा कर रहा है।

**सरला-** यदि विभाण्डक पुत्र को साथ न ले जायें तो काम बना हुआ समझो।

**विभा.-** वटुक ! तपोमूर्ति परशुराम का दर्शन करने के लिये मैं स्वयं ही उत्कण्ठित हूँ। उनके पिता जमदग्नि मरे घनिष्ठ मित्र थे, अतएव मैं उनकी (परशुराम की) प्रीतिरेखा का उल्लङ्घन नहीं कर सकता, मुझे अवश्य जाना चाहिये।

तदहं व्रजामि, ममोपदेशं स्मारं स्मारमाश्रम एव तप्यताम्। यद्यप्येकाकिनस्तव त्यागो न मे रोचते, तथापि कार्यानुरोधो मां तथा व्यवसाययति, दूरे तत्स्थानम्, अतो दशमे दिवसे वयं प्रतीक्षणीयाः।

(इति पुत्रं परामृज्य तन्मस्तकं जिघ्रति)

शृङ्गी- तातपाद ! न मे सान्निध्यं मुञ्चेति भवतोदीरितम्, अतोऽहं भवता सह सानन्दं व्रजामि।

विभा.- वत्स ! स्वकथनमवैमि, किन्तु परिस्थितयो बाधन्ते।

विमला- अनुकूलमेवमस्य कथनम्।

शृङ्गी- कथमेकाकी स्थास्यामि ?

विभा.- वत्स ! तवैकाकित्वं मा दुनोति किन्तु तपश्चर्यभङ्गभिया त्वं त्यक्ष्यसे (इति वाष्पं विसृजति)।

---

(सोचकर) वत्स शृङ्गी ! सिद्धपुरुषों की श्रद्धाभरी आज्ञा का उल्लंघन नहीं करना चाहिए। इसलिए मैं अभी वहाँ जा ही रहा हूँ। तुम मेरे उपदेश का बार-बार ध्यान रखकर आश्रम में ही नियम का पालन करना, यद्यपि तुमको यहाँ अकेला छोड़ना मुझे ठीक नहीं लग रहा है, फिर भी कर्त्तव्य निष्ठा (कार्यपरिस्थिति) ही वैसा करने के लिए मुझे विवश कर रही है। परशुराम का आश्रम यहाँ से बहुत दूर है, इसलिये वहाँ से दसवें दिन यहाँ आने की प्रतीक्षा करना, अर्थात् मैं आज से दसवें दिन यहाँ लौट आऊँगा।

(इस प्रकार पुत्र को थपथपाकर मस्तक सूँघता है)

शृङ्गी- पिताजी ! आपने अभी कहा था कि तुम मेरा साथ मत छोड़ना, इसलिये मैं भी आपके साथ आनन्दपूर्वक चल रहा हूँ।

विभा.- वत्स ! मैं अपने कहे हुये वाक्य को समझ रहा हूँ किन्तु परिस्थितियाँ बाधित कर रही हैं अर्थात् परिस्थितिवश कभी-कभी स्वकथन का भी उल्लङ्घन करना पड़ता है।

विमला- इनका यह कथन तो हमारे अनुकूल ही है।

शृङ्गी- मैं अकेला कैसे रह सकूँगा ?

विभा.- वत्स ! तुम्हारा अकेलापन मुझे बहुत खटकता है किन्तु बाहर जाने से ब्रह्मचर्य व्रत भङ्ग हो जाता है अतएव मैं अकेला छोड़ रहा हूँ। (इस प्रकार अश्रुपात करता है)।

**चपला-** अहो! वीतरागस्य सन्तानानुरागः।

**वटुकः-** त्वर्यतां भगवन् ! मार्गेऽन्येऽपि तापसाः प्रतीक्षन्ते।

**विभा.-** (कमण्डलुदण्डमादाय) शृङ्गिन्! इहैव स्थेयम् अधिकाधिकं पक्षान्तं दिनमवश्यं प्रतीक्षणीयम्।

**शृङ्गी-** कथमहमेकाकी वत्स्यामि अतो मामपि नय।

**विभा.-** सद्य एवागच्छामि मा दुखं गाः।

**शृङ्गी-** रात्रिं दिवं मार्गं द्रक्ष्यामि।

**विभा.-** तव स्नेहं जाने विरम।

(इति साम्रेडं ललाटमाघ्राय वटुना सह निष्क्रान्तः)

**शृङ्गी-** (परिक्रम्य) गतो मे तातः, तातशून्येऽरण्ये कथं मनोविनोदं कुर्याम-

एकेन तातसहितेन मया कदाचित्,
ज्ञातं नहीति यदहं निवसाम्यरण्ये।

---

**चपला-** अहो ! इस त्यागी का सन्तान में कितना अनुराग है

**वटुक-** भगवन्! शीघ्रता कीजिये। मध्यमार्ग में और भी महात्मा प्रतीक्षा कर रहे होंगे।

**विभा.-** (दण्ड कमण्डल लेकर) शृङ्गी ! यहीं पर रहना, अधिक से अधिक एक पक्ष तक (पन्द्रहवें दिन में) मेरी प्रतीक्षा अवश्य करना।

**शृङ्गी-** मैं यहाँ पर अकेले कैसे रुक सकूँगा? अतः मुझे भी साथ ले चलो।

**विभा.-** दुःख मत करो। मैं अतिशीघ्र लौटूँगा।

**शृङ्गी-** पिताजी ! मैं दिन रात आपका मार्ग देखता रहूँगा।

**विभा.-** बेटा ! शान्त रहो ! तुम्हारे स्नेह को जानता हूँ।

(इस प्रकार पुत्र का बारबार मस्तक सूँघकर वटुक के साथ निकल गया)

**शृङ्गी-** (इधर-उधर घूमकर) मेरे पिताजी चले गये। पिताजी से शून्य इस वन में अकेला मैं कैसे जी बहलाऊँ।

पिताजी के साथ रहते हुये मुझे ऐसा कभी भी अनुभव नहीं हुआ कि मैं निर्जन वन में निवास करता हूँ, आज पिताजी के बिना तो ऐसा लगता है कि मानो आग

**तातं विनाद्यहृदये बहिरप्यसीमम्,**
**जानाम्यरण्ययुगलं ज्वलनावलीढम्॥ 73॥**

**चपला-** आर्य ! किं प्रवेष्टव्यम्?

**नायकः-** धिक्! चपलाचापल्यम् वृक्षमारुह्य दिगवलोकनं कृत्वा सङ्केतेन सूचयिष्यामि।

(इति वृक्षमारोहति)

**सरला-** सखि ! किं गत्वापि निवर्तिष्यते?

**विमला-** (श्रुत्वा) विरमतं युवाम्, काकारवेण वर्जयत्यावुत्तः।

---

**अन्वयः-** तातसहितेन एकेन मया कदाचित् इति नहि ज्ञातं यत् अहम् अरण्ये निवसामि, अद्य तातं बिना हृदये बहिः अपि ज्वलनावलीढम् असीमं अरण्ययुगलम् जानामि।

**व्याख्या-** तात सहितेन=पितृसान्निध्येन, एकेन=केवलेन, मया=शृङ्गिणा, कदाचित्=कदापि, इति=एवम्, नहि=नैव, ज्ञातम्=अनुभूतम्, यत=हि, अहम्=शृङ्गी, अरण्ये=रन्तुं योग्यं रण्यम् न रण्यमरण्यं तस्मिन्निति मयूरव्यंसकादित्त्वात्तमासः, निर्जने=घोरसत्त्वसेविते, निवसामि= तिष्ठामि, अद्य=सम्प्रति, तातम्=पितरम्, विना=अभावे, हृदये=चित्ते, बहिः= चित्तादपि बहिरङ्गस्थाने, ज्वलनावलीढम्=पावकालिङ्गिनं जाज्वल्यमानम्, असीमम्=निरवधिकम्, अरण्ययुगलम्=वनद्वयम्, जानामि=अनुभवामि। उत्प्रेक्षालङ्कारः, वसन्ततिलकावृत्तम्।

---

से जलता हुआ एक वन हृदय में ओर दूसरा वन बाहर जल रहा हो। अर्थात् अन्दर बाहर सर्वत्र ही शून्यता एवं सन्ताप का अनुभव हो रहा है।

**चपला-** आर्य ! क्या आश्रम में प्रवेश करना चाहिये?

**नायक-** चपला की चपलता को धिक्कार है। मैं पेड़ पर चढ़कर चारों ओर की टोह लेकर संकेत से तुम्हें सूचित करूँगा।

(इस प्रकार वृक्ष पर चढ़ता है)

**सरला-** सखि ! क्या विभाण्डक जाकर भी लौट आयेंगे?

**विमला-** (सुनकर) रुको दोनों, नायक जी काक ध्वनि से प्रवेश करना रोकते हैं।

**विभा.**- (सहसा प्रविश्य) वत्स ! वत्स ! श्रूयताम्।

**शृङ्गी**- (सहर्षम्) किं न यास्यति तात् ?

**विभा.**- कथं न यास्यामि ! किन्त्वरणिमन्थनं विस्मृतम्, तत् यज्ञशालातो दीयताम्।

**शृङ्गी**- (आनीय समर्पयन्) तात ! भवता विनाहं बहुवारमेकाकी स्थितः इदानीं भयं लगति, चित्तं च भ्रमति, कर्षतीव मां कश्चित्प्राणी, तदहं किं न मिलिष्यामि?

**चपला**- सखि ! भस्मप्रभावोऽयम्।

**विमला**- मोदकासवचमत्कारं च विद्धि।

**विभा.**- (अरणिमादाय) वत्स ! वियोगो नानाविचारानुद्भावयति, सकुशलं त्वां द्रक्ष्यामि।

**शृङ्गी**- तात! मामपि नयतु।

**विभा.**- वत्स ! ब्रह्मचर्यसीमोल्लङ्घनं नोचितम् पुनश्च त्वं नाहूतः।

---

**विभा.**- (अकस्मात् प्रवेश होकर) वत्स ! वत्स !! वत्स !!!

**शृङ्गी**- (प्रसन्न होकर) पिताजी ! क्या नहीं जायेंगे ?

**विभा.**- क्यों नहीं जाऊँगा, किन्तु मैं अरणिमन्थन (लकड़ी रगड़कर आग निकालने का पात्र) यहीं भूल गया, अतः यज्ञशाला से लाकर मुझे दो।

**शृङ्गी**- (लाकर देते हुये) पिताजी ! आपके बिना मैं बहुतबार अकेला रहा किन्तु इस बार मुझे भय लग रहा है, चित्त भी चक्कर काट (उच्चाटन कर) रहा है। तो क्या मैं इस बार आपको नहीं मिल सकूँगा ?

**चपला**- सखि ! यह भस्म का प्रभाव है।

**विमला**- लड्डू खिलाने और आसव पिलाने का भी तो चमत्कार समझना चाहिये।

**विभा.**- (अरणिपात्र लेकर) बेटा ! वियोग नाना विचारों (संकल्प विकल्पों) को उत्पन्न करता है। मैं लौटकर तुम्हें सकुशल देखूँगा।

**शृङ्गी**- पिताजी ! मुझे भी लेते चलिये।

**विभा.**- वत्स ! ब्रह्मचर्य व्रत की सीमा (बाहर न जाने की मर्यादा) का उल्लङ्घन करना उचित नहीं है। दूसरी बात यह भी है कि वहाँ से तुम्हें आमन्त्रित नहीं किया गया है।

**शृङ्गी**- तात ! नाहमेकाकी स्थातुमुत्सहे।

**विभा.**- वत्स ! धैर्यं विधान, दैन्यं मा गाः, न त्त्वं सर्वथा बालः, तारुण्यं चातुर्यं च विन्दसि। नह्याजन्म कस्यापि पितरौ सह स्तः।

(इति बारम्बारं मस्तकमाघ्राय निष्क्रान्तः)

**चपला**- प्रवेशयोग्योऽयमवसरो हस्तच्युतो न पुनर्मिलति-

**नाऽऽयान्ति यौवनधनानि विनिर्गतानि,**
**वृक्षोज्झितानि न फलानि पुनर्लगन्ति।**
**भूयो भवन्ति हरिता न हि शुष्कधानाः।**
**हस्तच्युता अवसरा न पुनर्मिलन्ति॥ 74॥**

(इति प्रवेष्टुमिच्छति)

---

**अन्वय**- विनिर्गतानि यौवनधनानि न आयान्ति, वृक्षोज्झितानि फलानि पुनः न लगन्ति। शुष्कधानाः भूयः हरिता नहि भवन्ति, हस्तच्युताः अवसराः पुनः न मिलन्ति।

**व्याख्या**- विनिर्गतानि=अपगतानि व्यतीतानीत्यर्थः। यौवनधनानि=यौवनानि=तारुण्यान्येव धनानि=वित्तानीति रूपकम् न आयान्ति=न निवर्तन्ते। वृक्षोज्झितानि=विटपान्निपतितानि तत्पुरुषसमासः। फलानि=आम्रादीनि, पुनः=भूय, न लगन्ति=न शाखासु युज्यन्ते। शुष्काश्चधाना इति कर्मधारयः, शुष्काः=नीरसाः छिन्ना इत्यर्थः, धानाः=व्रीहयः, भूयः= पुनः, हरिताः=उज्जीविताः, नहि भवन्ति=न जायन्ते, हस्तच्युताः=करनिर्गताः, अवसराः=मूल्यवन्तः समयाः, पुनः न मिलन्ति=न लभ्यन्ते, वसन्त-तिलकावृत्तम्, दृष्टान्तोऽलङ्कारः।

---

**शृङ्गी**- अकेले रहने हेतु मुझमें बिल्कुल उत्साह नहीं है।

**विभा.**- वत्स ! धैर्य बाँधों। इतने (पराश्रित) न हो। तुम बहुत छोटे बच्चे नहीं हो, तरुणता और चतुरता को प्राप्त कर रहे हो जन्म भर तो किसी सन्तान के साथ माता पिता नहीं बैठे रहते।

(इस प्रकार बार-बार मस्तक सूँघकर निकल गया)

**चपला**- प्रवेश करने योग्य यह अवसर है, हाथ से निकल जाने पर फिर नहीं मिलता-

यौवनरूपी धन समाप्त हो जाने पर फिर वापस नहीं आता (बीता हुआ यौवन फिर नहीं लौटता) वृक्ष (डाली) से टूटे हुये फल पुनः वृक्ष में नहीं जुड़ पाते, एवम् सूखे (काटे) हुये धान फिर हरे नहीं होते, इसी प्रकार से निकले हुये अवसर फिर नहीं मिलते।

**विमला-** नहि नहि सखि ! तुभ्यं शपे, सङ्केतमन्तरा मा प्रविश।

**चपला-** न व्याहन्मि ते वचनम् (इति विरमति)

**सरला-** (श्रुत्वा) अहो सखि ! अस्ति भयम् काकारवेण प्रवेशं निषेधत्यार्यः।

**चपला-** विमले ! सार्थकं ते शपनम्।

**विभा. -** (पुनः प्रविश्य) वत्स ! वत्स ! इह श्रूयताम्।

**शृङ्गी-** (उपसृत्य) किं न गमिष्यति तात ?

**विभा.-** कथं न गमिष्यामि किन्तु त्वां चिन्तयतो मे पादौ नाग्रेसरतः नान्तरात्मापि तुष्यति ततोऽहं दूरात्प्रत्यागतः।

**चपला-** अहो! मृग्यपत्ये वनवासिनो ममत्वम्।

**शृङ्गी-** तत् किमहमपि सहगामी स्याम ?

---

(इस प्रकार प्रवेश करना चाहती है)

**विमला-** सखी ! नहीं, नहीं ! तुम्हें शपथ खिलाती हूँ संकेत के बिना प्रवेश मत करो।

**चपला-** अच्छा तुम्हारी बात काटती नहीं हूँ (इस प्रकार रुक जाती है)।

**सरला-** (सुनकर) अहो ! सखि ! आशङ्का है क्योंकि काकशब्द बोल कर आर्य प्रवेश करने के लिये मना कर रहे हैं।

**चपला-** विमले ! तेरा शपथ खिलाना सार्थक हुआ।

**विभा.-** (पुनः प्रवेश करके) वत्स ! वत्स! यहाँ आकर सुनो।

**शृङ्गी-** (पास जाकर) क्या पिताजी ! आप नहीं जायेंगे ?

**विभा.-** क्यों नहीं जाऊँगा किन्तु तुम्हारी चिन्ता के कारण पैर आगे नहीं बढ़ रहे थे, और मेरी अन्तरात्मा भी बैचेन हो रही थी, इसीलिये मैं दूर से लौट कर आया।

**चपला-** अहो ! मृगी की सन्तान में इस वनवासी (त्यागी) का (कितना) ममत्व ?

**शृङ्गी-** तब क्या मैं भी आपके साथ चलूँ।

विभा.- त्वामेवानेतुं प्रतिनिवृत्तः, तस्मादुद्यतो भूत्वाऽऽगच्छ।

शृङ्गी- (हर्षोत्फुल्लः) क्षणं तिष्ठतु तात ! कौपीनादिकमाददे (इति विचिनोति)।

विमला- इयमस्माकमग्निपरीक्षा। तत्तथा कर्त्तव्यं यथा रोमपादस्य कार्यहानिर्न स्यात् अस्माकमपकीर्तिश्च मा भूत्।

सरला- कथ्यतां सख्युपायः।

विमला- वृक्षारूढ़ आवुत्तस्तु यथामति करिष्यति स्वयमेव, सरले! अपशकुनं कुर्वः आश्वेवैकस्थाः स्याम। शास्त्रदासा भवन्ति साधव अपशकुनं मत्वा पुत्रं नेष्यति।

उभौ- साधु विमले साधु। (इति तथा कर्तुं व्यवसिताः)

शृङ्गी- (वल्कलादिकमादाय) तात ! सज्जितोऽहं चलामि (इति स्वयं छिक्कुरुते)।

---

विभा.- तुम्हीं को लेने के लिये मैं लौटा हूँ, इसलिये तैयार होकर (जल्दी) आ जाओ।

शृङ्गी- (हर्ष से फूलकर) पिताजी ! क्षणभर रुक जाइये, मैं कौपीन आदि ले लेता हूँ। (इस प्रकार कौपीनादि ढूँढता है)।

विमला- इस समय पर यह हमारी अग्नि परीक्षा है, इसलिये ऐसा करो जिससे रोमपाद का प्रयोजन नष्ट न हो और हमारी अपकीर्ति भी न हो सके।

सरला- हे सखि ! तो बताइये कोई उपाय।

विमला- वृक्ष पर स्थित नायक तो अपनी इच्छा के अनुसार जैसा समझेंगे वैसा स्वयं ही करेंगे। सरले ! तुम हल्के शरीर वाली हो इसलिए वनविडाली का वेष धारण कर दोनों के बीच का रास्ता काट दो, हम दोनों शृगाली के स्वर में रुदन करके अमङ्गल दर्शायेंगे। तुरन्त ही इकट्ठे भी हो जायेंगे, क्योंकि महात्मा लोग शास्त्र के दास होते हैं। अपशकुन मानकर पुत्र को नहीं ले जायेगा।

दोनों- धन्य है विमले तुझे धन्य है।

(इस प्रकार यथोक्त करने में तत्पर हो गई)

शृङ्गी- (बल्कल आदि को लेकर) पिताजी ! मैं तैयार हो गया और अब चलता हूँ।

(स्वयं छींकता है)

**विभा.**- विरम वत्स ! प्रस्थानारम्भे यत्त्वया छिक्कृतं तस्मादनर्थकारिणीयं तव यात्रा।

**शृङ्गी**- भवतु किमनेन।

**विभा.**- अहो! पुत्रक पश्य! पश्य! तव मार्गं खण्डयन्ती रुदती वनविडाली निर्गच्छति।

**शृङ्गी**- धिक्छ्यामां मार्जारीम्, स्यात् किमनया?

**विभा.**- (श्रुत्वा) वत्स! श्रूयताम् एता शृगाल्यो रुदन्ति, वृक्षोपरि काकोऽपि रटति।

**शृङ्गी**- शृणोमि तात ! किमेभिः छिक्कादिभिः ?

**विभा.**- एतान्यपशकुनानि ते प्रस्थानं वर्जयन्ति, तन्न त्वया प्रस्थातव्यम्।

**शृङ्गी**- एभिर्नैव प्रयोजनम्-

**विडाल्यो वा शृगाल्यो वा, छिक्काकाकादयस्तथा।**
**किं करिष्यन्ति मे सर्वे, यावन्मे तव सन्निधिः॥ 75॥**

---

**विभा.**- वत्स ! मत चलो ! तुमने अपनी यात्रा के आरम्भ से स्वयं छींक दिया है, तुम्हारी यात्रा अनर्थकारिणी होगी।

**शृङ्गी**- होगा क्या इससे ?

**विभा.**- अहो पुत्र ! देखो ! देखो ! तुम्हारा मार्ग काटती ओर रोती हुई बन बिल्ली, निकल रही है।

**शृङ्गी**- अरे ! इस काली बिल्ली को धिक्कार है। इससे भी क्या होगा ?

**विभा.**- (सुनकर) बेटा ! सुनो ये शृगालियाँ भी रो रहीं हैं और पेड़ पर (शिर पर) कौवा भी बार बार रट रहा है।

**शृङ्गी**- सुन रहा हूँ पिताजी ! ये छींक इत्यादि कुछ नहीं बिगाड़ सकते।

**विभा.**- वत्स ! ये अपशकुन तुम्हारी यात्रा को मना कर रहे हैं। इसलिये तुम मत चलो।

**शृङ्गी**- पिताजी ! इनसे कोई प्रयोजन नहीं है-

पिताजी! चाहे बिल्लियाँ हों, चाहे शृगालियाँ (लोमड़ियाँ) हों, और चाहे छींके हों अथवा काक आदि रटते हों, तब तक वे सब मेरा क्या कर सकते हैं जब तक आप मेरे पास हैं। अर्थात् सिद्ध पुरुष के पास रहने वाले का अपशकुनादि कुछ भी नहीं बिगाड़ सकते।

**विभा.**- नहि, नहि वत्स ! अपशकुनान्यनृतानि न भवन्ति। शास्त्रसिद्धान्त-ममानवा अपि न ठुक्कुर्वन्ति, अतो यात्रातो विरम।

**शृङ्गी**- तात! उत्साहो मां प्रेरयति कुत्रचिद्गन्तुम्।

**विभा.**- एवं ! (इति चिन्तयति)।

**विमला**- वराहवेषैर्मार्गः खण्डनीयः (इति तथा कुर्वन्ति)।

**विभा.**- वत्स ! पश्य! पश्य! घुर्घुरायमाणा एते कोला मार्गं खण्डयन्तस्तेऽग्रतो धावन्ति, तस्मान्ममाज्ञया च निवर्तस्व।

(नेपथ्ये)

---

**अन्वयः**- यावत् मे तव सन्निधिः (तावत्) विडाल्यः वा शृगाल्यः वा तथा छिक्काकाकादयः सर्वे मे किं करिष्यन्ति ?

**व्याख्या**-यावत्=यावत्कालम्, मे=मम शृङ्गिणः, तव=भवतः, सिद्धपुरुष-विभाण्डकस्येत्यर्थः। सन्निधिः=सामीप्यम्, (तावत्) विडाल्यः=मार्जार्यः, वा=अथवा, शृगाल्यः=शिवाः वा, तथा= तेनैव प्रकारेण, छिक्काकाकादयः=क्षुतवायसादयः, सर्वे=अपशकुनहेतवः, मे=शृङ्गिणः, किं करिष्यन्ति न किमपीत्यर्थापत्तिः। अर्थात् सिद्धपुरुषस्य सन्निधिप्रभावेणापशकुनानि नाऽनिष्टं कर्तुं शक्नुवन्तीति तात्पर्यम्।

---

**विभा.**- वत्स ! नहीं-नहीं, अपशकुन मिथ्या (निष्फल) नहीं जाते शास्त्र के सिद्धान्त को अमानव अर्थात् दानव भी नहीं ठुकराते, अतएव अब तुम यात्रा से विरत हो जाओ।

**शृङ्गी**- तात ! मानसिक उत्साह मुझे यात्रा हेतु (कहीं भी जाने के लिये) प्रेरित कर रहा है।

**विभा.**- ऐसा है ? (इस प्रकार सोचते हैं)।

**विमला**- शूकरवेष बनाकर रास्ता काटना चाहिये (वैसा ही करने लगती हैं)।

**विभा.**- वत्स ! देखो देखो ! घुर्घुराते हुये ये शूकर तुम्हारे मार्ग को खण्डित कर आगे से दौड़ रहे हैं इस अपशकुन के कारण तथा मेरी आज्ञा भी मानकर लौट जाओ।

(नेपथ्य में)

वयं दूरं गमिष्यामो, मार्गश्चापि नतोन्नतः।
स्वीकृत्यापि गुरूक्तं मे, कथं ब्रह्मन् विलम्बते॥ 76॥

**विभा.**- (श्रुत्वा) अहो ! भार्गवशिष्यो मामाकारयति, अतः परं स्थातुं न शक्नोमि त्वं ममाज्ञया निवर्तस्व (इति हस्तेन निवारयति)।

**शृङ्गी**- एष तात! तवाज्ञया निवर्ते (इति प्रणमति)

**विभा.**- शुभं भूयात्। (इति पुत्रं बारम्बारं पश्यन्निर्गतः)

**नायकः**- (वृक्षादवतीर्य) विमले ! यूयं तावदिहैव तिष्ठत, अहं प्रत्येतुं विभाण्डकमनुसरामि स्तोकम् (इति निष्क्रान्तः)।

---

**अन्वयः**- हे ब्रह्मन् ! वयं दूरं गमिष्यामः, मार्गः चापि नतोन्नतः, मे गुरूक्तं स्वीकृत्य अपि (भवान्) कथं विलम्बते ?

**व्याख्या**- हे ब्रह्मन्! हे भगवन् विभाण्डक! वयम्=न केवलमावामन्येऽपि साधव इति बहुवचनम्, दूरम्= विप्रकृष्टदेशम्, गमिष्यामः=यास्यामः, मार्गः=अध्वा, चापि=पुनः नतोन्नतः= उच्चावचः अस्तीति शेषः। मे=वटुकस्य, गुरूक्तम्=परशुरामाऽऽमन्त्रणम्, स्वीकृत्य=उररीकृत्य अपि, भवान् कथम्=कस्माद्धेतो; विलम्बते=विलम्बं करोतीत्याक्षेपोक्तिः। मे गुरूक्तमित्यत्र देवदत्तस्य गुरुकुलमितिवत्पदार्थान्वयः। उक्तं च-ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वय इति।

---

हे ब्रह्मन् ! हम लोग बहुत दूर तक जायेंगे और (पर्वत होने के कारण) मार्ग भी बहुत ऊँचा नीचा (चढ़ाई उतराई वाला) है। तथा आपने मेरे गुरु परशुराम का आमन्त्रण भी स्वीकार कर लिया है फिर आप विलम्ब क्यों कर रहे हैं ?

**विभा.**- (सुनकर) अरे ! परशुराम का शिष्य (वटुक) मुझे पुकार रहा है अब नहीं ठहर सकता हूँ, तुम मेरी आज्ञा से लौट जाओ। (इस प्रकार हाथ हिलाकर लौटाता है)।

**शृङ्गी**- हे तात ! यह मैं आपकी आज्ञा से लौट रहा हूँ (इस प्रकार प्रणाम करता है)।

**विभा.**- कल्याण हो ! (आशीर्वाद देकर पुत्र को बार-बार देखता हुआ निकल गया)।

**नायक**- (वृक्ष से उतर कर) विमले ! तुम लोग तब तक कुञ्ज में ही ठहरो, मैं विश्वास के लिये अर्थात् सर्वथा गये हैं या लौट रहे हैं यह जानने हेतु विभाण्डक का थोड़ी दूर तक पीछा करता हूँ (इस प्रकार निकल गया)।

**शृङ्गी-** (निवर्त्य) गतो मे तातः। बलवती भवितव्यता-

**मनसा कर्मणा वाचा तां, वन्दे भवितव्यताम्।**
**या वियोगं करोत्याशु, प्राणिनामप्यनिच्छताम्॥ 77॥**

(पुनः-पुनः पर्यटन्)

**जीर्णं शीर्णं लगति परितः काननं जीवनं मे,**
**दत्त्वा भीतिं तुदति सुखदोऽप्याश्रमो मामिदानीम्।**
**धावं-धावं विधुरहृदयं सर्वधैर्यं धुनोति,**
**नाहं जाने गरलममृतं किञ्च वान्यत्पिवामि॥ 78॥**

---

**अन्वयः-** या अनिच्छताम् अपि प्राणिनाम् आशुवियोगं करोति, तां भवितव्यतां मनसा कर्मणा वाचा वन्दे।

**व्याख्या-** या=भवितव्यता, अनिच्छताम्=अनभिलषताम्, अपि, किमिच्छताम् प्राणिनाम्=जीवानाम् पितापुत्राणामित्यर्थः। आशु=शीघ्रमेव, वियोगम्=पार्थक्यम्, करोति=विदधाति, ताम्=शक्तिशालिनीम्, भवितव्यताम्=भविष्णुताम्, मनसा=चेतसा, कर्मणा=क्रियया, वाचा=वाण्या च, वन्दे=नमामि अर्थात् अनिच्छतोरपि पितापुत्रयोः (शृङ्गिविभाण्डकयोः) वियोगकारिणी भवितव्यता प्रशंसायोग्या।

**अन्वयः-** काननं मे जीवनं (च) परितः जीर्णं शीर्णं लगति, सुखदः अपि आश्रमः इदानीं मां भीतिं दत्त्वा तुदति। धावं-धावं विधुरहृदयं सर्वधैर्यं धुनोति, अहं गरलं वा अमृतं वा किञ्च अन्यत् पिवामि (इति) न जाने।

**व्याख्या-** काननम्=वनम्, मे=शृङ्गिणः, जीवनम्=जीवात्मा (च) परितः=सर्वतः, जीर्णम्=जर्जरम्, शीर्णम्=खण्डितम् विदीर्णमिति यावत्, लगति=प्रतीयते, सुखदः= आनन्ददायकः, अपि= विरोधे, आश्रमः=तपस्थली, इदानीम्=अधुना, माम्=शृङ्गिणम्, दुःखोक्तौ चतुर्थ्यर्थे द्वितीया यद्वा तुदतेः कर्मपदं मामिति। भीतिम्=भयम्, दत्त्वा=दर्शयित्वा, (माम्) तुदति=पीडयति, धावंधावम्=धावुधातोःणमुलन्ते वीप्सार्थे च द्वित्वम् धावित्वा धावित्वेत्यर्थः। विधुरहृदयम्= वियुक्तचित्तम्, सर्वधैर्यम्=समस्तधीरताम्, धुनोति= उच्चाटयति, अहम्=शृङ्गी, गरलम्= हालाहलम्, अमृतम्=पीयूषं, वा=अथवा अन्यत् वा किञ्च=अदृष्टाऽश्रुतं वा, पिवामि= अनुभवामि, दुःखं वा सुखं वान्यद्वेति सन्देहोत्थातिशयोक्तिः इति न जाने= तत्त्वतो न वेदिम्। मन्दाक्रान्तावृत्तम्।

---

**शृङ्गी-** (लौटकर) मेरे पिताजी चले गये, भावी (होनी) बड़ी प्रबल होती है- जो न चाहते हुये प्राणियों को भी परस्पर में वियुक्त (अलग) कर देती है, मैं

अधुनाहं श्मशानसदृशेऽस्मिन्नाश्रमे न खादिष्यामि, न पास्यामि, न जागरिष्यामि, न निद्रास्यामि, न स्थास्यामि, न विहरिष्यामि, नापि किमपि करिष्यामि (विचिन्त्य) अथवा कौशिकीप्रवाहेऽहर्निशम् आकण्ठमग्नस्तिष्ठामि। ततश्चागतस्तातोऽन्विष्य मां वक्ष्यति, भो वत्स ! किमिदं त्वया क्रियत इति, ततः मां विसृज्य कथं भवान् प्रयातः ? इति प्रत्युत्तरिष्यामि, पुनश्च न कदाचिदपि मामेकाकिनं त्यक्ष्यति।

चपला- पश्य सखि ! पितापुत्रयोः स्नेहबन्धनम्।

विमला- पश्यामि सखि ! विरक्तेष्वनुरक्तिम्।

शृङ्गी- (पर्यटन्) दूरं निर्गतः स्यात् तात अन्यथा पलाय्य सहगामी स्याम। स न प्राप्यते। अथवा वृक्षमारूह्यापि न तं पश्यामि (इत्यारोढुमिच्छति)।

---

उस भवितव्यता को मनसा वाचा और कर्मणा नमस्कार करता हूँ, अर्थात् इसी ने मुझे पिताजी से अलग कर दिया।

(मञ्च पर घूमते हुये)

आज यह वन और मेरा जीवन दोनों ही जीर्णशीर्ण (टूटे-फूटे) लग रहे हैं, आनन्द देने वाला यह आश्रम भी भयभीत कर मुझे इस समय बहुत दुःख दे रहा है। पिताजी से बिछुड़ा यह हृदय मचल कर मेरे सारे धैर्य को हिला (उखाड़) रहा है। इस स्थिति में मुझे यह पता नहीं लग रहा है कि मैं विष पी रहा हूँ या कुछ और पी रहा हूँ।

अब मैं श्मशान तुल्य इस आश्रम में रहता हुआ न कुछ खाऊँगा, न पीऊँगा और न जगूँगा, न सोऊँगा तथा न ठहरूँगा न विचरण करूँगा एवम् मैं कुछ भी नहीं करूँगा (सोचकर) अथवा कौशिकी नदी की धारा में कण्ठ तक जलमग्न होकर दिन रात खड़ा रहूँगा। तत्पश्चात् कभी लौटकर आये हुये पिताजी मुझे ढूँढकर कहेंगे, "अहो बेटा ! यह तुम क्या कर रहे हो ? तब मैं उत्तर दूँगा कि आप मुझे छोड़ कर क्यों चले गये ? ऐसा सुनकर फिर वे मुझे कभी अकेला नहीं छोड़ा करेंगे।

चपला- देखो सखि ! पिता पुत्र का कैसा स्नेह बन्धन है ?

विमला- सखि ! मैं देख रही हूँ कि विरक्तों में कैसी अनुरक्ति (आसक्ति) होती है।

शृङ्गी-(घूमते हुये) अब तो पिता जी दूर निकल गये होंगे नहीं तो दौड़कर उनका साथ पकड़ लेता, अर्थात् उनके साथ चल ही देता, अब वे मिल नहीं सकते। अथवा पेड़ पर चढ़कर पिताजी को देखता हूँ। (इस प्रकार पेड़ पर चढ़ता रहता है)

**विमला**- वृक्षमारूह्य नायकं द्रक्ष्यति?

**शृङ्गी**- (दृष्ट्वा) अहो भुजङ्ग ! भुजङ्ग!! नाऽऽरोहणीयम् धिक्! दैवम् वृक्षकाण्डे भुजङ्गो विहरति।

(इति चिन्तयन् पर्यटति)

**विमला**- सखि ! जनान् भीषयतुं वृक्षस्कन्धवेष्टितं सर्पकञ्चुकं भुजङ्गं मन्यमानः नारूढ़ः।

**चपला**- इदमेव नायकस्य चातुर्यम्।

(ततो लतोदरे प्रविशति देवशर्मणा सह नायकः)

**चर्यः**- कुतो भवान्? कुतो भवान्? (इति चरणस्पर्शं कुर्वन्ति)

**नायकः**- कथ्यतां गुरूवर्य ! रेवणात्समायातश्चम्पातो वा नृपेण प्रेषितः चम्पावासितां तु भवान् श्रद्धास्पदम्।

**देवः**- शृण्वन्तु सर्वे, दैवादेकदा मया भिक्षुकस्य नीरं चोरयित्वाऽपीयत्।

---

**विमला**- पेड़ पर चढ़कर तो नायक को देख लेगा?

**शृङ्गी**- अरे! सर्प है सर्प है। इस पेड़ पर नहीं चढ़ना चाहिये, धिक्कार है देव (भाग्य) को, वृक्ष के तना पर सर्प लहरा रहा है।

(इस प्रकार चिन्ता करते हुये घूमने लगे)

**विमला**- सखि ! लोगों को डराने के लिये कि कोई और व्यक्ति इस पेड़ पर न चढ़ सके, नायक ने वृक्ष स्कन्ध में सर्प की केंचुली लपेट दी, जिसको ये शृङ्गी सर्प मानकर (डरकर) पेड़ पर नहीं चढ़े।

**चपला**- यही तो नायक महोदय की चतुरता है।

(तत्पश्चात् लतामण्डप में देवशर्मा के साथ नायक का प्रवेश होता है)।

**चरियाँ**- आप कहाँ से आये? कहाँ से आये? (इस प्रकार देव के चरण स्पर्श करती हैं)।

**नायक**- कहिये गुरुदेव ! आप अपने रेवणग्राम से आ रहे हैं वा चम्पा राजधानी से राजा रोमपाद ने भेजा है, क्योंकि (अनुष्ठानों के माध्यम से आप चम्पावासियों के लिये श्रद्धाभाजन (पूजनीय) हैं ही।

**देव**- सभी लोग सुनिये। दुर्भाग्य के कारण मैंने एक बार एक भिखारी का पानी चुराकर पी लिया।

ध्वंसावशेषोऽभवदङ्गदेशो, यस्योग्रशापादनलोपमेयात्।
स जाजलिः शृङ्गिऋषेर्विवाहं, द्रष्टुं समायाति मुदाशुगत्या॥ 98॥

राजा- (श्रुतिमभिनीय) अहो ! पूजाद्रव्यम् कुत्र?

मन्त्री- (सन्मुखे संस्थाप्य) इदं देव?

(ततः प्रविशति विकीर्णजटो जाजलिः जराजीर्णः)

राजा- (पूजयित्वा)

तेजोराशिं तपःपूतं, शापानुग्रहयोःक्षमम्।
ज्ञानविद्यावयोवृद्धं, जाजलिं प्रणमाम्यहम्॥ 99॥

---

**अन्वयः**-यस्य अनलोपमेयात् उग्रशापात् अङ्गदेशः ध्वंसावशेषः अभवत्। सः जाजलिः शृङ्गिऋषेर्विवाहं द्रष्टुं मुदा आशुगत्या समायाति।

**व्याख्या**- यस्य=जाजलेः, अनलोपमेयात्=अग्नितुल्यात्, उग्रशापात्=प्रचण्डाक्रोशात्, अङ्गदेशः= अङ्गराज्यम्, ध्वंसावशेषः=भग्नावशिष्टः=अभूत्, सः=तपस्वी जाजलिः, शृङ्गिऋषेः=कर्मधारय समासे कृते "ऋत्यक्" इति सूत्रेण प्रकृति भावः। विवाहम्=पाणिग्रहणम्, द्रष्टुम्=वीक्षितुम्, मुदा=हर्षेण, आशुगत्या=द्रुतगत्या, समायाति=आगच्छति, उपमालङ्कारः।

---

जिनके द्वारा दिये गये अग्नितुल्य प्रचण्डशाप से यह अङ्गदेश ध्वंसावशेष (खंडहरमात्र) रह गया है, वे जाजलिमुनि, शृङ्गी का विवाहोत्सव देखने के लिये प्रसन्नतापूर्वक शीघ्र आ रहे हैं।

राजा- (सुनने का अभिनय करके) अहो ! पूजन सामग्री कहाँ है?

मन्त्री- (सामने रखकर) महाराज! यह है।

(तत्पश्चात् वृद्धावस्था से जर्जर फैली बिखरी हुई जटा वाले जाजलि मुनि का मञ्च पर प्रवेश होता है)

राजा- (पूजन करके) तेज की राशि और तपस्या करने से पवित्र तथा शाप वरदान देने में समर्थ एवम् ज्ञान विद्या और आयु में सबसे बड़े श्रीजाजलि मुनि को मैं प्रणाम करता हूँ।

(इस प्रकार राजा द्वारा प्रणाम करने के बाद सब प्रणाम करते हैं)

(इति राजानमनु सर्वे प्रणमन्ति)

**जाजलिः**–(उपविश्य) राजन् ! यदाहं नारङ्गवने विचरामि, तदानावृष्ट्या सह पलायमानो दुर्भिक्षो राक्षसो मे दृष्टिपथे पथिकायितः। "किमर्थं पलायसे रे ? इति मया पृष्टः स आह-चम्पानगर्यां सम्प्राप्तः विभाण्डकसुतः शान्तामुद्वहति अतस्तं देशं हित्वा सपरिजनोऽन्यत्र वत्स्यामि, सुभिक्षादयश्च मे विरोधिनस्तत्र प्रविष्टाः इति वृत्तं श्रुत्वा विवाहोत्सवं विलोकयितुमत्र समायातः"।

**सर्वे**- धन्याः वयम् ! सफलमस्माकं जीवनम्।

**धावकः** (प्रविश्य) देव ! वरवधूवेषेणोभौ देव्या सहागच्छतः।

(ततो वरवधू युगलेन सह सर्वे प्रविशन्ति)

---

**अन्वयः**-अहं तेजोराशिं तपःपूतं शापानुग्रहयोः क्षमं ज्ञानविद्यावयोवृद्धं जाजलिं प्रणमामि।

**व्याख्या**- अहम्=रोमपादः, तेजोराशिं =कान्तिपुञ्जम्, तपःपूतम्=तपस्यापवित्रम्, शापानुग्रहयोः= अनुग्रहावग्रहयोः, क्षमम्=समर्थम् शक्तमित्यर्थः। क्षमं शक्ते हिते त्रिष्वित्यमरः। ज्ञानविद्या-वयोवृद्धम्=ज्ञानं च विद्या च वयश्चेति द्वन्द्वः पश्चात् तत्पुरुषसमासः, विवेकशिक्षाऽऽयुष्य समृद्धम्। जाजलिम्=एतन्नामकं महर्षिम्, प्रणमामि=करशिरःसंयोगानुकूलं नमस्कारापरपर्यायवाचकं व्यापारं करोमि।

---

**जाजलि**- (बैठकर) राजन् ! जब मैं नारङ्गवन (ज्ञानपुर के एकनारंगी सन्तरा के वन में विचरण कर रहा था, तभी अनावृष्टि राक्षसी के साथ भागते हुये दुर्भिक्षनामक राक्षस को मैंने देखा। "अरे तू क्यों भाग रहा है ?" यह पूँछने पर उसने मुझसे कहा-चम्पानगरी में विभाण्डकपुत्र शृङ्गी पहुँच गये हैं, और वे शान्ता से विवाह कर रहे हैं, इसलिये उस देश (आन्ध्र प्रदेश) को छोड़कर अब मैं परिवार के सहित किसी अन्य देश में निवास करूँगा। अङ्गदेश में मेरे विरोधी सुभिक्षादि का प्रवेश भी हो गया है। इस प्रकार उस पिशाचराज से सुनकर मैं विवाहोत्सव देखने हेतु यहाँ आया हूँ।

**सब लोग**- आपके दर्शनों से हम और हमारे जीवन धन्य हो गये हैं।

**धावक**- (प्रवेश करके) महाराज ! वर और वधू वेष में सुसज्जित होकर दोनों (शान्ता शृङ्गी) महादेवी के साथ यहाँ आ रहे हैं।

(तत्पश्चात् वर वधू की जोड़ी के साथ सब प्रवेश करते हैं)

**पुरो.**- इत इतो वत्सौ ! सवेदियज्ञमण्डपं परिक्राम्यताम्।

(इति सर्वे परिक्राम्यन्ति)

**पुरो.**- विप्रैः सह पठति-

रुद्राऽऽदित्या ब्राह्मणाः लोकपालाः,
वेदा नद्यः सागराः भूधराश्च।
सिद्धा नागा भूचराः खेचराश्च,
सर्वे शान्ता मङ्गलं वो दिशन्तु॥ 100॥

---

**अन्वयः**- रुद्रादित्याः, ब्राह्मणाः, लोकपालाः, वेदाः, नद्यः, सागराः, भूधराः च। सिद्धाः, नागाः, भूचराः, खेचराः च सर्वे शान्ता वः मङ्गलं दिशन्तु।

**व्याख्या**- रुद्रादित्याः=रुद्राः एकादशसङ्ख्याकाः। तद्यथा-

अजैकपादहिर्ब्रघ्नो विरूपाक्षोऽथ रैवतः।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः।।
सावियश्च जयन्तश्च पिनाकी चापराजितः।
एते रुद्राः समाख्याता एकादश गणेश्वरः।।

—(इति शब्दकल्पद्रुमः)

आदित्याः द्वादशसंख्याकाः। तद्यथा-

धातामित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च।
भगो विवस्वान् पूषा च सविता दशमस्तथा।
एकादश तथा त्वष्टा विष्णुर्द्वादश उच्यते।।

—(इति महाभारतम्)

---

**पुरो.**- इधर, इधर से आईये। दोनों बेदी के सहित यज्ञमण्डप की परिक्रमा करो। (इस प्रकार सब परिक्रमा करने लगते हैं)

**पुरो.**- ब्राह्मणों के सहित आशीर्वाद पढ़ता है-

रुद्र, आदित्य, ब्राह्मण और लोकपाल तथा चारों वेद एवम् नदियाँ, इसी प्रकार सातों समुद्र और सातों कुलपर्वत तथा सिद्धगण एवम् भूचर और गगनचर सभी (जड़चेतन) प्रसन्न होकर आप लोगों को कल्याण प्रदान करें।

यहाँ पर शान्ता+मङ्गल दोनों पदों को मिलाकर पढ़ने से नाटक का नाम स्पष्ट हो जाता है।

गायिकाः- (प्रविश्य) गायन्ति-

सर्वे देवाः कुर्वन्तु, वत्से ते मङ्गलम्,
वृक्षास्तापं हरन्तु, वाता पूता वहन्तु।
रम्या शैला यच्छन्तु, वत्से ते...............॥ 101॥

---

ब्राह्मणाः=विप्राः, नवगुणसम्पन्नो ब्राह्मणो भवति यथा-

शमो दमस्तपः शौचं, क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं, ब्रह्मकर्म स्वभावजम्॥

—(श्रीमद्भगवद्गीता)

अथवा

ऋजुस्तपस्वी सन्तुष्टः, शुचिर्दान्तो जितेन्द्रियः।
दाता विद्वान् दयालुश्च, ब्राह्मणो नवभिर्गुणैः॥

लोकपालाः=चन्द्रर्कानलानिलेन्द्रवरुणकुवेरयमा इत्यष्टौ लोकपालाः।

वेदाः=चत्वारः, ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च।

नद्यः=गङ्गाद्याः, सागराः=सप्तसंख्यकाः, तद्यथा-लवणेक्षु-सुरा, घृत, दधिः, क्षीर, जल सागराः। भूधराः=सप्तकुलपर्वताः, तद्यथा सुमेरूः, मन्दरः, कैलासः, हिमाचलः निषधः, गन्धमादनः, रमणश्च। सिद्धाः=व्यासादयः, नागाः=फणापुच्छसहिताः मनुष्याकृतयः सर्पयोनिविशेषाः तद्यथा-

अनन्तं वासुकिं शेषं पद्मकम्बलमेव च।
तथा कर्कोटकं नाम नागमश्वतरं तथा।।
धृतराष्ट्रं शङ्खपालं कालाख्यं तक्षकं तथा।
पिङ्गलं च महानागं प्रणमामि मुहुर्मुहुः।।

भूचराः=स्थावरजङ्गमाः वृक्षमानवाद्याः, खेचराः=देवनक्षत्रखगादयः, खेचरन्तीति विग्रहः "चरेष्टः" इति सूत्रेण टप्रत्यये हलदन्तात्सप्तम्याः संज्ञायाम्, इति सप्तम्या अलुक्। सर्वे=रुद्रानारभ्य खेचरान् यावत् शान्ताः=प्रसन्नाः (भूत्वा) वः=युष्मभ्यम् (बहुवचनस्व-वस्नसौ) इति सूत्रेण युष्मभ्यमिति पदस्थाने वसादेशः। मङ्गलम्=भद्रम्, दिशन्तु=यच्छन्तु,आशीर्वचने लोट्। दिश् अति सर्जने धातुः। शान्तामङ्गलमिति एकश्रुतिपाठे (संहितापाठे) नाटकस्य नाम स्पष्टं भवति। अत्र शालिनीवृत्तम्। तल्लक्षणं यथा मात्तौ गौचेच्छालिनी वेदलोकैः।

---

गायिका- (प्रवेश कर) गाती है-

हे वत्से ! शान्ता ! सभी देवता तुम्हें मङ्गल प्रदान करें। सारी वनस्पतियाँ

लक्ष्मीर्वाणी पुनातु, चन्द्रः सूर्यश्च पातु।
गौरी गङ्गा ददातु, वत्से ते॥ 102॥

सर्वां चिन्तां त्यजेत्, नारीधर्मं भजेत्।
नित्यं कान्तं यजेत्, वत्से ते......॥103॥

एको देवः पतिरेको धर्मः पतिः।
साक्षादात्मा पतिः, वत्से ते...........॥ 104॥

मेघा वृष्टिं कुर्वन्ति, विप्रा वेदं पठन्ति।
देवा पुष्पं वर्षन्ति, वत्से ते...........॥105॥

लोका गीतं गायन्ति, वाद्यं नृत्यं तन्वन्ति।
पौरा ग्राम्या इच्छन्ति, वत्से ते.........॥ 106॥

वत्से वेदत्रयं, अग्निदेवत्रयम्।
कुर्याल्लोकत्रयं, वत्से ते............॥ 107॥

---

तुम्हारा सन्ताप हरें। तुम्हारे लिये पवित्र हवायें चलें और रमणीक (हरे भरे) पर्वत तुम्हारा कल्याण करें।

हे शान्ता ! लक्ष्मी और सरस्वती तुम्हें पवित्र (स्वस्थ) रखें। सूर्य और चन्द्रमा तुम्हारी रक्षा करें तथा पार्वती और गङ्गाजी तुम्हें आनन्द प्रदान करें।

हे राजकुमारी ! समस्त चिन्ताओं को छोड़कर नारी धर्म (पतिव्रता धर्म) का पालन करना तथा निरन्तर पति की सेवा परायण रहना।

हे राजपुत्री ! पतिदेव को ही एकमात्र देवता समझना, अर्थात् पति परमेश्वर में ही समस्त देवताओं का निवास समझना और पतिदेव को ही धर्म का अधिष्ठान (केन्द्र) समझना, किं बहुना पतिदेव को ही साक्षात् अपनी आत्मा (प्राण) समझना।

हे बेटी ! देखो ! तुम्हारे (दोनों के लिये) स्वागत (मङ्गल) हेतु मेघ वर्षा कर रहे हैं और ब्राह्मणजन वेद पाठ कर रहे हैं एवम् तुम दोनों का स्वागत करने के लिये प्रसन्न होकर देवता भी पुष्पवृष्टि कर रहे हैं।

हे राजकुमारी ! समस्त नागरिक और ग्रामीणजन आनन्दमग्न होकर गीत गा रहे हैं और बाजे बजा रहे हैं एवम् नृत्य कर रहे हैं तथा तुम्हारे लिये मङ्गलकामना कर रहे हैं।

हे राजपुत्रि ! तीनों वेद, तीनों अग्नियाँ (दाक्षिणात्य, गार्हस्थ्य, हवनीय) तथा

शान्ताः भूग्रहदिशाः, शान्तावग्रहनिशा।
शान्ताः सर्वे काङ्क्षन्ति, वत्से ते.........॥ 108॥

पुरो.- वत्सौ ! अतः परं त्रिमूर्तयेऽस्मै प्रणमताम्।

उभौ- करौ वद्ध्वा जाजलिविभाण्डकवशिष्ठाय प्रणमतः।

त्रयः- आशीर्वादं पठन्ति-

चन्द्रिकाचन्द्रयोस्तुल्यो, वने वल्लीवसन्तयोः।
सङ्गमो युवयोरेष, भूयादानन्ददायकः॥ 109॥

पुरो.- वत्सौ ! अतः परं विप्रेभ्यः प्रणमतम्।

---

अन्वयः- चन्द्रिकाचन्द्रयोः वने वल्लीवसन्तयोः तुल्यः युवयोऐषः सङ्गमः आनन्ददायकः भूयात्।

व्याख्या- चन्द्रिकाचन्द्रयोः=ज्योत्स्नाशशाङ्कयोः, वने=कानने, वल्ली वसन्तयोः=लताकुसुमाकरयोः, तुल्यः=समः, युवयोः=भवतोः, शान्ताशृङ्गिणोः, एषः=अयम्, सङ्गमः=विवाहः, आनन्ददायकः=कल्याणकारकः, भूयात्=भवतु "आशिषिलिङ्लोटौ" इत्याशिषि लिङ्लकारः। उपमालङ्कारः।

---

तीनों देवता (ब्रह्मा, विष्णु, महेश) एवम् तीनों लोक तुम्हारे लिये कल्याण की कामना करें।

पृथ्वी, नक्षत्र, और दिशाओं में सारा वातावरण शान्त है। दुर्भिक्ष (अनावृष्टि) की घोरनिशा शान्त (समाप्त) हो गई है। हे बेटी ! अब शान्त होकर सभी कोई तुम्हारे मङ्गल की आकाङ्क्षा करते हैं।

पुरो.- हे शान्ता शृङ्गी ! इसके बाद अब इन तीनों मूर्तियों (जाजलि, विभाण्डक और वशिष्ठ) को प्रणाम करो।

दोनों- हाथ जोड़कर तीनों को प्रणाम करते हैं।

तीनों- आशीर्वाद देते हैं-

जिस प्रकार चन्द्रमा और चाँदनी का एवम् वन में लता और बसन्त का समागम सबको सुहावना लगता है उसी प्रकार तुम दोनों (शान्ताशृङ्गी) का समागम (विवाह) सबको आनन्द प्रदान करे।

पुरो.- वत्सों ! अब सभी ब्राह्मणों को प्रणाम करो।

**उभौ**- प्रणमतः।

सपुरोहिता विप्राः पठन्ति-

**इदं ब्राह्ममिदं क्षात्रं, जायतां ग्रन्थिबन्धनम्।**
**पापत्रयसमुद्भूततापत्रयविनाशकम् ।। 110।।**

**राजा**- (विभाण्डकं प्रति) भगवन्! तथाविधं विधाय मयाऽनार्यमाचरितम् तच्छोधनाय अहमिमां स्वसुतां तव पुत्राय पत्नीत्वेन प्रददामि।

**स्वभावशान्ता मम कन्यकेयम्,**
**सुतस्तवायं किलशान्तिमूर्तिः।**

---

**अन्वयः**- इदं ब्राह्मम्, इदं क्षात्रं ग्रन्थिबन्धनं पापत्रयसमुद्भूतं तापत्रयविनाशकं जायताम्।

**व्याख्या**- इदम्=वर्तमानम्, ब्राह्मम्=ब्रह्मणं इदमित्यर्थे "ब्राह्मोऽजातौ" इति सूत्रेण योगविभागेन ब्राह्मपदं निपात्यते। ब्राह्मपदेन शृङ्गिणो वर्चो गृह्यते। क्षत्रस्येदमिति "तस्येदम्" इति सूत्रेण अण् प्रत्यये क्षात्रपदेन शान्ताया वर्चो गृह्यते। तयोर्वर्चसो ग्रन्थिबन्धनम्=सङ्गमम् अथवा विवाहे वरवध्वोर्ग्रन्थिबन्धनम् भवतीति पुराणी प्रथा। पापानां त्रयमिति पापत्रयम्=कायिकं, वाचिकं, मानसं च। त्रयोऽवयवा यस्येत्यर्थे त्रिशब्दात् "संख्याया अवयवे तयविति तयपः स्थाने"द्वित्रिभ्यां तयस्यायज्वा," इति सूत्रेण अयजादेशे त्रयमिति रूपम् ततस्तत्पुरुषसमासः। तेन समुद्भूतं=उत्पन्नं यत्तापत्रयम्=दुःखत्रयम् आध्यात्मिकम्, आधिभौतिकम् आधिदैविकञ्च। तस्य विनाशकम्= संहारकं यत्तज्जायताम्= भवत्विति आशिषिलोट्। यथा संख्यालङ्कारः।

---

**दोनों**- ब्राह्मणों को प्रणाम करते हैं।

पुरोहित के सहित सब ब्राह्मण आशीर्वाद (मंगलकामना) पढ़ते हैं-

शृङ्गी ऋषि का ब्रह्मतेज और शान्ता का क्षत्रियतेज (दोनों) का यह ग्रन्थि बन्धन (वैवाहिक संगम या गाँठ जोड़ना) तीनों पापों (कायिक, वाचिक, मानसिक) से उत्पन्न तीनों (दैहिक, दैविक, भौतिक) दुःखों का संहारकर्त्ता बने। अर्थात् दोनों का यह ग्रन्थिबन्धन सबका कल्याण करे।

**राजा**- (विभाण्डक से) भगवन्! आपके पुत्र की तपश्चर्या में विघ्न डालकर मैंने बहुत अनार्य आचरण किया है, उसका प्रायश्चित्त करने के लिये आपके पुत्र शृङ्गी को मैं अपनी कन्या पत्नी के रूप में समर्पित करता हूँ-

यह मेरी कन्या स्वभाव से ही शान्त है अतः इसका सार्थक नाम शान्ता है, इसी

अस्याः करं चास्य करे समर्प्य,
व्रजामि शान्तिं मनसाप्यगम्याम्॥111॥
(इति शृङ्गिकरे शान्ताकरं समर्पयति)
(नेपथ्ये हर्षध्वनिः)

**राजा-** एतदपरं प्रार्थयामि यत् पूर्णकामोऽहमिदानीमेव देव्या सह तपस्तप्तुं वनाय प्रस्थानं करोमि, तस्मादस्याङ्गदेशस्य राज्यपदे मे जामाताऽभिषेच्यताम्।

**विभा.-** नैतदुपपद्यते। वीतरागोऽयं तव जामाता वंशवर्धिन्या अनया स्नुषया

---

**अन्वयः-** इयं मम कन्यका स्वभावशान्ता (अस्ति) अयं तव सुतः (च) किल शान्तिमूर्तिः (वर्तते) अस्याःकरम् अस्य करे समर्प्य मनसा अपि अगम्यां शान्तिं ब्रजामि।

**व्याख्या-** इयम्=एषा पुरोवर्तिनी, मम=रोमपादस्य, कन्यका=दुहिता, स्वभावशान्ता=प्रकृत्या विनीता अस्ति, अयम्=एषः पुरोवर्ती, तव=भवतः, सुतः=पुत्रः च शृङ्गीत्यर्थः, किल=नूनम्, शान्तिमूर्तिः=जितेन्द्रियत्वान्निष्कोपो वर्तत इति तात्पर्यम्। अस्याः=शान्ताया, करम्=पाणिम्, अस्य= ऋष्यशृङ्गस्य, करे=पाणौ, समर्प्य=प्रदाय उभयोः पाणिग्रहणं कृत्वेति भावः। मनसापि=चेतसापि किं नाम वाण्या, अगम्याम्=अज्ञेयाम्, शान्तिम्=परितुष्टिम् परमानन्दं, ब्रजामि=अनुभवामि। अतिशयोक्तिरलङ्कारः उपजातिर्वृत्तम्।

---

प्रकार आपके सुपुत्र श्री शृङ्गी जी भी साक्षात् शान्ति की मूर्ति हैं। दोनों एक दूसरे के तुल्य हैं। अतः मैं अपनी कन्या का हाथ आपके पुत्र के हाथ में समर्पित करके इतनी प्रसन्नता (शान्ति) को प्राप्त कर रहा हूँ, जिसका वर्णन मन से भी नहीं किया जा सकता।

(इस प्रकार शृङ्गी के हाथ में शान्ता का हाथ समर्पित करता है)
(नेपथ्य में हर्षध्वनि होती है)

**राजा-** भगवन् ! मैं इतनी और प्रार्थना करता हूँ कि अब मेरा मनोरथ पूर्ण हो गया है। अब मैं इसी समय (त्यागी वन कर) महादेवी के साथ तपस्या करने के लिये वन को प्रस्थान करता हूँ। इसलिये अब इस अङ्गदेश का शासन (राजतिलक) करना चाहता हूँ, उस राज्याभिषेक को करा दीजिये।

**विभा.-** राजन् ! यह बात उपयुक्त नहीं है, क्योंकि आपका यह जामाता (शृङ्गी) सर्वथा बीतरागी (त्यागी) है। अर्थात् यह इस बन्धन में नहीं फँसेगा। केवल वंशवर्धिनी इस वधू (शान्ता) के साथ (नगर से दूर) इसी वाटिका में रहकर

सह अमूमेव वाटिकामध्युष्य नियमं पालयिष्यति। अहं च तीर्थे-तीर्थे चङ्क्रमणं कुर्वाणः पौत्रसुखमालोक्य हिमशैले ब्रह्मलीनो भवामि। एषा च महादेवी पृश्निः-

**अचिरेणैव शत्रूणां, मर्दकं कुलवर्धकम्।**
**विश्रुतं च गुणागारं, पुत्ररत्नं प्रसूयताम्॥ 112॥**

नेपथ्ये- जयतु-जयतु महर्षिः।

**विभा.**- तस्मान्नोपयुक्तस्तवाग्रहः किं मन्यते भवान्? इति (जाजलिमुखं पश्यति)

**जाजलिः**- राजन्! नहि सिद्धानां वचांसि क्रमितुमर्हति भवान्! तस्मात् महादेव्या सह तथानुष्ठीयतां यथाऽऽज्ञापयन्ति गुरवः, ततश्च पुत्रमुखं दौहित्रमुखं च वीक्ष्य यथेच्छं विधीयताम्।

---

**अन्वय**-अचिरेण एव शत्रूणां मर्दकं कुलवर्धकं विश्रुतं गुणागारं च पुत्ररत्नं प्रसूयतां।

**व्याख्या**- अचिरेण=शीघ्रम्, एव=हि कियन्मासानन्तरमिति यावत्। शत्रूणाम्=अरीणाम्, मर्दकम्=संहारकम्, कुलवर्धकम्=वंशप्रवर्तकम्, विश्रुतं=विख्यातम्, गुणागारम्=गुणराशिम्, च=समुच्चये, पुत्ररत्नम्=सुतोत्तमम् चतुरङ्गनामकमिति तत्त्वम्, प्रसूयताम्=जनयत्वित्याशिषि लोट् रूपकालङ्कारः।

रोमपादाच्चतुरङ्गः चतुरङ्गात्पृथुलाक्षो बभूवेत्यादिक्रमेण रोमपादस्य वंशवृद्धिरजायत। उक्तं चं भागवते-

(श्रीमद्भागवते नवमस्कन्धे त्रयोविंशेऽध्याये)

---

तापसनियमों का पालन करेगा और मैं तीर्थों-तीर्थों में विचरण करता हुआ अन्त में पौत्र का (शृङ्गी के पुत्र का) मुख देखकर हिमालय में ब्रह्मलीन हो जाऊँगा। अर्थात् शरीर त्याग कर दूँगा। आगे यह जो तुम्हारी रानी पृश्नि है वह-

शीघ्र ही एक ऐसे पुत्ररत्न को जन्म दे जो प्रसिद्ध और गुणवान् हो तथा शत्रुओं को चौपट करे एवम् वंश की वृद्धि करे।

**नेपथ्य में**- महर्षि विभाण्डक की जय हो जय हो।

**विभा.**- इसलिये हे राजन्! आपका उक्त आग्रह उचित नहीं है। आपका क्या मत है?

(इस प्रकार जाजलि की ओर देखते हैं)

**जाजलि**- राजन्! सिद्धेश्वरों के वचनों की अवहेलना नहीं करनी चाहिये, अतः महादेवी के साथ आप वैसा ही करें, जैसा कि ये गुरुजन (विभाण्डकजी) कह रहे हैं, बाद में पुत्रमुख और दौहित्रमुख (कन्या के पुत्र धेवते) को देख कर आप जैसा उचित समझें वैसा करें।

**वशिष्ठः**- साधु, साधु। अनेन विधानेन दशरथस्याप्यनपत्यता न स्थास्यतीति मन्यामहे।

**दशरथः**- सखे ! यथोक्तं पालय, जीवन्तु जीवन्तु त्वया सहाङ्गजनाः।

**राजा**- ब्रह्मन्! एवं चेत्तर्हि तवाज्ञां शिरसि धृत्वा सपत्नीकः प्रहरीव प्रजापालनाय वसामि।

(इत्युभौ पादयोः पततः)

**विभा.**- (उभावुत्थाप्य) चिरं प्रजां रक्ष राजन्!

**राजा**- (सपत्नीकः प्रणमन्) भगवन् ! तव प्रसादेन सर्वथाहं पूर्णकाममात्मानमवैमि।

**विभा.**- राजन्! किं ते परं प्रियतरं कुर्याम् ?

**राजा**- नातोऽपरं प्रियतरं पश्यामि, तथापीदमस्तु-

---

**वशिष्ठ**- धन्य है, धन्य है। इस विधि विधान से तो मैं मानता हूँ कि इन राजा दशरथ की अनपत्यता (पुत्रहीनता) भी दूर हो जायेगी, अर्थात् शृङ्गी द्वारा यज्ञ कराने से इनको भी पुत्र प्राप्ति होगी, ऐसा मेरी अन्तरात्मा कह रही है।

**दशरथ**- मित्र ! रोमपाद ! जैसा सब लोग कह रहे हैं वैसा ही आप करें। आप के यहाँ रहने से देशवासी लोग सुखपूर्वक जीवन व्यतीत करते रहेंगे।

**राजा**- ब्रह्मन् ! यदि ऐसी बात है तो आप की आज्ञा शिरोधार्य करके प्रहरी (चौकीदार) समान प्रजा की रखवाली हेतु सपत्नीक मैं यहीं निवास करता हूँ।

(इस प्रकार राजा और रानी विभाण्डक के चरणों पर गिरते हैं)

**विभा.**- (दोनों को उठाकर) राजन् ! चिरकाल तक प्रजा का पालन करते रहो।

**राजा**- (रानी के सहित प्रणाम करता हुआ) भगवन्! आपके प्रसाद (वरदान) से मैं अपने को सर्वथा परिपूर्ण समझ रहा हूँ।

**विभा.**- राजन् ! इससे अधिक मैं तुम्हारा क्या प्रिय कार्य करूँ ?

**राजा**- भगवन् ! इससे अधिक और प्रिय कार्य मैं कुछ नहीं समझ रहा हूँ। अर्थात् जो भी परमप्रिय कार्य थे वे तो आपने पूर्ण कर दिये, अब कुछ शेष नहीं। फिर भी इतना और हो जाये-

## (भरतवाक्यम्)

मोदन्तां शिशवः, प्रफुल्लतनवः, सर्वाङ्गणेऽलङ्कृताः,
सानन्दाः कृषका, लुनन्तु सुफलां, सिक्तां कृषिं वारिदैः।
यान्त्वार्या उदयं क्षयं च यवना राजा प्रजा दीव्यतु,
दम्पत्योर्नवसङ्गमोऽस्त्वविरलं वो भुक्तये मुक्तये ॥ 123॥

॥ इति सर्वे निष्क्रान्ताः॥

॥इति सप्तमोऽङ्कः॥

इति दयालुविरचितं शान्तामङ्गलं नाटकं सम्पूर्णम्।

---

**अन्वयः-** प्रफुल्लतनवः, अलङ्कृताः शिशवः, सर्वाङ्गणे मोदन्ताम्। सानन्दाः कृषकाः वारिदैः सिक्तां सुफलां कृषिं लुनन्तु। आर्याः उदयं, यवनाः च क्षयं यान्तु। राजा प्रजा च दीव्यतु, दम्पत्योः अविरलं नवसङ्गमः वः भुक्तये मुक्तये च अस्तु।

**व्याख्या-** प्रफुल्लतनवः=प्रफुल्लाः=हृष्टपुष्टाः, तनवः=शरीराणि येषां, ते इति बहुव्रीहिः। अलङ्कृताः=वस्त्रालङ्कारैः सुसज्जिताः, शिशवः=बालकाः, पृथुकः शावकः शिशुरित्यमरः। सर्वाङ्गणे=सर्वेषां जनानामङ्गणे=अजिरे णान्तस्य अङ्गणपदस्य पृषोदरादित्वात्सिद्धिः अङ्गणं चत्वराजिरे इत्यमरः, मोदन्ताम्=खेलन्तु। सानन्दाः=सहर्षाः, कृषकाः=कृषीवलाः, वारिदैः=मेघैः, सिक्ताम्=सिञ्चिताम्, सुफलाम्=फलपूर्णाम्, कृषिम्=क्षेत्रम् सस्यमित्यर्थः। लुनन्तु=कृन्तन्तु, आर्याः=आर्यजनाः हिन्दव इति भावः, उदयम्=विकासम्, यवनाः=म्लेच्छा आर्येतरे, च=हि, क्षयम्=विनाशम्, यान्तु=प्राप्नुवन्तु। राजा=भूपः, प्रजा=जनता, च=समुच्चये पूर्वतोऽनुकृष्टश्चकारः। परस्परं सहयोगेन दीव्यतु=आनन्दतु। दम्पत्योः= जाया च पतिश्चेत्यर्थे "चार्थेद्वन्द्व" इति सूत्रेण समासे कृते राजदन्तादिगणपाठाज्जायापदस्य दम्भावो निपात्यते। अविरलम्= अखण्डितं

---

## (भरतवाक्य)

हृष्टपुष्ट शरीर में आभूषणों को धारण किये हुये बालक सब लोगों के प्राङ्गणों में (दौड़-दौड़ कर) खेलते रहें। समय-समय पर वर्षा से सींची गई एवम् अन्न फलों से परिपूर्ण फसल (कृषि) कृषक लोग आनन्द से काटें। आर्य जनों (हिन्दू लोगों) का विकास (उत्थान) होता रहे और यवनों (आर्येतर लोगों) का विनाश (पतन) होता रहे। परस्पर के सहयोग से राजा और प्रजाजन प्रसन्न बने रहें। शान्ता एवं शृङ्गी का यह नवीन सम्बन्ध (विवाह) आप लोगों के लिये भुक्ति और मुक्ति प्रदान करे,

यथास्यात्तथा, वियोगरहितमिति तत्पर्यम्। नवसङ्गमः=नवसम्बन्धः, वः=युष्माकम् भुक्तये=सांसारिकभोगाय, मुक्तये=मोक्षाय च अस्तु=भवतु, शान्ताश्रृङ्गिणोर्विवाहो भौतिकमाध्यात्मिकं च मङ्गलं ददात्वित्यर्थः। शार्दूलविक्रीडितं छन्दः। निर्वहणसन्धेः प्रशस्तिरङ्गम्।

इति शिवशङ्करविरचिता संस्कृतव्याख्या सम्पूर्णा

---

अर्थात् शान्ता और शृङ्गी की भाँति आप लोगों (पति पत्नियों) की जोड़ी का सङ्गम भी सदा अखण्ड रहे।

(इसी प्रकार सब निकल जाते हैं)

॥सप्तम अङ्क पूर्ण॥

(शिवशङ्कर विरचित हिन्दी व्याख्या सम्पूर्ण)

# परिशिष्ट (1)

## ॥ श्लोकक्रमाङ्कः ॥

| श्लोकसङ्केतः | पृष्ठ संख्या |
|---|---|
| • अतिविकटनिशेयं मूर्च्छयन्ती नृलोकम्, | 123 |
| • देवराजः सहस्राक्षो, वासवो नाम देवता। | 129 |
| • राजँस्तव प्रजामध्ये, वारि वर्षतु वारिद॰। | 130 |
| • चिरं जीवत्वनावृष्टिः-सृष्टिर्जीवतु वा न वा। | 131 |
| • दण्डमूले स्थितो ब्रह्मा, दण्डमध्ये जनार्दनः। | 133 |
| • मम हुङ्कारमात्रेण, कम्पते भुवनत्रयम्। | 137 |
| • रौद्राक्षिरक्तरसनानखलोमदंष्ट्रा, पुष्टप्रचण्डपदपीवरबाहुदण्डा। | 138 |
| • मारयामो नृपं तत्र, चूर्णयामश्च सैनिकान्। | 141 |
| • जयति-जयति रणचण्डी काली, | 141 |
| • शत्रवस्ते क्षयं यान्तु, हिमर्तौ मशका इव। | 146 |
| • द्वारेषु वीथीषु लुठन्ति बालाः, नग्नाश्च नार्योऽपि हलं वहन्ति। | 148 |
| • सैव जीवति लोकेऽस्मिंश्चरित्रं यस्य जीवति। | 152 |
| • जलाशयो निर्जलतामुपेतः, कथाविशेषाणि च नीरजानि। | 156 |
| • जननीं जन्मभूमिं च, नरः आपत्सु मुञ्चति। | 158 |
| • असाध्यानां हि रोगाणां, चिकित्सा निष्फला यथा। | 159 |
| • सत्यं शौचं धृतिर्धर्मो, बुद्धिरिन्द्रिय निग्रहः। | 161 |
| • शुष्यन्ति बल्लयो विटपैः समेताः, न पत्रपुष्पाणि फलानि शाखाः। | 163 |
| • नीराशयागतमृतैः पशुभिः प्रकीर्णाः, शुष्कोदराऽवट- भयङ्करशून्यतीरा। | 165 |
| • सुबद्धमूलापि विपत्तिकाले, करोति शक्तिर्न सहायकार्यम्। | 166 |
| • वर्षन्ति भास्करकरा ज्वलिता फुलिङ्गान् | 168 |
| • हिताऽहितं न पश्यन्ति, न शृण्वन्ति शुभाऽशुभम्। | 171 |
| • अद्य त्वां सेवकैः सार्धं, सभार्यो भक्षयाम्यहम्। | 173 |
| • एष आग्नेयवाणोऽमुं, रक्षयित्वा वनस्पतिम्। | 174 |
| • नूनं बलवती लोके, दृश्यते भवितव्यता। | 177 |
| • तपःशूरा द्विजाः प्रोक्ता, रणशूराश्च बाहुजाः। | 181 |
| • सदा जागर्ति भूपालः, प्रजा जागर्तु वा न वा। | 184 |
| • सरलं दिवि सेतुबन्धनं, सरलं वारिणि काव्यलेखनम्। | 189 |
| • सागरे पावकं दद्यात्, तद्देशे पातयेन्नभः। | 195 |
| • नटीतुल्या नरीनर्ति, जिह्वाग्रे मे सरस्वती। | 197 |
| • नेत्रे पिधाय विपिने गजसिंह संघे, | 200 |

**श्लोकसङ्केतः** **पृष्ठ संख्या**

# परिशिष्ट (2)
# छन्द परिचय

## (क) मात्राच्छन्द

• **आर्या**

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादशः द्वितीये चतुर्थके पञ्चदश साऽऽर्या।।

—श्रुतबोध

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः।
षष्ठो जश्च नलयुवा प्रथमेऽर्धे नियतमार्यायाः।।
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः।
परमेऽर्धेपञ्चमके तस्मादिह भवति षष्ठो लः।।

—छन्दोमञ्जरी

जिसके प्रथम चरण में तथा तृतीय चरण में भी बारह मात्राएं हों, द्वितीय चरण में अठारह तथा चतुर्थ चरण में पन्द्रह मात्राएं हों, वह आर्या है।

• **उद्गाथा या गीति**

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः।।

वृत्त॰ 2/8

उदाहरण—

तव न जाने हृदयं मम मुनः कामो दिवापि रात्रावपि।
निर्घृण तपति वलीयस् त्वयि वृत्तमनोरथाया अंगानि

–शाकु॰ 3/13

## (ख) वर्णच्छन्द

• **अनुष्टुप् (प्रत्येक चरण में आठ अक्षर)**

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम्।।

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठं च जानीयात् शेषेष्वनियमो मतः।।

—छन्दोमंजरी 4/7

जिस छन्द में पञ्चम अक्षर प्रत्येक चरण में लघु हो (परन्तु) सप्तम अक्षर केवल दूसरे तथा चौथे चरण में लघु हो, षष्ठ अक्षर प्रत्येक चरण में गुरु हो उसे 'पद्य' कहत हैं। पद्य को ही श्लोक या अनुष्टुप भी कहते हैं।

उदाहरण—

यस्य राज्ये प्रजा सर्वा, मुदा शेतेऽकुतोभया।
तं वन्दे रोमपादाख्यं, महाराजं पुनः पुनः॥2॥

- **इन्द्रवज्रा (प्रत्येक चरण में ग्यारह अक्षर)**

स्यादिन्द्रवज्रा यदि तौ जगौ गः।। 3/28 (वृत्तरत्नाकर)

स्यादिन्द्रवज्रा यदि तौ जगौ गः।। 2/1 (छन्दोमंजरी)

जिस छन्द के प्रत्येक चरण में दो तगण, एक जगण तथा दो गुरु वर्ण क्रमशः हों, उसे इन्द्रवज्रा कहते हैं। यति (अथवा विश्राम) प्रत्येक चरण के अन्त में होता है।

उदाहरण—

अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परीग्रहीतुः।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा।।

—शाकु॰ 4/22

श्रुतबोध में यही लक्षण इस प्रकार से कहा गया है—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुः पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।

—श्रुतबोध 10।

- **उपेन्द्रवज्रा (प्रत्येक चरण में ग्यारह अक्षर)**

उपेन्द्रवज्रा जतजास्ततो गौ।। 3/29 (वृत्तरत्नाकर)

उपेन्द्रवज्रा प्रथमे लघौ सा।। 2/2 (छन्दोमंजरी)

जिस छन्द में क्रमशः जगण, तगण, जगण और उसके बाद दो गुरुवर्ण आयें, उसे उपेन्द्रवज्रा कहते हैं। यति चरणान्त में होती है।

उदाहरण—

सुबद्धमूलापि विपत्तिकाले, करोति शक्तिर्न सहायकार्यम्।
पतन्ति भूमौ गिरयोऽपि शीघ्रं, प्रचण्डभूकम्पविकम्पनेन॥ 43॥

• उपजाति (प्रत्येक चरण में ग्यारह अक्षर)

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजौतयस्ता।।
3/30 (वृत्तरत्नाकर)

यदीयौ पादौ अनन्तरोदीरितलक्ष्मभाजौ ताः उपजातयः।

अर्थात् जिन छन्द के दो चरण एक दूसरे के बाद बताये गये (इन्द्रवज्रा तथा उपेन्द्रवज्रा के) लक्षण से युक्त हों, उन्हें उपजाति कहते हैं।

उदाहरण—

नृपस्य दोषेण जना अदोषाः, दुःखानले तीव्रतरं दहन्ति।
एको हि वंशस्तरुवंशनाशं, करोत्यरण्ये निजपातकेन॥11॥

• रथोद्धता (प्रत्येक चरण में 11 अक्षर)

रान्नराविह रथोद्धता लगौ।। 3/38 (वृत्तरत्नाकर)

रात्परैर्नरलगै रथोद्धता।। (छन्दोमञ्जरी)

जिस छन्द के प्रत्येक चरण में रगण के बाद क्रमशः नगण, रगण, एक लघु तथा एक गुरु वर्ण आयें उसे रथोद्धता कहते हैं। पादान्त में यति होती है।

उदाहरण—

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया।
सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः।।
—शाकु॰ 7/18

• शालिनी (प्रत्येक चरण में 11 अक्षर)

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ।।3/34 (वृत्तरत्नाकर)

जिस छन्द के प्रत्येक चरण में क्रमशः मगण, तगण, तगण तथा दो गुरु वर्ण आयें, उसे शालिनी कहते हैं। इसमें अब्धि = 4 यथा लोक (=7) संख्या पर यति होती है।

उदाहरण—

रुद्राऽऽदित्या ब्राह्मणाः लोकपालाः,
वेदा नद्यः सागराः भूधराश्च।
सिद्धा नागा भूचराः खेचराश्च,
सर्वे शान्ता मङ्गलं वो दिशन्तु॥ 100॥

• स्वागता (प्रत्येक चरण में 11 अक्षर)

स्वागतेति रनभाद् गुरुयुग्मम् ।।3/39 (वृत्तरत्नाकर)

जिस छन्द के प्रत्येक चरण में क्रमशः रमण, तगण, भगण और दो गुरु वर्ण हों, तथा चरणान्त में यति हो, उसे स्वागता कहते हैं।

उदाहरण—

संस्कृतेन खलु भारतदेशो भूतलेऽप्यचलकीर्तिमवाप।
कालिदासभवभूतिगृहीतं, सेव्यते तदधुनाऽपि रसज्ञैः।।

—राजेन्द्रमिश्रस्य

• वंशस्थ (प्रत्येक चरण में 12 अक्षर)

जतौ तु वंशस्थमुदीरितं जरौ।। 3/46 (वृत्तरत्नाकर)
वदन्ति वंशस्थबिलं जतौ जरौ।। 2/4 (छन्दोमञ्जरी)

जिस छन्द के प्रत्येक चरण में क्रमशः जगण, तगण, जगण तथा रगण आये उसे वंशस्थ कहा गया है। चरणान्त में यति होती है।

उदाहरण—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः।।

—किरात 1/30

अन्य उदाहरण—

इदं किलाव्याजमनोहरं वपुस्तपः क्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया रामीलतां क्षेत्तुमृषिर्व्यवस्यति।।

• द्रुतविलम्बित (प्रत्येक चरण में 12 अक्षर)

द्रुतविलम्बितमाह नभौ भरौ।। 3/49 (वृत्तरत्नाकर)

• द्रुतविलम्बितमाह नभौभरौ।। 2/10 (छन्दोमञ्जरी)

जिस छन्द के प्रत्येक चरण में क्रमशः नगण, भगण, भगण तथा रगण आये उसे आचार्यों ने द्रुतविलम्बित कहा है।

उदाहरण—

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम्।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो नच संवृतः।।

—शाकु॰ 2/11

• **तोटक (प्रत्येक चरण में 12 अक्षर)**

इह तोटकमम्बुधिसैः प्रथितम्।। (3/48 वृत्तरत्नाकर)

वद तोटकमब्धिसकारयुतम्।। (2/6 छन्दोमञ्जरी)

जिस छन्द के प्रत्येक चरण में अम्बुधि अर्थात् समुद्र की संख्या वाले (=4) सगण हों तथा चरणान्त में यति हो, उसे तोटक कहते हैं।

उदाहरण—

गलदश्रुकथा त्वदपायमरौ प्रसभं निहता न हता जडता।
मदिराक्षि! तव स्मृतिरेव कथं मदयत्यनिशं मृदुकं हृदयम्।।

• **भुजङ्गप्रयात (प्रत्येक चरण में 12 अक्षर)**

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः।। (3/55 वृत्तरत्नाकर)

भुजङ्गप्रयातं चतुर्भिर्यकारैः।। (2/5 छन्दोमञ्जरी)

चार यगणों (तथा पादान्त यति) से युक्त छन्द भुजंगप्रयात होता है।

उदाहरण—

वृथा यज्ञदानं वृथा देवपूजा,
वृथा भूसूराशीर्वृथा साधुसेवा।
विपत्सागरे मज्जतो मानवस्य,
न वेधा न विष्णुर्न रुद्रः सहायः॥ 86॥

• **प्रहर्षिणी (प्रत्येक चरण में 13 अक्षर)**

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्।। 3/7 (वृत्तरत्नाकर)

जिस छन्द के प्रत्येक चरण में क्रमशः मगण, नगण, जगण, रगण तथा एक गुरुवर्ण आयें, वह प्रहर्षिणी है। प्रत्येक चरण में तीसरे तथा दसवें अक्षर पर यति होती है।

उदाहरण—

एष त्वामभिनवकण्ठशोणितार्थी,
शार्दूलः पशुमिव हन्मिं चेष्टमानम्।
आर्तानां भयमपनेतुमात्तधन्वा
दुश्यन्तस्तव शरणं भवत्विदानीम्।।

—शाकु॰ 6/27

• अतिरुचिरा (प्रत्येक चरण में 13 अक्षर)

चतुर्ग्रहैरतिरुचिरा जभस्जगाः।। 3/71 (वृत्तरत्नाकर)

जिस छन्द के प्रत्येक चरण में क्रमशः जगण, भगण, जगण तथा एक गुरु वर्ण हों, साथ ही साथ चार तथा ग्रहसंख्या (=9) पर यति हो उसे अतिरुचिरा कहते हैं।

उदाहरण—

प्रवर्ततां प्रकृतिहिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्।
ममापि च क्षपयतु नीललोहितः पुनर्भव परिगतशक्तिरात्मभूः।।

—शाकु॰ 7/35

• वसन्ततिलका (प्रत्येक चरण में 14 अक्षर)

उक्ता वसन्ततिलका तभजा जगौ गः।। (वृत्तरत्नाकर)

ज्ञेयं वसन्ततिलकं तभजा जगौ गः।। (छन्दोमंजरी)

वसन्ततिलका उसे कहते हैं जिसके प्रत्येक चरण में क्रमशः तगण, भगण, जगण तथा दो गुरु वर्ण आयें। आचार्य काश्यप इसे सिंहोन्नता तथा आचार्य सैतव उद्धर्षिणी कहते हैं।

उदाहरण—

वर्षन्ति भास्करकरा ज्वलिता फुलिङ्गान्,
भूः सर्वतस्तपति लौहकटाहतुल्या।
देहं दहन्ति मरुतो जड़जङ्गमानाम्,
नीरं स्वयं कलति भूरिनृषा तृषापि॥ 44॥

अन्य उदाहरण—

वाचो वदन्ति मनुजाः सततं यथेच्छम्,
कश्चित् फलन्ति न फलन्ति च तासु काश्चित्।
पूतात्मनां यमवतां च तपोधनानाम्,
वाचः फलन्ति शशिसूर्यविपर्ययेऽपि॥ 59॥

• **मालिनी (प्रत्येक चरण में 15 अक्षर)**

**ननमयययुतेयं मालिनी भोगिलोकैः।।** 3/87 वृत्तरत्नाकर

**ननमयययुतेयं मालिनी भोगिलोकैः।।** (छन्दोमञ्जरी)

जिस छन्द के प्रत्येक चरण में क्रमशः नगण, नगण मगण, यगण तथा यगण आयें साथ ही साथ भोगी अर्थात् नाग (=8) तथा लोक (=7) संख्यक अक्षरों पर यति हो, उसे मालिनी कहते है।

उदाहरण—

अविरलहरभक्तिर्मानसे जायतां ते,
मुनि दिशिदिशिकीर्तिश्चन्द्रिकावच्चकास्तु।
हरिरखिलपृथिव्यामाशुवृष्टिं तनोतु,
तिरयतु तव विघ्नं विघ्नराजो गणेशः॥ 23॥

अन्य उदाहरण—

अतिविकटनिशेयं मूर्च्छयन्ती नृलोकम्,
पृथुतिमिरपटेनाच्छादयन्ती जवेन।
दिवि भुवि कलयन्ती सर्वथा चैकवर्णम्,
वत! वत! भयभीतो भास्कारोऽस्तं प्रयाति॥ 27॥

• **पञ्चचामर (प्रत्येक चरण में 16 अक्षर)**

**जरौ जरौ ततो जगौ च पञ्चामरं वदेत्।।** 3/92 (वृत्तरत्नाकर)

उस छन्द को पञ्चचामर कहना चाहिए जिसके प्रत्येक चरण में क्रमशः जगण, रगण, जगण, रगण तथा एक गुरु वर्ण आयें। रावण प्रणीत शिवतागणव स्तोत्र पञ्चचामर छन्द में लिखा गया है।

उदाहरण—

धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे।
कृपाकटाक्षघोरणीनिरुद्धदुर्धरा-
पदिक्वचिद्दिगम्बरे मनो विनोदमेतु वस्तुनि।।

• **शिखरिणी (प्रत्येक चरण में 17 अक्षर)**

रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी।। (3/93 वृत्तरत्नाकर)
रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी।। (छन्दोमञ्जरी)

रस (=6) तथा रुद्र (=11) संख्यक अक्षरों के बाद यति वाली तथा क्रमशः यगण, मगण, नगण, सगण, भगण, एक लघु तथा एक गुरु वर्ण से युक्त शिखरिणी होती है।

उदाहरण—

कदा वा कालिन्दीकुवलयदलश्यामतरलाः
कटाक्षाः लक्ष्यन्त किमपि करुणावीचिनिचिताः।
कदा वा कन्दपप्रतिभटजटाचन्द्रशिशिराः
कमप्यन्तस्तोषं दधति मुरलीकेलिनिनदाः।।

—बिल्वमङ्गलप्रणीतकृष्णकर्णमृतम्

• **पृथ्वी (प्रत्येक चरण में 17 अक्षर)**

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।। (3/94 वृत्तरत्नाकर)

जिस छन्द के प्रत्येक चरण में क्रमशः जगण, सगण, जगण, सगण, यगण, एक लघुवर्ण तथा एक गुरुवर्ण हो उसे पृथ्वी कहते हैं। इस छन्द में यति वसु (=8) तथा ग्रह (=9) संख्यक अक्षरों के बाद होती है।

उदाहरण—

स्मृतापि तरुणातपं करुणया हरन्ती नृणामभङ्ग
रतनुत्विषां बलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी
मदीर्यमतिचुम्बिनी भवतु काऽपि कादम्बिनी।।

—पण्डितराजजगन्नाथस्य

• हरिणी (प्रत्येक चरण में 17 अक्षर)

रसयुगहयैन्सौ म्रौ स्लौ गौ यदा हरिणी तदा।। 3/69 (वृत्तरत्नाकर)

जब किसी छन्द के प्रत्येक चरण में क्रमशः नगण, सगण, मगण, रगण, सगण एक लघु तथा एक गुरु वर्ण आयें, साथ ही साथ क्रमशः रस (=6) युग (=4) तथा हय (सूर्य के रथ के घोड़े = 7) संख्यक अक्षरों पर यति हो-तो उसे हरिणी कहते हैं।

उदाहरण—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं-स्रस्तं मयां प्रतिसार्यते।।

—शाकु॰ 3/10

• मन्दाक्रान्ता (प्रत्येक चरण में 17 अक्षर)

मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरू चेत्।। 3/67-वृत्तरत्नाकर

मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्।। (छन्दोमंजरी)

जिस छन्द के प्रत्येक चरण में क्रमशः मगण, भगण, नगण, तगण तथा दो गुरु वर्ण आयें और जलधि (=4) षट् (=6) एवं अग (कुलपर्वत=7) संख्यक वर्णो पर यति हो—उसे मन्दाक्रान्ता कहते हैं। कालिदास विरचित मेघदूत काव्य आद्यन्त इसी छन्द में लिखा गया है।

उदाहरण—

जीर्णं शीर्णं लगति परितः काननं जीवनं मे,
दत्त्वा भीतिं तुदति सुखदोऽप्याश्रमो मामिदानीम्।
धावं-धावं विधुरहृदयं सर्वधैर्यं धुनोति,
नाहं जाने गरलममृतं किञ्च वान्यत्पिवामि॥ 78॥

• शार्दूलविक्रीडत (प्रत्येक चरण में 18 अक्षर)

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडतम्।। 3/100 (वृत्तरत्नाकर)

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडतम्।। (छन्दोर्मजरी)

जिस छन्द के प्रत्येक चरण में क्रमशः मगण, सगण, जगण, सगण, तगण, तगण तथा एक गुरु वर्ण आयें उसे शार्दूलविक्रीडित कहते हैं। इस छन्द में सूर्य (=12) तथा अश्व (=7) संख्यक अक्षरों पर यति होती है।

उदाहरण—

या सर्गस्थितिनाशहेतुरमला या कोमला शीतला,
या रत्नप्रकृतिश्चराचरमिदं स्वच्छं यया दृश्यते।
यस्याश्चाकृतयो लसन्ति विविधाः सा नीरमूर्तिर्हरेः,
शान्तामङ्गलमातनोतु सततं वो रोमपादादिषु।।

अन्य उदाहरण—

मोदन्तां शिशवः, प्रफुल्लतनवः, सर्वाङ्गणेऽलङ्कृताः,
सानन्दाः कृषका, लुनन्तु सुफलां, सिक्तां कृषिं वारिदैः।
यान्त्वार्या उदयं क्षयं च यवना राजा प्रजा दीव्यतु,
दम्पत्योर्नवसङ्गमोऽस्त्वविरलं वो भुक्तये मुक्तये ॥ 123॥

• स्रग्धरा (प्रत्येक चरण में 21 अक्षर)

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुतन स्रग्धरा कीर्तितेयम्।।
(3/10 वृत्तरत्नाकर)

भ्रम्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।। (छन्दोमंजरी)

प्रत्येक चरण में क्रमशः मगण, रमण, भगण, नगण तथा तीन यगणों से युक्त और तीन बात मुनि (=7) संख्यक अक्षर पर यति वाली छन्दरचना स्रग्धरा कही जाती है।

उदाहरण—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होती
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।
—शाकु॰ 1/1

अन्य उदाहरण—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।

दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति।।

—शाकु॰ 1/7

## (ग) अर्धसमवृत्त छन्द

• **अपरवक्त्र (विषम चरणों में 11 तथा सम चरणों में 12 अक्षर)**

**अयुजि ननरला गुरुः समे नूजमपरवक्त्रमिदं ततो जरौ।।** 4/9 (वृत्त॰)

जिस छन्द के अयुक् अर्थात् प्रथम एवं तृतीय चरण में क्रमशः नगण, नगण, रगण एक लघु एवं एक गुरु वर्ण आयें तथा सम अर्थात् द्वितीय एवं चतुर्थ चरण में क्रमशः नगण, जगण, जगण तथा रगण आयें उसे अपरवक्त्र कहते हैं। कुछ आचार्य इसी को वैतालीय भी कहते हैं।

उदाहरण—

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम्।।

—शाकु॰ 4/10

• **पुष्पिताग्रा (विषम चरणों में 12 तथा सम चरणों में 13 वर्ण)**

**अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।।**

4/10 (वृत्त॰)

जिस छन्द के प्रथम एवं तृतीय चरण में क्रमशः नगण, नगण, रगण तथा यगण आयें और द्वितीय एवं चतुर्थ चरण में क्रमशः नगण, जगण, जगण रगण तथा एक गुरु वर्ण आयें, उसे पुष्पिताग्रा कहते हैं। कुछ आचार्यों ने पुष्पिताग्रा को ही औपच्छन्दसिक भी माना है।

उदाहरण—

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः।
अरिषु हि विजयार्थिनः क्षितीशाः विदधति सोपधि सन्धिदूषक्षाणि।।

—किरात॰ 1/45

• **मालभारिणी (विषम चरणों में 11 तथा सम चरणों में 12 वर्ण)**

**विषमे ससजा गुरू समे चेत सभरा येन तु मालभारिणीयम्।।**

जिस छन्द के विषम चरणों (प्रथम एवं तृतीय) में क्रमशः सगण, सगण, जगण तथा दो गुरुवर्ण आयें तथा सम चरणों (द्वितीय एवं चतुर्थ) में क्रमशः सगण, भगण, रगण तथा यगण आयें उसे मालभारिणी कहते हैं।

उदाहरण—

अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन।
अधरस्य पिपासता मया ते सदयं सुन्दरि! गृह्यते रसोऽस्य।।

—शाकु॰ 3/21

अन्य उदाहरण—

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं विभर्ति।।

—शाकु॰ 7/21

• **वियोगिनी (विषम चरण में 10 तथा सम चरण में 11 वर्ण)**

विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी।। (वृत्तरत्नाकर)
आयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा।। (छन्दोमंजरी)

जिस छन्द के विषम चरणों (प्रथम-तृतीय) में क्रमशः दो सगण, एक जगण तथा एक गुरु वर्ण आयें, सम चरणों (द्वितीय-चतुर्थ) में क्रमशः सगण, भगण, रगण, एक लघु तथा एक गुरुवर्ण आयें—उसे वियोगिनी कहते हैं।

उदाहरण—

सरलं दिवि सेतुबन्धनं, सरलं वारिणि काव्यलेखनम्।
सरलं च खपुष्पगुम्फनं, कठिनं हा! भुवि राजसेवनम्॥ 51॥

# शान्तामंगलम् नाटकरचियतुःपरिचयः

अदः शान्तामंगलम् नाटकं रामेश्वरदयालुशर्मणा रचितम्। अस्य पितुर्नाम श्री नत्थूलाल शर्मा आसीत्। अस्य च दयालोर्जन्मतिथिः 15-03-1936 ई० अस्ति। अयं च बरेली जनपदे (उ०प्र०) डभोरा नामकस्य ग्रामस्य मूलनिवासी वर्तते। अस्य च बाल्यावस्था दयनीयदशायामेव व्यतीता। यदा गृहेऽर्थाभावात् पठनव्यवस्था नाऽभवत् तदासौ जन्मस्थानस्य परिवारजनस्य च मोहं ठुक्कुत्य रात्रावेव तस्करवत् किन्तु रूदन्नेव पलाय्य बरेलीं नगरीं प्राप्तवान्। तत्र च भाटकं विनैव रेलयानं अधिरूह्य हनुमच्चालीसां पठन् चतुर्दशसूत्राणिरटन्, स्थाने-स्थाने टी०टी० जनानां नेत्रेषु धूलिप्रक्षेपं च कुर्वन् क्षुत्पिपासापीड़ितो यथा तथा ऋषिकेशमासादितवान्।

ऋषिकेशे कालीकमली सं० महाविद्यालये प्रविश्य महामहोपाध्याय-पदवीप्राप्तानां पं० श्री गंगाधर झा महाभागानां प्रधानाचार्याणां चरणोपान्तेऽन्तेवासी अभूत। तेषामनुकम्पयाऽसौ व्याकरणाचार्यपरीक्षां साहित्याचार्यपरीक्षां तथा एम०ए० परीक्षां चोत्तीर्णवान्। तत्पश्चात् वहुषु पाठशालेषु पाठयित्वा अन्ततोगत्वा कालीकमली सं०म०वि० ऋषिकेशे एव चिरकालमध्याप्य सेवानिवृत्तोऽजायत्। सेवानिवृत्यनन्तरं राष्ट्रिय सं०सं० दिल्लीतः शास्त्रचूड़ामणिः इत्युपाधिर्मिलितः एकलक्ष रूप्यकाण्यपि लब्धानि। वर्तमानसमये दयालुः सपत्नीकः ऋषिकेशे गंगासेवनं स्वाध्यायं च कुरूते परिवारश्च पूर्वोक्तग्रामे एव तिष्ठति।



**रामेश्वर दयालुशर्मा**

व्याकरणाचार्य, साहित्याचार्य

एम.ए. (संस्कृत)

- प्रधानाचार्य-दुग्धेश्वर संस्कृत महाविद्यालय, पीलीभीत (उ.प्र.)
- प्राध्यापक—(साहित्य) बाबा काली कमली संस्कृत महाविद्यालय, ऋषिकेश।
- शास्त्रचूड़ामणि—राष्ट्रीय-संस्कृत-संस्थान, नई दिल्ली।



**डॉ॰ शिवशङ्कर मिश्र**

**जन्मस्थान** : चित्रकूट (उ॰प्र॰)

**जन्मतिथि** : 10.2.1976

**पिता** : श्री शिवदत्त मिश्र

**माता** : स्व॰ श्रीमती ऊषा मिश्रा

**शिक्षा** : श्री सच्चा अध्यात्म सं॰म॰वि॰, प्रयाग, सम्पूर्णानन्द संस्कृत विश्वविद्यालय,वाराणसी।

**उपाधियाँ** : नव्यन्यायाचार्य (वाराणसी)
तु॰ दर्शनाचार्य (वाराणसी)
एम॰ए॰ (दर्शन) गढ़वाल, श्रीनगर।

**शैक्षणिक सेवाएँ :**

1. व्याख्याता, राजकीय स्ना॰ महाविद्यालय, दुद्धी, सोनभद्र (उ॰प्र॰)
2. व्याख्याता (संस्कृत) राजकीय स्ना॰ महाविद्यालय, ऋषिकेष।
3. वरिष्ठ व्याख्याता (सर्वदर्शन) श्री लालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, नई दिल्ली।
4. उपकुलसचिव, उत्तराञ्चल संस्कृत विश्वविद्यालय, हरिद्वार।
5. वरिष्ठ व्याख्याता (संस्कृत) राजकीय स्ना॰ महाविद्यालय, कोटद्वार, पौढ़ी गढ़वाल, उत्तराखण्ड

